वाराणसीस्थ सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन
'विद्यावारिधिः' इत्युपाधिप्रदानेन सम्मानितोऽयं शोधप्रबन्धः

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# छान्दोग्योपनिषद्भाष्यम्

## श्रीव्यासतीर्थविरचितटीकासमेता




सम्पादकः डा. कृष्णाचार्य उपाध्यायः

निर्देशकः, विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः



प्रकाशकः - विद्याधीश स्नातकोत्तर संस्कृत शोधकेन्द्रः

कर्नाटकसंस्कृतविश्वविद्यालयेन मानितः

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# छान्दोग्योपनिषद्भाष्यम्

श्रीव्यासतीर्थविरचितटीकासमेता

*वाराणासीस्थ सम्पूर्णानिन्दसंस्कृतविश्वविद्यालयेन*
*'विद्यावारिधिः' इत्युपाधिप्रदानेन सम्मानितोऽयं शोधप्रबन्धः*

*Edited by*
**Dr. Krishnacharya Upadhyaya,** M.A.,Ph.D.
Deputy Director, Vidyadheesha Shodha Kendra

***This Volume is published with the grant from the Govt. of Karnataka***



*Published by*
**Vidyadhisha Post-Graduate Sanskrit Research Centre**, Bangalore-4.



॥ श्रीशः शरणम् ॥ श्रीगुरुभ्यो नमः ॥

॥ पुण्डरीकाक्षं स्तवैरर्चेत् ॥

# अनुग्रहसन्देशः

अनन्तगुणपूर्णस्य दोषगन्धविधुरस्य नस्तो मुखादपि निरन्तरमशेषविद्या उद्गिरतोऽति भक्तिभरावनम्रैरब्जभवेशमुख्यैः संसेव्यमानस्य लक्ष्म्यामृतेन सततं परिषिच्यमानस्य शशिबिम्बसंस्थस्य चन्द्रावदातस्यामृतात्मकरैः समन्तादण्डान्तरं बहिरपि प्रतिभासयतश्शङ्खाक्षपुस्तकसुबोधयुताब्जबाहोस्तुरङ्गवदनस्य वदनरङ्गादाविर्भूता रङ्गार्धाङ्गिन्यन्तरङ्गसङ्गा छन्दउत्तमाङ्गभूता वैराग्यवैराग्यसौभाग्योपकारिणी छान्दोग्योपनिषत् रराजतेतमाम् । तस्याश्च सर्वज्ञशिखामणिजीवमणिभारतीरमणिप्राणिनायकस्य तृतीयावतारभूतैः श्रीमदानन्दतीर्थभगवत्पादैर्विरचितं दिव्यं भव्यं स्तव्यं भाष्यं समुज्जृम्भतेतमाम् । परमटीकं तद्भाष्यं प्राकाश्यं नाटीकत इति टीकाकृच्चरणशरणा व्यासतीर्थश्रीमच्चरणाः टीकामपूर्वां शर्वादिसुपर्वभूसुपर्वाखर्वानन्दपर्वदायिनीं व्यररचन् । तामिमां टीकां श्रीमद्व्यासतीर्थविरचितां नानापाददटिप्पण्युपचितां कृत्वा जिज्ञास्वपचितामध्ययनमिषेण विधातुकामाः कृष्णाचार्याः उपाध्यायोपाह्वयाः उपाध्यायाः उपाकृतस्वाध्यायाश्च महता परिश्रमेण संशोध्य सम्पाद्य सम्पद्यनासक्ता सपद्याविष्कुर्वन्तः सन्ति ।

महदिदं प्रमोदस्थानं यत् प्रमोदतीर्थजन्मशतमानोत्सवस्थाने विद्याधीशस्नातकोत्तरसंस्कृतशोधसंस्थया प्राकाश्यमिदं नीयत इति । तानिमान् पण्डितान् कृष्णाचार्यान् अस्मदुपास्याः श्रीमूलसीतासमेतश्रीमूलरामदिग्विजयरामवेदव्यासाः ज्ञप्तिभक्तिविरक्तिप्रदानेन समनुगृह्णन्त्विति सम्प्रार्थयामहे ।

श्रीमत्सत्यात्मतीर्थाः

महीशूरपुरम्

श्रीमत्सत्यात्मतीर्थ श्रीपादङ्गळवरु उत्तरादिमठ

# आशीर्वचनम्

परमपुरुषो ह्यौपनिषदः । उपनिषदां उपनिषत्त्वमपि अत एव । एवं हि उपनिषन्निर्वक्ति । उप भगवत्समीपे निषीदति स्वयं सदा तत्प्रतिपादिका इति । अथ उप निषादयति अध्येतॄन् इति । अथ च उप निषादयति सर्वान् शब्दान् इति । भगवत्प्रतिपादकत्वं, अध्येतॄणां भगवत्प्रापकत्वं, सर्वशब्दानां भगवत्परत्वप्रतिपादनम् इत्येवमादि हि उपनिषत्स्वरूपम् । एवं हि तस्योपव्याख्यानम् इति छान्दोग्यमन्त्रार्थः उपवर्णित आचार्यपादैः ।

अनेकासु च उपनिषत्सु अन्यतमा इयं छान्दोग्यापनिषत् । या च अद्वैतिनां अनल्पमुपकरोतीव आभात्यापाततः तत्वमस्यादिप्रकरणैः । नाल्पमप्युपकरोति । अपकरोत्यनल्पमेवेत्यनल्पमतिराचार्यः अज्ञानतल्पानल्पान्नः आकल्पयितुमाकलयामास क्लृप्तान् काललुप्तान् प्रमाणपुञ्जान् भाष्यरूपेण ।

सेयं सभाष्योपनिषत् व्याख्याता बहुभिरपि अर्वाचीनैः प्राचीनैश्च । तत्र प्राचीनतमेयं टीका श्रीजयार्यशिष्यैः श्रीव्यासतीर्थश्रीचरणैः रचिता मन्दानां अमन्दानां चोपकारिणी अर्थाधिगमे ।

सेयं अमुद्रितपूर्वा अस्मत्प्रियशिष्यश्रीकृष्णाचार्योपज्ञमेव शोधप्रबन्धरूपेण प्रकाश्यते इति अस्माकं प्रमोदप्रकाशः प्रमोदतीर्थे शतमानप्रकाशे ।

इयं च त्रिवेणी सङ्गच्छते कृष्णाचार्ये अध्ययनं, अध्यापनं संशोधनं चेति । विदितमेवास्य कार्यं पण्डितमण्डल्या इति नात्र प्रत्यग्रं वक्तव्यमस्ति ।

तमिमं कृष्णाचार्यं ज्ञानभक्त्याद्यभिवृध्या अतिशयितशास्त्रसंरक्षणदीक्षया आयुरारोग्यदिना च योजयन्तु इति हरिगुरवः प्रार्थ्यन्ते ।

गुत्तलरङ्गाचार्याः
कुलपतयः
जयतीर्थविद्यापीठम्, वेङ्गळूरु.

# Preface

Chāndogya Upaniṣad belongs to the Sāmaveda. Lord Hari is the deity. Lord Hayagrīva and Ramādevi are Riṣis. This Upaniṣad is in prose.

Among the ten principal Upaniṣads this Upaniṣad occupies an important place. The two important doctrines of Supremacy of Lord Hari (Harisarvottamatva) and superiority of Mukhyaprāṇa among Jīvās (Vāyu Jīvottamatva) are fully discussed here.

A number of Vidyās and Upāsanās such as Udgīthopāsanā, Sāmopāsanā, Gāyatri nāmopāsanā, Madhuvidyā, Samvargavidyā, Prāṇavidyā, Daharavidyā, Puruṣayajña etc., are described here. Jīva Īśvara bheda is especially discussed in the sixth chapter in the famous passage i.e., 'Tat Tvam asi'. The hierarchy of deities (devatātāratamya) is pointed out in the seventh chapter.

Another interesting feature of this Upaniṣad is, the narrating of background episodes and the discussion of the doctrines in the dialogue form. Episodes like those of Jānaśruti, Satyakāma, Śvetaketu and Indra-Virochana make the discussion lively and interesting Beautiful similies and illustrations are another feature.

Ethics and eschatology constitute another important aspect. Thus this Upaniṣad is very rich both in its thought, content and style. The nature of the supreme God as well as the Upāsanās to attain him is given here. The important role of Mukhyaprāṇa in helping the souls to attain the liberation is especially brought out.

A number of adhikaraṇas of Brahmasūtras are based on the passages selected from this Upaniṣad.

The Chāndogya Upaniṣad is rich both in its philosophical content and the theological content. It begins with Udgīthopāsana. Udgītha is one of the five sāmans. The Supreme God conveyed by 'Om,' has to be meditated upon as present in Udgitha. The first five chapters of Chāndogya describe a number of Upāsanas viz., Sāmopāsana, Madhuvidyā, Samvargavidyā, Prāṇavidyā, Pañchāgnividyā and Vaiṣvānara Vidyā.

The meaning and the significance of Gāyatri are explained. The whole of a person's life is conceived as a sacrifice i.e., Puruṣayajña.

The importance of Mukhyaprāṇa is explained more than once.

The episodes of Satyakāma Jābāla, Upakosala and Jānaśruti occur in these chapters. The ethical virtues like Truthfulness, non-violence, alms-giving, asceticism are recommended. Chāndogya mentions the five great sins viz., Brahmahatyā, Surapāna etc., and exhorts to avoid these.

The passage 'sarvam khalu, idam brahma tajjalān iti sānta upāsita' has a reference to 'nāsadiya hymn' of Ṛgveda and brings out the central point made in that hymn viz., the Supreme God alone functions in praḷaya water. It further brings out his two characteristics viz., he is all-pervasive (idam) and has all attributes (sarvam). Thus, this passage informs us that the Supreme God is

all-pervasive and possesses all attributes. He alone functions in pra|aya water during pra|aya.

The 6th, 7th and 8th chapters of Chāndogya are philosophically rich. The sixth chapters contains the famous passage 'atat tvam asi' is the heart of Chāndogya. This phrase does not talk of the identity between Brahman and Jīva. It actually mentions their difference, and mentions the fact that the Jīva is entirely dependent upon him and similar to him (atat, tadadhina, tatsadriṣa.) The nine illustrations given in this context make it clear.

The 'ekavijñānena sarvavijñāna' postulation and the three illustrations given in that context also donot support brahmapariṇāmavāda or brahmavivartavāda, and do not support Jīva-Brahma identity. A perusal of the translation and notes of the relevant passages given in this volume will give the reader the correct import of these passages according to Śrī Madhvāchārya's Bhāṣya. To go into the full details of the interpretational niceties is outside the scope of this brief introduction.

The seventh chapter discusses Bhumopāsana and the eighth chapter discusses Daharavidyā. The episodes of Sanatkumāra and Nārada, Indra and Virochana occur in these chapters.

Two passages in these viz., (i) Yā esha samprasādo param jyotirūpasampadya etc., (ii) Aṣarīram vāva santam priyāpriye na spriśath, have rich philosophical implications. The first passage informs us that the liberated Jīva attains the most luminous Supreme God. He does not become

identical with him but attains him. The second passage informs us that the pleasure and pain affect only so long as there is a body. The liberated casts off the body. Therefore, he is not affected by the prākṛta pleasure and pain. God is never affected by these. The liberated enjoys the aprākṛta bliss. The above brief sketch of the contents of Chāndogya will give an idea of the philosophical richness of Chāndogya. I hope this will induce the readers to go through the entire Upanishad.

I offer my Shirasashtanga Pranamas to his holiness Sri 1008 Sri Satyatmateertha Swamiji for his Anugraha sandesha.

Dr. Krishnacharya Upadhyaya has undertaken the editing work of Chāndogya Bhaṣya tīkā of Vyāsateertha under my guidance and also under supervision of Prof. Jayaprakash Narayan Tripati, Vedānta Faculty, Sampoornananda Samskrit Vishwavidhyalaya, Varanasi.

The research has consulted four manuscripts in editing this valuable work critically. I record my appreciation to Dr. Krishnacharya Upadhyaya, Dy.Director, Vidyadhisha Samskrita Shodha Kendra, Bangalore, in editing this work. It is hoped that this will be received with due appreciation. It is also hoped that the present edition will be useful to the traditional scholars, modern scholars and advance level research students.

We also thank M/s. Vagartha for neat printing.

**Prof. K.T. Pandurangi**
Chairman and Hon. Director
Dvaita Vedanta Studies and Research Foundation.

# कृतज्ञतासमर्पणम्

"आब्रह्मस्तम्बपर्यन्तम् कार्तज्ञ्यं विनिवेदयेत्" इति सूक्तिः, नरं कार्यान्ते कार्तज्ञ्यसमर्पणे जागरयति । अतोऽहमत्र, ये परोक्षतोऽपरक्षतश्च साहाय्यं व्यधिषत तेभ्यः सर्वेभ्योऽपि कार्तज्ञ्यं समर्पयितुमिच्छामि ।

तत्रादौ यश्च कल्याणगुणनिधिः ब्रह्मसूत्रकृद्वेदव्यासावतारः भगवान् मत्कुलदैवं श्रीनिवासः मयि स्थित्वा मतिमस्मिन् महति कर्मणि प्रेरयित्वा अत्यायाससाध्यमिदं कार्यम् अनायासमकारयत्, "तस्मै श्रीहरये नमः" ।

यश्च सूत्रकाराभिप्रायं सज्जनेभ्यस्स्पष्टं चिकीर्षुः द्वैतवेदान्तप्रतिष्ठापनाचार्य इति बिरुदाङ्कितः सर्वचेष्टाप्रदः श्रीमुख्यप्राणः श्रीमन्मध्वाचार्यत्वेनावततार "तस्मै श्रीमुख्यप्राणाय नमः" ।

ये च महानुभावाः विरक्तशिखामणयः टीकाकृतः इति बिरुदं सार्थकयन्तः श्रीजयतीर्थश्रीमच्चरणाः वेदान्तवाङ्मयं सार्थकग्रन्थाऽभावेन रिक्तमिवाभासमानं स्वलेखनीव्यापारेण पर्यपूरयन् । "तान् श्रीजयार्यान् नुमः" ।

ये च महानुभावाः अधिष्ठितोत्तरादिमठपीठाः अप्रतिहतं पञ्चाशद्वर्षपर्यन्तं समर्चितश्रीमन्मूलरामचरणाः श्रीमत्सत्यप्रमोदतीर्थश्रीमच्चरणाः यैरहं अधिगत-गायत्रीविद्यः "नमस्तेभ्यो रामार्चनपर शतार्धाब्दभजक" ।

येच व्यासत्रयाब्धौ सलीलं कृतावगाहाः तरुणतपस्विनः वैराग्यतेजसा अरुणमपि तृणं कुर्वाणाः सदाचरणैकदीक्षाः श्रीमन्तः श्री १००८ श्रीमत्सत्यात्मतीर्थश्रीमच्चरणाः कर्मण्यस्मिन् समुद्योगिनं मामालक्ष्य विषय-बोधनपूर्वकं कृत्यमिदं मत्साध्यमातेनिरे । मार्गदर्शनपूर्वकं महदनुग्रहं च चक्रिरे, "श्रये सत्यात्मश्रीचरणचरणं चारुचरणम्" ।

"न च तद्वन्दनं प्राहुः विना चेत् गुरुवन्दनं" इत्युक्तयानुगुण्याय, जयतीर्थविद्यापीठस्य कुलपतयः सुधाविशारदाः सर्वदान्तेवासिभ्यः

सुधान्यायामृतादिग्रन्थानामाकूतप्रकटनपुरस्सरं सच्छास्त्रपाठप्रवचनेषु रताः, तथा मम आबाल्यं सुधान्तं वेदान्तं उपदिश्य भगवन्मार्गोपदेशकाः श्रीगुत्तलाचार्याः नात्र कथंचिदपि विस्मरणीयाः । ये च सुललितं विषयोपपादनेन शोधेऽस्मिन् सार्थकश्रमं मां चक्रिरे "तेभ्योऽपि कुर्वे नमः" साधनशरीरमिदं प्रदाय श्रीमदाचार्यमते रुचिमन्तं मां विधाय सदा मद्हृदि विलसतः सदा श्रीपादचरणासक्तान् मे तातपादान् "श्री प्रह्लादाचार्य उपाध्यायान्" शिलातनयोऽहं सभक्ति नमस्कुर्वे ।

उपनवतिवयस्यपि तरुणजनासाधारणं उत्साहं वहतां अस्मिन् शोधकर्मणि मार्गदर्शकानां, प्रबन्धमिमं आमूलाग्रं परिशील्य तत्र योग्यसूचनाप्रदानद्वारा उपकृतवतां संस्कृतवाङ्मयक्षेत्रे भीष्मसदृशानां, विद्वन्मान्यानां, बहुसङ्ख्यकवेदान्तग्रन्थसम्पादकानां, द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानस्य गौरवनिदेशकानां तथा गौरवाध्यक्षाणां, महामहोपाध्यायेत्यादिबिरुदाङ्कितानां, आचार्याणां प्रो. के.टि. पाण्डुरङ्गिमहाभागानां सविधे अनेकान् नमस्कारान् निवेदयामि ।

अस्मिन् शोधकर्मणि मार्गदर्शका भूत्वा, शोधप्रबन्धमिमम् आमूलाग्रं परिशील्य तत्र तत्र योग्यसूचनानि दत्तवद्भ्यः वाराणसीस्थसम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य वेदान्तविभागाध्यक्षेभ्यः विद्वज्जनादरं प्राप्तवद्भ्यः, आचार्येभ्यः मान्येभ्यः श्रीजयप्रकाशनारायण त्रिपाठी महाभागेभ्यः सादरं कृतज्ञतापूर्वकं वन्दनानि निवेदयामि ।

एवं संपूर्णानन्दविश्वविद्यालये संप्रति संशोधनसंस्थायाः निदेशकस्थाने राजमानेभ्यः, न्यायादिविविधशास्त्रेषु कृतभूरिपरिश्रमेभ्यः विविधबिरुदावलीसंवृतेभ्यः तारुण्येपि ज्ञानवार्धक्यं उपगतेभ्यः श्री राजारामशुक्लमहोदयेभ्यः अहं मनसा कार्तज्ञ्यमावेदयामि ।

मातृकां दत्वा उपकृतवद्भ्यः मान्येभ्यः राष्ट्रपति प्रशस्ति भाजनेभ्यः डा।। व्यासनकेरे प्रभञ्जनाचार्येभ्यः नमांसि आवेदयामि ।

अस्मिन् शोधकर्मणि बहुविधसाहाय्यं विहितवद्भ्यः मम मित्रवर्येभ्यः पं. डा. सत्यध्यानाचार्य कट्टी महाभागेभ्यः विद्वद्भ्यः गुत्तलविद्याधीशाचार्य महोदयेभ्यः तथैव प्राध्यापकेभ्यः रमाकान्तजोशी महोदेभ्यः प्रणामानि सूचयामि ।

प्रबन्धमिमं सश्रद्धं अल्पीयसि काल एव सुष्ठु सङ्गणितवते मम प्रियाय फणिने धन्यवादान् वितरामि ।

पुनरप्येवं शोधकर्मण्यस्मिन् परोक्षतः अपरोक्षतश्च ये माम् उपाकार्षुः तानहमत्र सद्भावनया संस्मरामि ।

इति

भवदीयः बुधजनविधेयः

**डा. कृष्णाचार्य उपाध्यायः**

*उपनिदेशकः*

**विद्याधीशस्नातकोत्तरसंस्कृतशोधकेन्द्रः**, बेङ्गळूरु

# विषयानुक्रमणिका

## भूमिका

# छान्दोग्योपनिषत्-भाष्य-व्यासतीर्थीय-टीका

## अथ प्रथमाध्याये प्रथमः खण्डः

अथ द्वादशः खण्डः



अथ त्रयोदशः खण्डः



अथ खण्डषट्कम्



द्वितीयाऽध्याये एकविंशः खण्डः



अथ द्वाविंशः खण्डः



अथ त्रयोविंशः खण्डः



अथ चतुर्विंशः खण्डः

## अथ तृतीयाऽध्यायः

### अथ प्रथमः खण्डः



### अथ द्वितीयः खण्डः



### अथ तृतीयः खण्डः



### अथ चतुर्थः खण्डः



### अथ पञ्चमः खण्डः



### अथ षष्ठः खण्डः



### अथ सप्तमः खण्डः



### अथ अष्टमः खण्डः



### अथ नवमः खण्डः

अथ दशमः खण्डः



अथ एकादशः खण्डः



अथ द्वादशः खण्डः



अथ त्रयोदशः खण्डः



अथ चतुर्दशः खण्डः

अथ दशमः खण्डः



अथ एकादशः खण्डः



अथ द्वादशः खण्डः



अथ त्रयोदशः खण्डः



अथ चतुर्दशः खण्डः

अथ द्वितीयः खण्डः



अथ तृतीयः खण्डः



अथ चतुर्थः खण्डः



चतुर्थाऽध्याये खण्डपञ्चकम्



अथ दशमः खण्डः



अथ एकादशः खण्डः



अथ द्वादशः खण्डः



अथ त्रयोदशः खण्डाः



अथ चतुर्दशः खण्डः

अथ पञ्चदशः खण्डः

अथ तृतीयः खण्डः



अथ चतुर्थः खण्डः



अथ पञ्चमः खण्डः



अथ षष्ठः खण्डः



अथ सप्तमः खण्डः



अथ अष्टमः खण्डः



अथ नवमः खण्डः



अथ दशमः खण्डः



अथ एकादशः खण्डः



अथ द्वादशः खण्डः

## अनुबन्धाः





# भूमिका

## वेदः

संस्कृतसाहित्ये वेदानां स्थानं सर्वोपरि वर्तते । भारते धर्मव्यवस्था वेदायत्तैव । वेदो धर्मनिरूपणे स्वतन्त्रभावेन प्रमाणम्, स्मृत्यादयस्तु तन्मूलकतया । श्रुतिस्मृत्योर्विरोधे श्रुतिरेव गरीयसी । न केवलं धर्ममूलतयैव वेदाः समादृताः, अपि तु विश्वस्मिन् सर्वप्राचीनग्रन्थतयाऽपि । प्राचीनानि धर्मसमाज–व्यवहारप्रभृतीनि वस्तुजातानि बोधयितुं श्रुतय एव क्षमन्ते ।

प्रधानतया वेदो द्विविधः मन्त्ररूपो ब्राह्मणरूपश्च । मन्त्रसमुदाय एव संहिताशब्देन व्यवहृतः । ब्राह्मणरूपो वेदभागस्तु संहिताभागस्य व्याख्यारूप एव । स चायं ब्राह्मणभागो यागस्वरूपबोधकतया प्रथितः । ब्राह्मण ग्रन्थोऽपि त्रिधा विभक्तो भवति–ब्राह्मणम्, आरण्यकम्, उपनिषदश्च । यज्ञस्वरूपप्रतिपादको ब्राह्मणभागः । अरण्ये पठिताः यज्ञस्याध्यात्मिकं रूपं विवेचयन्तो वेदभागा आरण्यकानि । उपनिषदो ब्रह्मबोधिकाः मोक्षसाधनानि, अयमेव भागो वेदस्यान्तरूपतया वेदान्त इत्युच्यते । ब्राह्मणभागो गृहस्थानामुपयोगी, आरण्यकभागो वानप्रस्थमाश्रितानाम्, उपनिषद्भागश्च सन्यस्तानामुपयोगीत्यपि कथयितुं शक्यते । नकेवलं सन्यासिनां किन्तु सर्वेषां साधकानामपि उपयोगी ।

## वेदशब्दार्थः

वेद्यन्ते धर्मादयः पुरुषार्था यैस्ते वेदाः, इति बह्वृचप्रातिशाख्यम् । सायणस्तु अपौरुषेयं वाक्यं वेद इत्याह । इष्टप्राप्त्यनिष्टपरिहारयोर-

लौकिकमुपायं यो वेदयति स वेद इति भाष्यभूमिकायामुक्तम् । तत्र प्रमाणमपि तत्रैवोक्तम्–

**'प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते ।**
**एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता ॥'**

आम्नायः, आगमः, श्रुतिः वेदः, इति सर्वे शब्दाः पर्यायाः ।

यथोक्तं'वेदास्ते नित्यविन्नत्वात् श्रुतयश्चाखिलैः श्रुतेः । आम्नायोऽनन्यथापाठात्' इति । नित्यं विद्यमानत्वात् नाम नित्यत्वात् वेदाः इति कथ्यन्ते । अनादिकालादारभ्य सर्वैः पुरुषैः श्रुता एव । न तु कृताः । अतः श्रुतय इत्यच्यन्ते । एकयैवरीत्या निरन्तरं आम्नात्वात् पठिततत्वात् आम्नाय इत्युच्यन्ते । ''पान्ति शंसाधनाश्चेति वेदाः पशव ईरिताः'' इत्युक्तेः परतत्वस्य ज्ञानमापाद्य निरन्तरं पालनात् सुखसाधनत्वाच्च वेदाः पशवः इतीर्यन्ते ।

सोऽयं वेदस्त्रयीति पदेनापि व्यवह्रियते, वेदरचनायास्त्रिप्रकारकत्वेन त्रयीति कथ्यते । या खलु रचना पद्यमयी सा ऋक्, या गद्यमयी सा यजुः, या पुनः समग्रा गानमयी रचना सा सामेति कथ्यते, तदुक्तं जैमिनिना–

'तेषामृग् यत्रार्थवशेन पादव्यवस्था । गीतिषु सामाख्या । शेषे यजुः शब्दः' इति । द्वितीयाध्याये प्रथमपादे ३२–३३–३४ सूत्राणि ।

यास्कस्तु– 'ता ऋचः परोक्षकृताः प्रत्यक्षकृताः आध्यात्मिक्यश्चेति भेदात् त्रिविधाः । ऋक्शब्दोऽत्र मन्त्रवचनः । यासु प्रथमपुरुषक्रियास्ताः परोक्षकृताः, यासु मध्यमपुरुषक्रियास्ताः प्रत्यक्षकृताः यासु चोत्तमपुरुषक्रियास्ता आध्यात्मिक्यः' इति ।

अतः यत्र कुत्रापि प्राचीनग्रन्थे वेदार्थे 'त्रयी'ति पदं प्रयुक्तं तत्र सर्वत्र रचनात्रैविध्यं मनसि कृतं बोध्यम् ।

यत्तु केचन 'ऋग्यजुः सामाख्यास्त्रय एव वेदाः पूर्वमासन्, तद्यथा–'

**'अग्नेर्ऋचो वायोर्यजूंषि सामादित्यात् ।' छा.ब्रा.६.१७**

**'अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् ।'**
**दुदोह यज्ञसिध्यर्थमृग्यजुःसामलक्षणम् ॥ मनु.१.१३**

अतो वेदानां त्रित्वादेव तत्र त्रयीति व्यवहारो वास्तवो न प्रकारभेदकृतः' इति तदयुक्तम्, ऋग्वेदेऽपि अथर्ववेदनामोल्लेखदर्शनात् । भगवता पतञ्जलिनाऽपि 'चत्वारो वेदाः साङ्गाः सरहस्याः' इति पस्पशाह्निके स्पष्टमुक्तम् । छान्दोग्यब्राह्मणे मनुस्मृतौ च यज्ञोपयोगिनो वेदा एव परामृष्टाः, नाभिचारिकः सामवेद इति त्रित्वमेवोक्तम्, एवं परत्रापि। जैमिनिस्तु मन्त्राणां विप्रकारकतामेव लक्षितवान्, न वेदसङ्ख्यां व्यवस्थापितवान् । अतो वेदाश्चत्वार एव, त्रयीति व्यवहारस्तु प्रकारकृतः । अथर्ववेदीयमन्त्रा अपि पूर्वोक्तप्रकारत्रयान्यतमरूपा एवेति बोध्यम् ।

## ऋग्वेदः

ऋच्यते स्तूयते यया सा ऋक् । तादृशीनामृचां समूह एव ऋग्वेदः । यत्रार्थवशेन पादव्यवस्था सा ऋगिति मीमांसकाः । स ऋग्वेदः सूक्तमण्डलभेदेन द्विधा विभक्तः । तत्र सूक्तं चतुर्विधम्– ऋषिसूक्तदेवतासूक्तच्छन्दःसूक्तार्थसूक्तभेदात् । एकर्षिदृष्टमन्त्राणां समूहो ऋषिसूक्तम् । एकदेवताकमन्त्राणां समूहो देवतासूक्तम् । समानच्छन्दसां मन्त्राणां समूहो नाम च्छन्दःसूक्तम् । यावदर्थसमाप्तानां मन्त्राणां समूहोऽर्थसूक्तम् । सुष्ठूक्तत्वात्सर्वं सूक्तमित्याख्यायते ।

ऋग्वेदः सोऽयं मण्डलानुवाकवर्गभेदेन अष्टकाध्यायसूक्तभेदेन च द्विधा। बालखिल्यसूक्तानि विहाय सम्पूर्णायामृग्वेदसंहितायां दशमण्डलानि, पञ्चाशीतिश्चानुवाकाः, अष्टोत्तरशतद्वयमिताश्च वर्गाः (इति प्रथमो भेदः)। अष्टौ अष्टकानि, चतुष्षष्टिरध्यायाः, सप्तदशोत्तरसहस्राणि च सूक्तानि (इति द्वितीयो भेदमार्गः)।

मन्त्राश्च सर्वे दशसहस्रचतुःशतसप्तषष्ठिमिताः (१०४६७) इति शाकलः, शौनकानुक्रमणी तु दशसहस्रपञ्चाशताशीतिमितान् (१०५८०) मन्त्रान् आह। अत्र भेदे कालभेदेन मन्त्रवृद्धिलोपावेव हेतुतयोन्नेयौ भवतः। शब्दसङ्ख्या– १५३८२६, अक्षरसङ्ख्या– ४३२०००। सर्वेऽपि मन्त्राः चतुर्दशसु छन्दस्सु विभक्ता बोध्याः।

ऋग्वेदगतमन्त्रद्रष्टारो ऋषयः गृत्समदविश्वामित्रवामदेवात्रिभरद्वाज-वसिष्ठादयः सन्ति।

ऋग्वेदस्य दशसु मण्डलेषु नवमं मण्डलं पवमानमण्डलनाम्ना प्रथितम्। तत्र हि सोमविषयकमन्त्राणां सङ्कलनं कृतम्। पवमानः–सोमः। पूर्वोक्ताः सप्तापि मन्त्रद्रष्टारो ऋषयो द्वितीयमण्डलतः सप्तमण्डलपर्यन्त-गताभिः ऋग्भिः सम्बद्धाः, दशममण्डले मन्त्रा नानर्षिसम्बद्धाः। दशमे मण्डले न केवलं देवतास्तुतय एव, अन्यप्रकारका अपि मन्त्र दृश्यन्ते।

द्वितीयमण्डलादारभ्य सप्तममण्डलपर्यन्तस्य ऋग्वेदभागस्य रचना सर्वतः प्राचीना, दशमं मण्डलं सर्वतोऽर्वाचीनम्, शेषाणि मध्यकालिकानीति साम्प्रतिका आलोचकाः कथयन्ति।

## यजुर्वेदः

यजूंषि गद्यानि । अध्वर्युणा यज्ञे उपयुज्यमाना मन्त्रा एवात्र यजुर्वेदे सङ्कलिताः, यज्ञस्य वास्तविकं विधानमध्वर्युरेव करोति, अतोऽयं यजुर्वेदो यज्ञविधेरतिसन्निकृष्टं सम्बन्धं रक्षति ।

यजुर्वेदो द्विप्रकारकः, कृष्णयजुः शुक्लयजुश्च ।

पौराणिकाः कथयन्ति–व्यासो वैशम्पायनाय वेदं प्रोवाच, स स्वशिष्याय याज्ञवल्क्याय । कुतोऽपि कारणाद् रुष्टो वैशम्पायनो याज्ञवल्क्यमुवाच–देहि मदधीतं वेदमिति । याज्ञवल्क्यो गुरुवचनपालनाय ततोऽधीतं वेदं सद्यो वान्तवान् । अन्ये वैशम्पायनशिष्यास्तित्तिरिरूपं धृत्वा याज्ञवल्क्येन वान्तं वेदं गृहीतवन्तः । स एवायं वान्तगृहीतो वेदः कृष्णयजुर्वेदः ।

वैशम्पायने कुपिते ततोऽधीतं वेदं विसृज्य याज्ञवल्क्यः पुनर्वेदाधिगतये सूर्यमाराधयामास, ततश्च वेदमाप, ततोऽयं वेदः शुक्लयजुर्वेदनाम्नाऽप्रथत । अनयोर्वेदयोर्महदन्तरम् ।

शुक्लयजुर्वेदे विनियोगवाक्यरहिताः केवला मन्त्रा विद्यन्ते, कृष्णयजुर्वेदे तु विनियोगवाक्यानि मन्त्राश्च । अतोऽमिश्रितरूपतया शुक्लयजुर्वेदः, मिश्रितरूपतया च कृष्णयजुर्वेद इति संज्ञा जातेत्यपि लोकाः कथयन्ति ।

सोऽयं यजुर्वेदः ४० अध्यायान्, ३०३ अनुवाकान्, १९७५ कण्डिका (मन्त्रान्), २९३२५ शब्दान्, ८८८७५ अक्षराणि च बिभर्त्ति । अस्य वेदस्य प्रथमेऽध्याये दर्शपौर्णमासौ, द्वितीये पिण्डपितृयज्ञः, तृतीयेऽग्निहोत्रं चातुर्मास्येष्टिः, चतुर्थाध्यायादष्टमाध्यायपर्यन्तमग्निष्टोमविधानं सोमयागः,

नवमे वाजपेयो राजसूयश्च, दशमे सौत्रामणिः, एकादशाध्याया-दष्टादशाध्यायपर्यन्तम् अग्निचयनम्, उखाभरणम्, चितयः, रुद्राहः शत-रुद्रियम्, वसोर्धारा, राष्ट्रभृच्च । एकोनविंशतितमाध्यायात् परिशिष्ट-मारभ्यते, विंशे एकविंशे च सोमसम्पादनविधिः, तदनु पञ्चविंशति-पर्यन्तमश्वमेधः ततः शेषे भागे पुरुषमेधसर्वमेधपितृमेधादिविवरणञ्च प्रपञ्चितम् । अन्तिमश्चाध्याय ईशावास्योपनिद्रूपः ।

शुक्लयजुर्वेदस्य संहितैव वाजसनेयिसंहिता कथ्यते । तादृशनामकरणे बीजं त्विदं कथ्यते यत् याज्ञवल्क्येनाराधितः सूर्यो वाजीभूत्वा तस्मै वेदं प्रोक्तवान् अतस्तदुक्ता संहिता वाजसनेयीसंहिता समाख्याता ।

शुक्लयजुर्वेदस्य माध्यन्दिनशाखा कण्वशाखा चेति द्वे शाखे । प्रथमा उत्तरभारते प्राप्यते, द्वितीया च महाराष्ट्रे । अनयोः शाखयोः संहिते भिन्ने सत्यावपि स्वल्पमेव भेदं धारयतः, बहुष्वंशेषु तुल्यता वर्त्तते ।

कृष्णयजुर्वेदस्य चतस्रः शाखा प्राप्यन्ते—

(क) तैत्तिरीयशाखा–इयं प्रधानशाखा, अत्र सप्तखण्डाः, ते च खण्डाः अष्टकशब्देन काण्डशब्देन च व्यवह्रियन्ते । प्रतिकाण्डं कतिपयेऽ-ध्याया, ये प्रपाठकनाम्ना ख्याताः । इमे प्रपाठका बहुष्वनुवाकेषु विभक्ताः सन्ति ।

(ख) मैत्रायणीसंहिता इमे द्वे अपि संहिते तैत्तिरीय–संहितामनुकुरुतः

(ग) काठकसंहिता केवलं क्रमे यत्र तत्र पार्थक्यं विद्यते ।

## सामवेदः

यज्ञे चत्वारो ऋत्विजो भवन्ति– १ होता, २ अध्वर्युः, ३ उद्गाता, ४ ब्रह्मा, होता–आह्वानकर्त्ता, स हि यज्ञावसरे प्रक्रान्तदेवतानां प्रशंसायां रचितान् मन्त्रान् उच्चरयन् देवता आह्वयति, तत्कार्याय सङ्कलिता मन्त्राः स्तुतिरूपतया ऋचः समाख्याताः, तेषां सङ्ग्रह एव ऋग्वेदः । अध्वर्युर्विधिवद्यज्ञं सम्पादयति, तत्रावश्यकमन्त्रा यजूंषि, तत्संग्रहो यजुर्वेदः उद्गाता–उच्चस्वरेण गानकर्त्ता, स हि स्वरबद्धान् मन्त्रानुच्चैर्गायति, तदपेक्षितमन्त्रसङ्ग्रहः सामवेदः । ब्रह्मा–यज्ञनिरीक्षकः कृताकृतावेक्षणकर्मा, स हि सर्वविधमन्त्रज्ञ; तदपेक्षितो मन्त्रराशिरथर्ववेद इति कथ्यते ।

सामवेदस्य गानप्रचुरता प्रथिता, ऋच एव गीयन्ते, सामवेदे १५४९ मन्त्रा सन्ति, तेषु, ७५ मन्त्रा ईदृशा ये 'ऋग्वेदे'न प्राप्यन्ते, शेषाः सर्वेऽप्युभयवेदसाधारणाः । सामवेदागतमन्त्राणां सप्त स्वराः, यतस्ते गीयन्ते, ऋग्वेदे पुनस्तेषामेव मन्त्राणां त्रय एव स्वराः एतावानेव उभयवेदसाधारणानां साममन्त्राणामृग्वेदमन्त्रेभ्यो भेदः ।

सामवेदो द्विधा विभज्यते–पूर्वार्चिकम्, उत्तरार्चिकं च । पूर्वार्चिकमेव छन्दः, छन्दसी, छन्दसिका चेति त्रिभिरपि नामभिरभिधीयते । विषयानुसारं पूर्वार्चिकं चतुर्षु भागेषु विभज्यते–आग्नेयपर्व (अग्निसम्बन्धिनीभिर्-ऋग्भिरुपेतम्), ऐन्द्रपर्व (इन्द्रसम्बन्धिनीभिर्ऋग्भिर्युतम्) पवमानपर्व (सोमविषयकम्), आरण्यकपर्व च ।

उत्तरार्चिकन्तु अनुष्ठाननिर्देशकम् । तस्य बहवो विभागाः–दशरात्रम्, संवत्सरम्, ऐकाहम्, अहीनम्, सत्रम्, प्रायश्चित्तम्, क्षुद्रश्चेति प्रमुखास्तत्र भेदाः ।

## अथर्ववेदः

अभिचारक्रियायाः प्राधान्येन प्रतिपादकोऽयं वेदः अथर्वनामकर्षिणा दृष्टत्वात् अथर्ववेद इत्युच्यते । अत्र वेदे २० काण्डानि, ७३१ सूक्तानि, २९८७ मन्त्रा विद्यन्ते । एषु मन्त्रेषु द्वादशशतमन्त्रा ऋग्वेदेऽपि दृश्यन्ते । विंशकाण्डे १५३ सूक्तानि सन्ति, तेषु द्वादशसूक्तानि अतिरिच्य शेषाणि सर्वाण्यपि ऋग्वेदस्य दशममण्डले समुपलभ्यन्ते ।

अथर्ववेदस्य नव शाखा आसन्, परं सम्प्रति शौनकपिप्पलादसमाख्ये द्वे एव शाखे प्राप्येते । प्रचलिता अथर्वसंहिता शौनकशाखान्तर्गता, पिप्पलादशाखासंहिताऽपि अनतिचिरेणैव मुद्रिता ।

## ब्राह्मणग्रन्थाः

वेदो द्विविधो मन्त्ररूपो ब्राह्मणरूपश्चेत्युक्तं तदयं ब्राह्मणभागोऽपि वेद एव । ब्रह्म वेदस्तद्व्याख्या ब्राह्मण इति केचित् । वेदशेषभूता इमे ब्राह्मणग्रन्था यज्ञानुष्ठानस्य विस्तृतं वर्णनं कुर्वन्ति । कतिचन कथा अपि ब्राह्मणेषु प्राप्यन्ते ।

प्रत्येकवेदशाखानुसारेण ब्राह्मणा आरण्यकग्रन्थाश्च भिन्नाः सन्ति, तत्र ब्राह्मणा यथा–

ऋग्वेदस्य ऐतरेयब्राह्मणं कौषीतकिब्राह्मणंचेति ब्राह्मणद्वयम् । अनयोरैतरेयब्राह्मणमति प्रथितम् । अत्र अष्टौ पञ्चिकाः, प्रतिपञ्चिकं पञ्चाध्याया इति मिलित्वा ४० अध्यायाः सन्ति । कौषीतकिब्राह्मणे केवलं त्रिंशदध्यायाः ।

सामवेदस्य बहवो ब्राह्मणभागाः सन्तिः येषु ताण्ड्यब्राह्मणं प्रसिद्धतरम् । अयं ग्रन्थः पञ्चविंशत्यध्यायशाली, अत एव पञ्चविंशब्राह्मणसंज्ञयाऽपि प्रसिध्यति ।

कृष्णयजुर्वेदस्य तैत्तिरीयब्राह्मणनामा ब्राह्मणभागो विद्यते । शुक्ल-यजुर्वेदस्य शतपथब्राह्मणं नितान्तप्रसिद्धम्, अत्र शतमध्याया विद्यन्ते ।

अथर्ववेदस्य गोपथब्राह्मणम् । अत्र खण्डद्वयमेव, प्रथमखण्डे पञ्चाध्यायाः, द्वितीये च षट् । ब्राह्मणग्रन्थेषु सर्वतो नवोऽयं ग्रन्थः कथ्यते ।

एवमेव ऋग्वेदस्य आरण्यकद्वयम्, ऐतरेयमारण्यकम् शाङ्खायनारण्यकञ्च ।

कृष्णयजुर्वेदस्य तैत्तिरीयमारण्यकम् ।

सामवेदस्य जैमिनीयशाखायाः जैमिनीयोपनिषद्ब्राह्मणमेव तलवकारा-राण्यकमिति नाम्ना प्रसिद्धम् । अस्मिन् साममन्त्राणां शोभना व्याख्या कृता । इयं सामवेदारण्यकसंहिता सत्यव्रतसामश्रमिणा १८७८ ई. वर्षे मुद्रयित्वा प्रकाशिता ।

## वेदानां रचनायाः कालः

प्राचीना भारतीया विद्वांसो वेदानपौरुषेयान् मन्यन्ते, तेषां मते वेदरचनाकालविचारो निरर्थको दुरर्थकश्च । पाश्चात्त्या विद्वांसो यथाबुद्धिवैभवं वेदरचनाकालं निर्धारयन्ति, पाश्चात्त्यविचारसरणिविदो भारतीया अपि तेनैव मार्गेण वेदकालं निर्णेतुं यतन्ते । अत्र तद्विषयका कतिचन विचाराः प्रस्तूयन्ते ।

१) मैक्समूलरमतम्

मैक्समूलमहोदयस्य मतेन ऋग्वेदस्य रचना ११५० ई.पू. समीपे जाता । बुद्धधर्मोदयात् प्रागेव च ब्राह्मणग्रन्था अपि व्यरच्यन्त । बुद्धेन ब्राह्मणग्रन्थेषु विवेचितानामेव यागविधीनां कद्वी आलोचना क्रियते स्म, अपि चोपनिषत्समर्थितं कतिपयतत्त्वजातमात्मसात् क्रियते स्म' अतो बुद्धात् पूर्वतना (५०० ई.पू.) एव ब्राह्मणोपनिषद्भागाः सम्भवन्ति । वैदिकसाहित्ये चत्वारि युगानि–छन्दोयुगम् मन्त्रयुगम्, ब्राह्मणयुगम्, सूत्रयुगञ्च । प्रत्येकयुगविकासे तेन वर्षशतद्वयं कालः कल्पितः, तदनु-सारेण बुद्धात् ६०० वर्षतः पूर्वं छन्दोयुगस्यास्तित्वं समयाति । अतः ऋग्वेदस्य रचना ११५० ई.पू. समायात् पश्चात्कालिकी न सम्भवतीति सम्प्रति ऋग्वेदस्य जातस्य ३२०० वर्षाणि जातानीति कथयितुं शक्यमिति तदाशयः ।

मैक्समूलरमहोदयेनायं कालः सम्भाव्यरूपेणोक्तो न तु निश्चयरूपेण, परं तदनुसारिणः पाश्चात्त्यास्तदीयैरेव तर्कैः कालममुं निश्चयरूपेण कथयितुं प्रवृत्ताः ।

२) डॉ अविनाशचन्द्रदासमतम्

अयं महानुभावः वेदे निर्दिष्टानि अनेकानि भूगर्भशास्त्रीयतत्त्वानि विशेषतः आर्यावर्त्ततश्चतुर्दिक्षु चतुःसमुद्रीस्थितिमाधारीकृत्य गणनाद्वारा वेदस्य समयं २५ सहस्रसंवत्सरपूर्वं मन्यते । इदमीयं मतम् 'ऋग्वेदिक इण्डिया' (Ṛgvedic India) नामके पुस्तके व्यक्ततयाऽनेन प्रतिपादितम् ।

### ३) वेदस्थितज्यौतिषतत्त्वाधारं मतम्

भारते षड् ऋतवो भवन्ति । अमी ऋतवः सूर्यसंक्रमणनिमित्तकाः । इदमपि प्रसिद्धं यत् प्राचीनकालादधुनापर्यन्तममी ऋतवः पश्चात्सर्पन्ति, अर्थात् पूर्वं यत्र नक्षत्रे यस्यर्त्तोरुदयो जायते स्म सम्प्रति स एवर्त्तुस्ततः पूर्ववर्तिनि नक्षत्रान्तरे उदितो भवति । पुराकाले वसन्तो वर्षादिरभवत्, अत एव तस्य प्रशस्ततया भगवद्विभूतिभाव उक्तो गीतायां– 'ऋतूनां कुसुमाकरः' इति । सम्प्रति वसन्तसम्पातः मीनसङ्क्रान्तिकालादारभते, मीनसङ्क्रान्तिश्च पूर्वभाद्रपदनक्षत्रस्य चतुर्थचरणे भवति । सेयं स्थितिर्नक्षत्राणां क्रमशः पश्चात्सर्पणेनोत्पन्ना । पूर्वं कदाचिद् वसन्तसम्पातः उतरभाद्रपदरेवती–अश्विनी–भरणी–कृत्तिका–मृगशिरःप्रभृतिषु नक्षत्रेष्वासीत्, ततः पश्चात्सर्पन्नयं वसन्तसम्पातः साम्प्रतिकीं स्थितिमनुप्रपन्नः ।

ज्योतिर्विदः सूर्यस्य संक्रमणवृतं २७ नक्षत्रेषु विभजन्ति, पूर्णसंक्रमणवृत्तम् ३६० अंशानामस्ति । तत् प्रत्येकं नक्षत्रम् ३६०/२७=१३ १/२ अंशानां चापं निर्माति । संक्रमणबिन्दुश्च ७२ वर्षेषु एकमंशं विहायापरमंशं प्रसर्पति । एवम् एकस्मान्नक्षत्रात् संक्रमणबिन्दुः परं नक्षत्रं याति, तत्र ७२ x १३ १/२=९७२ वर्षात्मकः कालो लगति । सम्प्रति वसन्तसम्पातः पूर्वभाद्रपदनक्षत्रस्य चतुर्थचरणे भवति, यदा चायं कृत्तिकानक्षत्रे भवति स्म ततो वर्त्तमानस्थितेः प्राप्तये ४ १/२ नक्षत्राणि लङ्घितानि, यदि एकत्र नक्षत्रे लङ्घनीय ९७२ वर्षात्मकलापेक्षा तदा ४ १/२ नक्षत्रातिक्रमे ९७२ x ४ १/२=४३७४ वर्षात्मकः कालोऽवश्यमपेक्षितः स्यात् । तदेवं वेदोक्तज्यौतिषतत्त्वानुसारेण वेदानां २५०० ई. पू. पूर्वकालिकता प्रतीता भवति ।

४) शङ्करबालकृष्णदीक्षितमतम्

वैदिकीषु संहिताषु नक्षत्रनिर्देशकानि बहूनि वर्णनानि प्राप्यन्ते । शतपथब्राह्मणे लिखितम्–

'एकं द्वे त्रीणि चत्वारि वा अन्यानि नक्षत्राणि, अथैता एव भूयिष्ठा यत् कृत्तिकास्तद् भूमानमेव एतदुपैति, तस्मात्कृत्तिकास्वादधीत । एताह वै प्राच्या दिशो न च्यवन्ते, सर्वाणि ह वा अन्यानि नक्षत्राणि प्राच्या दिशश्च्यवन्ते ।' (शतपथ.२.१.२)

एतेनेदमुक्तं भवति यत् शतपथब्राह्मणरचनाकाले कृत्तिका नियमेन प्राच्यामासन्, सम्प्रत्येताः कृत्तिकाः पूर्वदिग्बिन्दुतः ईषदुत्तरस्यां दिशि उदयं यान्ति । दीक्षितमहोदयस्य गणनया तादृशी ग्रहस्थितिः ३००० ई.पू. काले सम्भवति । अतः स एव शतपथस्य निर्माणकालः । तैत्तिरीयसंहिता शतपथात् प्राचीना, ऋग्वेदश्च तैत्तिरीयसंहिताया अपि प्राचीनः, ऋग्वेदः ३५०० ई.पू. काले प्रणीत इति सम्भवति । एवञ्च सम्प्रति ऋग्वेदः ५५०० वर्षप्राचीन इति निश्चीयते ।

५) बालगङ्गाधरतिलकमतम्

तिलकस्य मते वेदकाल इतोऽपि किञ्चित् प्राचीनः सिध्यति । तेन हि मृगशिरोनक्षत्रे वसन्तसम्पातस्य साधकानि बहूनि वेदवाक्यानि सङ्गृहीतानि । तैत्तिरीयसंहितायामुच्यते फाल्गुनी पूर्णिमा वर्षादिः । तिलकमतं इदमनुकूलं यतो यदि पूर्णचन्द्रः फल्गुन्यां तदा सूर्येण मृगशिरसि भवितव्यमेव, तदेव च वसन्तसम्पातो भावी ।

मृगशिरसि वसन्तसम्पातस्य कालः पूर्वोक्तकृत्तिकाकालात् प्रायः २००० वर्षपूर्वं सम्भवति, यतो मृगशिरसः कृत्तिकापर्यन्तं पश्चात् सर्पणे

सहस्रद्वयाब्दी अपेक्ष्यते । एकस्मान्नक्षत्रान्तरोपसर्पणे ९७० वर्षाणि लगन्तीति पूर्वमुक्तमेव । अतो येषु मन्त्रेषु मृगशिरसि वसन्तसम्पातस्योल्लेखो विद्यते ते मन्त्राः ४५०० ई.पू. समयतोऽर्वाचीना न सम्भवन्ति । तिलकेन मृगशिरसोऽपि पूर्वं पुनर्वसौ वसन्तसम्पातस्य बोधकानि वेदवचनानि प्राप्तानि, ततस्ततोऽपि पूर्वतनः कालो वेदमन्त्राणां साधयितुं शक्यते । सर्वमिदं विचार्य तिलकमहोदयेन वैदिककालश्चतुर्धा विभक्तः–

१. अदितिकालः–६००० ई.पूर्वतः ४००० पू. पर्यन्तम् । अत्र काले उपास्यदेवनामगुणमुख्यचरितादिबोधका गद्यपद्यमया मन्त्रा रचिताः ये यज्ञेषु प्रयुज्यन्ते स्म ।

२. मृगशिरःकालः–४००० ई.पूर्वतः २५०० ई.पू. पर्यन्तम् । अत्रैव महत्त्वशालिनि काले भूयांसो ऋग्वेदमन्त्रा व्यरच्यन्त ।

३. कृत्तिकाकालः–२५०० ई.पूर्वतः १४०० ई.पू. पर्यन्तम् । अस्मिन् काले शतपथब्राह्मणतैत्तिरीयसंहितयोः प्रणयनमजायत ।

४. अन्तिमः कालः– १४०० ई. पूर्वतः ५०० ई.पू. पर्यन्तम् । अत्र काले श्रौतसूत्रगृह्यसूत्रदर्शनसूत्रादीनामार्षग्रन्थानां रचना जाता । तानेव विरोद्धुं प्रतिक्रियारूपेण बौद्धधर्म उदितो बभूव ।

सम्प्रतिकानि शोधकार्यफलान्यपि तिलकमहोदयस्य मतं पुष्टं कुर्वन्ति । २९०७ ई.वर्षे 'डा.हूगो विकलर' महाशयेन वर्त्तमान टर्कीदिशे एकः शिलालेखोऽधिगतः । तेन शिलालेखेन ज्ञायते यत् पश्चिम–एशियावयवभूते तत्र टर्कीदिशे द्वयोः कयोश्चित् प्राचीनजात्योर्निवास आसीत् । तत्र एकस्या जातेर्नाम 'हित्तिति' इति अपरस्याश्च 'मितानि' इत्यासीत् । अनयोर्द्वयोरपि जात्यो राजानौ परस्परिककलहस्य निवारणाय सन्धिं

चक्रतुः । तत्र सन्धौ द्वावपि पक्षौ सन्धिसंरक्षकतया देवनामानि निर्दिष्टवन्तौ । तत्र 'मितानि' जातेर्देवेषु मित्रः वरुणः, इन्द्रः, नासत्यौ च निर्दिष्टाः । अमी देवा आर्याणामेव । अतः प्रतीयते यत् आर्या एव केचन तत्राप्यवसन् ।

अस्य शिलालेखस्य समयः १४०० ई.पू. विद्यते । आर्याः प्राग् आर्यावर्ते स्वधर्मं देवांश्च स्थिरयित्वैव क्वचन मता भवेयुः । अतः १४०० ई.पूर्वतः प्रागेव वैदिकसभ्यताया उदयो मन्तव्यः तदानींतनश्चैव वेदः सम्भवति । इत्थं वेदानां कालः २००० ई. पू. सिध्यति । अयं काल-निश्चयो तिलकस्य मतं सन्निकृष्टं करोति, अतोऽत्र वयमपि श्रद्धालवः। वस्तुतस्तु सर्वमपीदं सम्प्रत्यवधि न निर्णीतम्, केवलमाशास्यते यत् यदा कदाचिदपि जाते निश्चये वेदाः प्रोदीरितकालतोऽपि पूर्वकालिका एव सेत्स्यन्तीति ।

## वेदाङ्गानि

वेदस्य षड् अङ्गानि, यथोक्तं पाणिनिना स्वशिक्षायाम्–

**'छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।**
**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥**

**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।**
**तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥'**

(पा.शि.४१४२)

पतञ्जलिनाऽप्युक्तम्– 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' । (पस्पशाह्निके)

## १. शिक्षा

तच्छास्त्रं शिक्षा नाम येन वेदमन्त्राणामुच्चारणं शुद्धं सम्पाद्येत । वेदे स्वरस्य प्राधान्यं सर्वविदितम्, स्वरज्ञानं च शिक्षाऽऽयत्तम्, अत एवेदं शिक्षाशास्त्रं वेदाङ्गम् । शिक्षाशास्त्रप्रयोजनमुक्तं तैत्तिरीयोपनिषदारम्भे, यथा–

'अथ शिक्षां व्याख्यास्यामः– वर्णः, स्वरः, मात्रा, बलम्, साम, सन्तान इत्युक्तः शिक्षाऽध्यायः ।' तत्र वर्णोऽकारादिः, स्वर उदात्तादिः, मात्रा ह्रस्वादिः, बलं स्थानप्रयत्नौ, साम निषादादि, सन्तानो विकर्षणादिः । एतदवबोधनमेव शिक्षायाः प्रयोजनम् । सम्प्रति त्रिंशत्सङ्ख्याका शिक्षाग्रन्था उपलभ्यन्ते । तेषु याज्ञवल्क्यशिक्षा, वाशिष्ठी शिक्षा, कात्यायनी शिक्षा, पाराशरी शिक्षा, अमोघानन्दिनी शिक्षा, नारदीय शिक्षा, शौनकीयशिक्षा, गौतमीशिक्षा, माण्डूकीशिक्षा, पाणिनीया शिक्षा च मुख्याः । पाणिनीया शिक्षा तु सर्वतोऽधिकं प्रथते ।

वेदभेदेन शिक्षाभेदो भवति, यथा– याज्ञवल्क्यशिक्षा शुक्लयजुर्वेदस्य, नारदीयशिक्षा सामवेदस्येत्यादि ।

## २. छन्दः

मन्त्राणां छन्दोबद्धतया छन्दसां ज्ञानं विना वेदमन्त्राः साधु उच्चारयितुं न शक्यन्तेऽतश्छन्दोऽपि वेदाङ्गमवश्यज्ञेयञ्च ।

शौनकविरचिते ऋक्प्रातिशाख्ये चरमभागे छन्दसां पर्याप्तं विवेचनं विद्यते । अस्य छन्दश्शास्त्रस्य पिङ्गलच्छन्दः सूत्रनामा ग्रन्थः सर्वाधिकप्रसिद्धः । अयं केनचित् पिङ्गलनामकेनाचार्येण विरचितः । अत्र वैदिकानि लौकिकानि च छन्दांसि विवेचितानि ।

३. कल्पः

ब्राह्मणकाले यागस्य तावान् प्रचारो जातो यत्तेषां यथावज्ज्ञानाय पूर्णपरिचयप्रदायक ग्रन्थानामावश्यकताऽनुभूयते स्म, तामेवावश्यकतां स्वल्पैः शब्दैः पूरयितुं कल्पसूत्राणि विरचितानि ।

कल्पसूत्राणि द्विविधानि श्रौतसूत्राणि स्मार्त्तसूत्राणि च । श्रुत्युक्त-यागविधिप्रकाशकानि श्रौतसूत्राणि । स्मार्त्तसूत्राण्यपि द्विधा–गृह्यसूत्राणि धर्मसूत्राणि च ।

श्रौतसूत्रेषु अग्नित्रयाधानम्, अग्निहोत्रम्, दर्शपूर्णमासौ, पशुयागः, नानाविधाः सोमयागाश्चेति विषयाः समुपपादिताः ।

गृह्यसूत्रेषु तेषामनुष्ठानाचारयागानां वर्णनं विद्यते येषां सम्पादनं त्रैवर्णिकैरवश्यं कर्त्तव्यम् । षोडशसंस्काराणां विशिष्टं वर्णनमपि गृह्यसूत्रेषु कृतं बोध्यम् ।

धर्मसूत्रेषु धार्मिकनियमाः, प्रजानां राज्ञां च कर्त्तव्यचयाः, चत्वारो वर्णाः, चत्वार आश्रमाः, तेषां धर्माः पूर्णतया निरूपिताः । एतानि धर्मसूत्राण्येव स्मृतीनां जन्मनेऽकल्पन्त ।

शुल्बसूत्रमपि कल्पसूत्रमेव, तत् श्रौतसूत्रान्तर्गतम् । शुल्बं मापक्रिया । इदं सूत्रमेव भारतीयज्यामितिशास्त्रस्य प्रवर्त्तकम् । पाश्चात्त्यैः 'पिथागोरस'–प्रभृतिभिरिदं ज्यामिति शास्त्रं प्रणीतमिति ये कल्पयन्ति, ते शुल्बसूत्रं दृष्ट्वा दृढीकुर्वन्तु यदिदं ज्यामितिशास्त्रं भारतीयैः पाश्चात्त्यज्या-मिति शास्त्रोत्पत्तेर्बहुदिवसपूर्वमेव प्रकटीकृतमिति ।

कल्पसूत्राणि तत्तद्वेदसम्बन्धनिबन्धनभेदयुतानि । तत्र–

ऋग्वेदस्य कल्पसूत्रम्– आश्वालायनं शाङ्खायनञ्च । अनयोरुभयोरपि कल्पसूत्रयोः श्रौतसूत्रं गृह्यसूत्रं च सम्मिलितं विद्यते । शुक्लयजुर्वेदस्य कल्पसूत्रम्, कात्यायनश्रौतसूत्रम्, पारस्करगृह्यसूत्रम्, कात्यायनशुल्बसूत्रञ्च ।

कृष्णयजुर्वेदस्य कल्पसूत्रम्– बौधायनसूत्रम् आपस्तम्बसूत्रञ्च । अनयोः कल्पसूत्रयोः श्रौतगृह्यधर्मशुल्बसूत्राणि सर्वाण्यपि सन्तीति ग्रन्थाविमौ पूर्णरूपौ ।

सामवेदस्य कल्पसूत्रम्–लाट्यायनश्रौतसूत्रम्, द्राह्यायणञ्च । जैमिनीयशाखायाः श्रौतसूत्रं, जैमिनिगृह्यसूत्रम्, गोभिलगृह्यसूत्रम्, स्वादिरगृह्यसूत्रञ्च ।

सामवेदे एव आर्षेयकल्पस्यापि गणना भवति, अयमेव कल्पो मशककल्पसूत्रनाम्नाऽपि प्रथते । सूत्रमिदं लाट्यायनश्रौतसूत्रात्प्राचीनं मन्यते ।

अथर्ववेदस्य कल्पसूत्रम्–वेतानश्रौतसूत्रम्, कौशिकसूत्रञ्च । वैतानसूत्रं नातिप्राचीनम्, कौशिकसूत्रञ्चाभिचारक्रियावर्णनपरम् ।

## ४. निरुक्तम्

निरुच्यते निःशेषेणोपदिश्यते निर्वचनविधया तत्तदर्थबोधनाय पदजातं यत्र तन्निरुक्तम् । निर्वचनमुखेन पदानामर्थावगमो यद्यपि व्याकरणेनापि सिध्यति तथापि निरुक्तानुसारेणैव अर्था निर्वक्तव्या इति मुन्यनुशासनाद् व्याकरणसाध्यकतिपयकार्यविधायित्वाच्च शास्त्रमिदं पृथक् प्रणीतम् । तदुक्तं यास्केन– 'अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते । अर्थमप्रतियतो नात्यन्तं स्वरसंस्कारोद्देशः, तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकञ्च । नहि निरुक्तार्थावित् कश्चिन्मन्त्रं निर्वक्तुमर्हतीति वृद्धानुशासनम् । निरुक्तप्रक्रियानुरोधेनैव मन्त्रा निर्वक्तव्या नान्यथा ।'

अत्रेदमवगन्तव्यम्– शिक्षया वर्णोच्चारणप्रकारे व्याकरणेन च पद-साधुत्वे ज्ञाते मन्त्रघटकपदानामर्थज्ञानाकाङ्क्षायां मन्त्रघटकार्थज्ञानाय भगवता यास्केन निरुक्तं प्रणीतम् । तच्च निरुक्तं पञ्चविधम्–

**'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।**
**धातोस्तदर्थाभिनयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥'**

इति भर्तृहरिः ।

वेदागतकठिनशब्दसङ्ग्रहरूपो निघण्टुग्रन्थश्चिरादागच्छति स्म, तत्रैव यास्केन तद्व्याख्याभूतं निरुक्तं विरचितम् । निघण्टवो वेदा एव न वेदाङ्गानि, तद्व्याख्याभूतं यास्कप्रणीतम् । निरुक्तमेव वेदाङ्गमिति सम्प्रादायः ।

उपलभ्यमानो निरुक्तग्रन्थो यास्कस्य कृतिः । पाणिनेः प्राचीनोऽयं यास्कः ७०० ई.पू. कालिकः स्यादिति विदुषामभिप्रायः । यास्कात्प्रागपि बहवो निरुक्तकारा आसन् । येषु द्वादश यास्केन स्मृताः– 'औपमन्यवः, औदुम्बरायणः, वार्ष्यायणिः, गार्ग्यः, आग्रायणः, शाकपूणिः, और्णनाभः तैटीकः, गालवः, स्थौलोष्ठी, क्रौष्टुकः, कात्थक्यश्चेति ।'

अत्र यास्कनिरुक्ते चतुर्दशाध्यायाः । बहवस्तु द्वादशाध्यायात्मकमेवेदं शास्त्रम् अन्तिमौ द्वावध्यायौ तु केनचित् पश्चाद्योजितावित्याहुः ।

## ५. व्याकरणम्

भाषा लोकव्यवहारं चालयति, यदि भाषा न स्यात्, जगदिदमन्धे तमसि मज्जेत्, यथोक्तं दण्डिना–

**'इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम् ।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥**

भाषायाः शुद्धये व्याकरणापेक्षा भवत्येव । नहि व्याकरणज्ञानशून्यः साधून् शब्दान् प्रयोक्तुमीशः । वेदस्य रक्षार्थं व्याकरणाध्ययन-मत्यावश्यकम्, 'रक्षार्थं वेदानामध्येयं व्याकरणम्, लोपागमवर्णविकारज्ञो हि पुरुषः सम्यग् वेदान् परिपालयिष्यति' इति पतञ्जलिः । वेदरक्षा-क्षमतयैव व्याकरणस्य वेदाङ्गत्वमपि समर्थ्यते । व्याकरणस्य सर्वाणि प्रयोजनान्युक्तानि महाभाष्ये, 'रक्षोहागमलध्वसन्देहाः प्रयोजनम्' । रक्षार्थं वेदानामध्येयं व्याकरणम् । ऊहः खल्वपि, न सर्वलिङ्गैर्न सर्वाभि-र्विभक्तिभिर्वेदे मन्त्रा निगदिताः, ते चावश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः, तान्नावैयाकरणः शक्नोति यथायथं विपरिणमयितुम् । तस्मादध्येयं व्याकरणम् । एवमन्यान्यपि प्रयोजनानि व्याख्यातानि भाष्ये ।

पाणिनेरष्टाध्यायी, कात्यायनस्य वार्तिकं भाष्यकृतो भाष्यञ्चेति त्रिमुनिव्याकरणं प्रसिद्धम् । व्याकरणान्यष्टौ–

**'प्रथमं प्रोच्यते ब्राह्मं द्वितीयमैन्द्रमुच्यते ।**
**याम्यं प्रोक्तं ततो रौद्रं वायव्यं वारुणं तथा ॥**
**सावित्रं च तथा प्रोक्तमष्टमं वैष्णवं तथा ॥'**

(भविष्यपुराणे ब्राह्मपर्व)

लघुत्रिमुनिकल्पतरुकृतस्तु नव–व्याकरणानि स्मरन्ति–

**'ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम् ।**
**सारस्वतं चापिशलं शाकलं पाणिनीयकम् ॥'**

व्याकरणानामष्टविधत्वमेव प्रसिद्धम्–यथोक्तं भास्करेण– 'अष्टौ व्याकरणानि षट् च भिषजां व्याचष्टा ताः संहिताः' इति भविष्य-पुराणोक्तानि व्याकरणानि तु न प्रसिद्धानि। ऐन्द्रादीन्येव प्रसिद्धानि।

सर्वेष्वपि व्याकरणेषु लौकिकवैदिकोभयविधशब्दसाधकतया पाणिनीय-व्याकरणस्य प्राधान्यम्। अत एव पाणिन्युपज्ञं व्याकरणं

### ६. ज्यौतिषम्

इदं कालविज्ञापकं शास्त्रम्। मुहूर्तं शोधयित्वा क्रियमाणा यज्ञादिक्रियाविशेषाः फलाय कल्पन्ते, नान्यथा तन्मुहूर्त्तज्ञानञ्च ज्यौतिषा-यत्तमतोऽस्य ज्यौतिषशास्त्रस्य वेदाङ्गत्वं स्वीकृतम्। उक्तञ्चायमर्थ आर्चज्योतिषे, यथा–

"वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वा विहिताश्च यज्ञाः।
तस्मादिदं कालविधानशास्त्रं यो ज्यौतिषं वेदं स वेद यज्ञान्॥"

(आर्चज्यौतिषम् ३६)

चतुर्णामपि वेदानां पृथक् पृथक् ज्यौतिषशास्त्रमासीत्, तेषु सामवेदस्य ज्यौतिषशास्त्रं नोपलभ्यते, त्रयाणामितरेषां वेदानां ज्यौतिषाण्यवाप्यन्ते।

१. ऋग्वेदस्य ज्यौतिषम्–आर्चज्यौतिषम्, षट्त्रिंशत्पद्यात्मकम्।
२. यजुर्वेदस्य ज्यौतिषम्–याजुषज्यौतिषम्, ऊनचत्वारिंशत्पद्यात्मकम्।
३. अथर्ववेदस्य ज्यौतिषम्–आथर्वणज्यौतिषम्, द्विषष्ट्युत्तरशतपद्यात्मकम्।

एतेषां त्रयाणामपि ज्यौतिषाणां प्रणेता लगधो नामाचार्यः। तत्र याजुषज्यौतिषस्य प्रामाणिकं भाष्यद्वयमपि प्राप्यते, एकं सोमाकरविरचितं प्राचीनम्, द्वितीयं सुधाकरद्विवेदिकृतं नवीनम्। एतस्य ज्यौतिषशास्त्रस्य त्रीणि वर्त्मानि, तदिद शास्त्रं त्रिस्कन्धमुच्यते। तदुक्तम्–

'सिद्धान्तसंहिताहोरारूपं स्कन्धत्रयात्मकम् ।
वेदस्य निर्मलं चक्षुर्ज्योतिश्शास्त्रमनुत्तमम् ॥'

एतत्प्रवर्त्तका अष्टादश महर्षयः, ते च–

'सूर्यः पितामहो व्यासो वसिष्ठोऽत्रिः पराशरः ।
कश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिराः ॥
लोमशः पुलिशश्चैव च्यवनो यवनो भृगुः ।
शौनकोऽष्टादशश्चैते ज्योतिःशास्त्रप्रवर्त्तकाः ॥'

## प्रसिद्धाः कतिचन ज्यौतिषग्रन्थाः

| | नामानि | कालः | ग्रन्थाः |
|---|---|---|---|
| १. | आर्यभटः | ५०० ई. | आर्यभटीयम् |
| २. | वराहमिहिरः | ६०० ई. | पञ्चसिद्धान्तिका, बृहज्जातकं लघुजातकञ्च । |
| ३. | ब्रह्मगुप्तः | ७०० ई. | ब्रह्मस्फुटसिद्धान्तः, खण्डखाद्यं, ध्यानग्रहश्च । |
| ४. | लल्लः | ७०० ई. | रत्नकोशः, धीवृद्धियन्त्रञ्च । |
| ५. | उत्पलाचार्यः | १००० ई. | वाराहमिहिरग्रन्थानां टीकाः । |
| ६. | श्रीपतिः | ११०० ई. | सिद्धान्तशेखर–धीकोटिकरण–रत्नमालाजातकपद्धतयः |
| ७. | भोजदेवः | ११०० ई. | राजमृगाङ्ककरणम् |
| ८. | भास्कराचार्यः | १११४ ई. २२४० ई. | सिद्धान्तशिरोमणिः, करणकुतूहलञ्च । |
| ९. | केशवः | १५०० ई. | ग्रहकौतुक–मुहूर्त्ततत्त्व–जातकपद्धतयः । |
| १०. | गणेशः | १५५० ई. | ग्रहलाघवम् । |
| ११. | कमलाकरः | १६५० ई. | सिद्धान्ततत्त्वविवेकः । |

एतदतिरिक्ता अपि—लघुपाराशरी, बृहत्पाराशरी, जैमिनिसूत्रम्, भृगुसंहिता, मीनराजजातकप्रभृतय आर्षग्रन्थाः, लघुजातकम्, बृहज्जातकम्, सारावलिः, जातकाभरणम्, जातकपद्धतिः, जातकसारः, जातकालङ्कारः, पद्मजातकम्, होरारत्नम्, होराकौस्तुभम् इत्यादयः पुरुषप्रणीतग्रन्थाश्च शास्त्रमिदं समृद्धं कुर्वन्ति ।

## उपनिषदः

**उपनिषत्प्रतिपाद्यः कः**

औपनिषदो हि पुरुषः । तमौपनिषदं सनातनं परमपुरुषं विष्णुं परविद्योपनिषदेव खलु विशदतयाऽऽवेदयितुमलम् । पुनरन्यानि मानपदभाजनानि स्वयमिह मानतामुपगन्तुमलम् ।

नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति इति खल्वभिदधाति तत्र भवती भगवती पिप्पलादश्रुतिः ।

बृहद्भाष्ये च—

**न विनोपनिषद्भिः स ज्ञेयः केनापि कस्यचित् ।**
**अत औपनिषत्कं तं प्राहुः विष्णुं सनातनम् ।** इति ।

अत एव ज्ञानिजनमनोपावनाः अपोरुषेयाः अत एव परिशुद्धा इति लोके प्रसिद्धाः ।

का नामोपनिषत्—

अत एवं प्राञ्चः व्याचक्रुः । १) उपनिषण्णं ब्रह्मतत्वमत्रेति, २) उप निषादयति नाशयत्यज्ञानमिति, ३) उपनिषादयति भगवत्तत्वं ज्ञापयति,

४) उपनिषद्यते प्राप्यते ब्रह्मविद्याऽनयेति, ५) उप भगवतः समीपं निषादयति, ६) भगवतः समीपमुपनीय सादयति संसारमिति, ७) उप वेदवाङ्मये सर्वस्मादुपरि निषीदतीति यया च साधकः ८) उप उपरि निषीदतीत्यपि चेयमुपनिषत् । अथवा

९) अत्रैव छान्दोग्योपनिषद्भाष्ये श्रीमध्वभगवत्पादानां शब्दनिर्णयानुसार्युक्तेः ज्ञानिनां स्वयोग्यज्ञानमेव उपनिषदिति । तथा हि शब्दनिर्णयवचनम्–

**स्वयोग्यं तु परिज्ञानं यत् तस्योपनिषत् स्मृतम्** । इति ।

एतासामुपनिषदां वेदान्त इत्यपि प्रसिद्धिः । यतो हि ताः वेदार्थनिर्णायकाः ।

उपनिषच्छब्दस्य रहस्यमर्थः, अध्यात्मविद्यारहस्यप्रतिपादका वेदभागा उपनिषदः कथ्यन्ते ।

**उपनिषत्सङ्ख्या**

मुक्तिकोपनिषदि उपनिषदां सङ्ख्या १०८ कथिता । तत्र १० उपनिषदः ऋग्वेदसम्बद्धाः, १९ उपनिषदः शुक्लयजुर्वेदसम्बद्धाः, ३२ कृष्णयजुर्वेदसम्बद्धाः, १६ सामवेदसम्बद्धाः, ३१ अथर्ववेदसम्बद्धाः । वेदान्ताचार्या एतासूपनिषत्सु कतिचनोपनिषदः स्वमतानुसारिव्याख्यया भूषितवन्तः । तासु दशोपनिषदः प्रसिद्धाः–ईश–केन–कठ–प्रश्न–मुण्डक–माण्डूक्य–तैत्तिरीय–ऐतरेय–छान्दोग्य–बृहदारण्यकोपनिषदः । श्वेताश्वतरोपनिषदेकादश्यपि प्रसिद्धा ।

**ईशकेनकठप्रश्नमुण्डमाण्डूकतित्तिरिः ।**
**ऐतरेयं च छान्दोग्यं बृहदारण्यकं दश ॥** इति प्राचां वाक् ।

दशोपनिषदः इति नामैवैतासां पूर्णत्वमाह । यतो हि दशशब्दः पूर्णत्ववाची । तथा हि ऐतरेयोपनिषदि– "दशेति सर्वमुद्दिष्टं सर्वं पूर्णमिहोच्यते" इति । अतः एतासामध्ययनेनास्माकमपि यथायोग्यं पूर्णता भवति ।

कतिचनोपनिषदो गद्यात्मिकाः, कतिचन पद्यात्मिका कतिचन गद्यपद्योभयात्मिकाश्च । आसामुपनिषदां रचनाकालो भिन्नभिन्नः, परं प्रसिद्धाः, कतिचनोपनिषदो बुद्धकालात्प्राचीन एवेति सर्वसम्मतम् ।

उपनिषदो भारतीयाध्यात्मविद्याया ज्वलन्ति रत्नानि । महर्षयो यानि आध्यात्मिकतत्त्वानि ज्ञानदृशा साक्षादकुर्वन् तानि सर्वाणि तत्त्वान्यत्र वर्णितानि ।

सप्तदशशतके दाराशिकोहनामा शाहजहाँनाम्नः यवनसम्राजः पुत्रः ५० सङ्ख्याकाः उपनिषदः पारसीभाषायां ब्राह्मणपण्डितानां साहाय्येनानुवादितवान् ।

'शोपेन होवेर' (Shopen Hower) नामा प्रसिद्धो वैदेशिको दार्शनिक उपनिषदः स्वगुरुषु गणयति स्म । सम्प्रत्यपि पाश्चात्त्येषूपनिषदां महान् प्रभावो विद्यते, प्रायः सर्वास्वेव सभ्यभाषास्वासामुपनिषदामनुवादो जातः ।

उपनिषदोऽतिसरससरलशैल्यां तत्त्वं ग्राहयन्ति, तेन तासां महत्वं लोकप्रियत्त्वं चानुदिनमवर्धत ।

दशोपनिषत्सु चतुर्वेदसम्बन्धिन्य उपनिषदः सन्ति । ताश्चोपनिषदः प्रतिनिधिभूताः । दशोपनिषदामध्ययनेन सर्वमप्युपनिषत्प्रपञ्चं अधीतं भवति । उपनिषत्सारसर्वस्वं ज्ञातं भवति । उपनिषदः वेदानां सारत्वात् एतासामध्ययनेन वेदानामपि पूरिपूर्णं ज्ञानं भवति । दशेत्यस्य पूर्णमित्यर्थोऽस्ति । दशानां पूर्णत्वात् पूर्णत्वं च सर्वस्वं भवति । एतदुक्तञ्च– 'दशेति पूर्णमुद्दिष्टं सर्वं पूर्णमिहोच्यते' इति ।

शङ्कराचार्याः दशोपनिषदः व्याख्यातवन्तः । भाष्यमपि रचितवन्तः । तेन ज्ञायते दशोपनिषदां प्राध्यान्यम् तेषामपि सम्मतमिति । तदनन्तरं रामानुजाचार्याः नैकासामपि भाष्यं रचितवन्तः । नापि व्याख्यातवन्तः । परं तु ''वेदार्थसङ्ग्रह'' इति कृतौ द्वैताद्वैतपराणां वाक्यानां अर्थविवेचनं स्वसिद्धान्तस्य पोषकतया कृतवन्तः ।

दशोपनिषदामपि भाष्यरचयितारः द्वितीया आचार्याः श्रीमन्मध्वाचार्याः । परं सर्वोपनिषदः अपि विष्णुपारम्यबोधकाः द्वैततत्वस्य बोधकाः नाद्वैतबोधकाः इतीममंशं प्रप्रथमतया घोषयितारः आचार्या एत एव । दशोपनिषत्सु एतरेयोपनिषत् ऋग्वेदसम्बन्धिनी । बृहदारण्यकं, ईशावास्यं, काठकं, तैत्तिरीयमिति चतस्रः उपनिषदः यजुर्वेदस्य, छान्दोग्यं तलवकारश्चेति द्वे सामवेदस्य, तथा आथर्वणं, माण्डूकं षट्प्रश्नं चेति तिस्रः, आथर्वणवेदस्य सम्बन्धिन्यः । दशसु ईशावास्यं काठकञ्च मन्त्रभूता उपनिषदः ।

वेदान्तस्य प्रस्थानत्रये सूत्रप्रस्थानं, गीताप्रस्थानमिव उपनिषत्प्रस्थानमपि स्थानं लभते। तत्र प्रथमस्थानं सूत्रप्रस्थानस्य द्वितीयस्थानं उपनिषत्प्रस्थानस्य । तृतीयं स्थानं गीतायाः ।

**उक्तश्चसर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।**
**पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥**

## उपनिषदां सन्देशः

वेदावाङ्मयप्रपञ्चे उपनिषदः उत्तुङ्गभृङ्गयिताः । वेदानां अन्तिमोऽयम् उपनिषद्वाङ्मयम् । वेदान्ता इत्येव ख्याताः । इमा उपनिषदः भारतीय-तत्त्वज्ञानस्य धर्मसिद्धान्तस्य च मूलानि । वैदिकधर्मप्रतिपादके प्रस्थानत्रये प्रथमं स्थानम् उपनिषत्प्रस्थानस्य । सर्वदर्शनानाम् उपनिषदः परोक्षतोऽ-परोक्षतो वा आधारस्थूणायिताः । भारतीयसंस्कृतेः स्तम्भायिताः । उपनिषदः तात्विकदृष्ट्या इव साहित्यिकदृष्ट्या अपि अतीवसरसाः मनोहराश्च ।

उपनिषदां तत्वदर्शनं मनुजान् अत्युच्चं स्थानं प्रापयति । चेतनाचेतन-विलक्षणं सर्वोत्तमं भगवन्तं प्राधान्येन प्रतिपादयन्ति । भगवत्तत्वं "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुत्युक्तरीत्या पूर्णत्वात् ब्रह्मेति, ज्ञानमिति अनन्तमिति कीर्तयन्ति ।

वेददृष्टारः ऋषयः जगत्तत्वं विवृण्वन्तः सन्तः ब्रह्मतत्वं जगत्कारण-मिति "यतो वा इमानि भूतानि जायन्ते" इति श्रुत्या वर्णयन्ति । प्रधानत्वात् सर्वोत्तमत्वाच्च "एकमेवाद्वितीयं ब्रह्मेति" उद्घोषयन्ति । पाश्चात्यदार्शनिका अपि उपनिषदः मुक्तकण्ठं प्रस्तुवन्ति । तेष्वेकः प्रसिद्धः शोपनूहारमहोदयः उपनिषदः अधिकृत्य एवं वदति । (The fruits of human knowledge and wisdom) अपरश्च दार्शनिकः डैसनूमहाभागः The most intimate and immidiate liat upon the last secret of existence. एवं गदति ।

उपनिषदां गहनानि तत्वानि दैनन्दिनजीवनानुष्ठाने अतीव प्रधानानि । ताश्चोपनिषदः प्रथमतः अनुष्ठानभूताः सन्तः तदनन्तरं सिद्धान्तत्वेन प्रसिद्धाः । वेदान्तानुष्ठानं दुःशकम् । ये च जगतोऽतिदूराः तेषामेव अनुष्ठानं साध्यम् । ये च संसारसागरे निमग्नाः तेषां नेमा उपनिषदः । इत्यादिकं अस्माभिः नैकवारं कथ्यते । परं मानवानामेव कथाः प्रस्तूयन्ते । राजा पाञ्चालः साधकं श्वेतकेतुं प्रति तत्त्वं स्पष्टयति इति छान्दोग्योपनिषदि कथ्यते । राजानः सर्वदा निरङ्कुशप्रभवः । तैः राज्यभारे क्रियमाणे न्यायान्यायं च विचारणीयमासीत् । रणरङ्गे सेना परिरक्षणीया चासीत् । तथापि एतादृशां राज्ञाम् उपनिषदां तत्वान्यपि चीन्तनीया-न्यासन् । उपनिषत्तत्वानि स्वेषां जीवने अनुष्ठेयान्यासन् । इत्यादिकां कथां शृणुमो वयम् । तादृशां राज्ञां यत्साध्यमासीत्तदीदस्माकं असाध्यमस्ति । परं तत्साधनीयमस्माभिः । आसाध्यं कदाऽपि न बोधयत्युपनिषत् । ये जगतो विदूराः तेषामेव नायं वेदान्तोपदेशः । ये जगति संसारे मग्नास्तेषामपि वेदान्तोपदेश अत्यावश्यकः । नित्यजीवने आचरणीयो अनुष्टेयश्च वेदान्तः उपनिषत्सु वरीवर्ति ।

मानवजीवनं न कदापि निकृष्टतया पश्यतीयं उपनिषत् । कुत्रापि मानवं न निन्दति । ''शृण्वन्तु सर्वे अमृतस्य पुत्राः'' इति श्वेताश्वतरोप-निषत् मानवं पुत्रतया सम्बोधयति । मानवान् कुत्रापि पापिन इति न निर्दिशाति ।

ब्रह्मणो जाता वयं ब्रह्म गच्छामः । स्थितिकालेऽपि ब्रह्मणैव जीवामः । परं वयं तमिमं विचारं व्यस्मराम । परमिदं वास्तवं साधनेन स्मरणीयमस्ति ।

उपनिषत् अस्मान् ''आशिष्ठो द्रढिष्ठो बलिष्ठः'' इति जागरयति । यथा कथञ्चित् नहि कालयापनं करणीम् । धीराः सन्तो जीवेम । जीवनमिदं अस्माकं वरत्वेन स्वीकुर्याम । जीवनमेकं शापः इति मा रुदन्तु इतीमं धर्मं बोधयतीयं उपनिषत् ।

जीवनं नानुभवतेति नहि कथयति । अनुभवरहस्यं ज्ञात्वा अनुभवतेति उपनिषद्वाणी । अस्माकं विषयानुभवेच्छाऽस्ति । रूपरसगन्धशब्दाश्च आह्वयन्ति । परं रहस्यज्ञानाय व्यवधानं नास्त्यस्माकम् ।

अस्मिन् प्रपञ्चे यद्यदस्ति तत्सर्वं भगवता परिपूर्णं ''ईशावास्यमिदं सर्वं'' इति ईशावास्योपनिषद्वाणी । भगवन्तं स्मारं स्मारं तदिदं सर्वं तस्यैव तदधीनं इति भावनया सर्वमास्वादयामः । तदा नास्माकं जीवने दुःखकारणानां प्रवेशो भवति । यदा भगवन्तं व्यस्मराम तदा अमृतमपि विषं भवति । यदा न व्यस्मराम तदा विषमपि अमृतं सञ्जातम् । जीवने जीवनमेव महती कला । वयं शान्तिं समधानं चानुभूय अस्मान् परितो विद्यामानानां कृते शान्तिवितरणमेव जीवनोद्देशः । एतदर्थं वयं सिद्धा भवेम । तद्विना त्वरया धावने दुःखाद्यनुभूतिः स्यात् ।

ईशावास्योपनिषदपरममरसत्यं बोधयति – त्यागेन भोगं कुर्याः इति । ''तेन त्यक्तेन भुञ्जीथाः '' इति उपनिषदुपदेशः । सङ्ग्रहे आनन्दोऽस्ति । अन्यस्मै वितरणे ततोऽप्यधिकः परमानन्दः । भगवता यद्दत्तमस्माकं तदन्येभ्यः पुत्रमित्रादिभ्यो वितीर्य वयं भोगं कुर्मः । यद्दीयते अस्माभिः तदस्माकं उद्धृत्यै भवति । अस्माभिर्दत्तमेकं दश भवति । दश शतं भवति । शतं सहस्रं भवति । तत्सर्वम् अस्मान् धावति । सति संग्रहे क्षीयते । सति वितरणे वृद्धिः भवति । अन्याच वेदवाणी इममंशं एवमुद्घोषयति ''त्यागेनैके अमृतत्वमानशुः'' इति ।

यद्यस्मिन् प्रपञ्चे शतं समाः जीवितुमिच्छेम तर्हि शास्त्रे विहितानि कर्माणि कुर्वन्त एव जिजीविषेम । ''कुर्वन्नेवेह कर्माणि जिजीविशेत् शतं समाः'' इति उपनिषत् कथयति । किमर्थं अत्र आगतवान्? सति शीघ्रं मरणे तदेव वरमिति न हि पलायनसूत्रं बोधयति । यदि वयं प्रपञ्चे पादं प्रसारयामः तर्हि पूर्णायुष्का जीवेम । न हि भीत्या पलायनमुचितम् । जीवनं धार्मिकजीवनेन भाव्यम् । न हि स्वार्थेन जीवनं जीवनं भवति । देवस्य समीपे तप्यमानगन्धकाष्टवत् जीवेम । प्रतिक्षणं तप्यमानो गन्धकाष्ठः स्वयं भस्मीभूय गृहमामोदयुतं करोति । तद्वत् वयं जीवेम इति उपनिषदुपदेशोऽस्माकम् ।

केनोपनिषत् कथयति इह अवेदीत् चेत् सत्यमस्ति । इह नचावेदीत् चेन्महती विनष्टिः इति । साचेयं उपनिषद्वाणी–

**इह चेदवेदीदथ सत्यमस्मि न चेदिहावेदीन्महती विनष्टिः ।**
**भूतेषु भूतेषु विचिन्त्य धीराः प्रेत्यस्माल्लोकादमृता भवन्ति ।।** इति ।

विवेकिनः सर्वप्राणिषु नियामकतया स्थितं भगवन्तं विदित्वा अस्माल्लोकात् प्रेत्य मुक्ता भवन्ति इति हि उपनिषदाशयः ।

अध्ययनं समाप्य गुरुकुलात् प्रस्थितानां ब्रह्मचारिणां कृते दीयमानः उपदेशः अद्यापि प्रस्तुतोऽस्ति । तैत्तिरीयोपनिषदि इदानीन्तनपदवीप्रदान-समारम्भे दीयमानोपदेशवत् स्थितः अयं भागः अतीव औचित्यपूर्णः अर्थपूर्णश्च ।

सत्यं वद । स्वाध्यायं मा विस्मार्षीः । आचार्याय प्रियं धनमाहर । धर्ममाचर । तदनुज्ञातोऽनुरूपदारानुद्वाह्य प्रजासन्ततेरविच्छित्तिः कार्या । सत्यात् प्रमादं माकार्षीः । श्रेयो हेतुव्यापारात् प्रमादं माकार्षीः । भूत्यै

न्यायोपायेन द्रव्यार्जनं कार्यम् । माता देववत्पूज्या । मातृधनाविरोधेन माता संरक्ष्या । पितातु पित्रार्जितेन स्वार्जितेन च संरक्ष्यः । आचार्य-स्त्वाज्ञाकरणेन सेव्यः । अतिथिरन्नादिना तोष्यः । नत्वेते दारादि-रक्षणपरेण कदाचिदुपेक्ष्याः । यानि अदोषाणि कर्माणि व्रतादीनि तानि त्वया अनुष्ठेयानि । इतराणि सदोषाणि स्वपरक्लेशपराणि नानुष्ठेयानि । कदाचिदस्मदनुष्ठितमपि सावद्यं कर्म गुर्वाचारबुद्ध्या त्वया नानुष्ठेयम् । ये केच अस्मच्छ्रेयांसः इति त्वया ज्ञायन्ते । तेषामासनादिना श्रमापनयः कार्यः । तेषामासने त्वया नोपवेष्टव्यम् । नैतावतैवालं किन्त्वेतादृशेषु लब्धेषु यथाशक्ति दानं कुरु । श्रद्धया देहि । अश्रद्धयाऽपि देहि । दानं तु शक्तौ सत्यां ऐश्वर्यानुसारेण देहि । लुब्धेनापि अदाने जना हसिष्यन्तीति लज्जयाऽपि देयमेव । अदाने राजादयः कुप्येरन् इति भीत्या देयमेव । दानं च पात्रस्थः परमात्मा प्रीतो भवतीति ज्ञानपूर्वकं भवतु । यद्वा अर्थिनः इष्टार्थज्ञानेन देहि । अयं तव विधिः । अयमुपदेशः । वेदरहस्यमेतत् । भगवदाज्ञेयम् । एवमुपासितव्यम् । एतदनुष्ठेयम् । (सत्यं वद । धर्मं चर ..... एवमुचैतदुपास्याम्) स्वाध्यायप्रवचने न त्याज्ये । तद्धि तपः । स्वाध्यायप्रवचनकरणमेव तपः ।

प्राणायामादयस्तुष्टिपर्यन्ता द्विगुणाधिकाः ।
स्वाध्यायोऽतः कोटिगुणः ..... ।
तपआद्याः क्रमात्सर्वे उत्तरोत्तरतोऽधिकाः ।
अज्ञस्य श्रवणं श्रेष्ठम् अयुक्तेर्मननं तथा ।
ध्यानं निश्चिततत्वस्य तस्माच्छास्त्रावमर्शनम् ।
वरं दशगुणं तस्मात् व्याख्यैकस्य शतोत्तरा ।

इत्यादि प्रमाणप्रसिद्धं स्वाध्यायरूपं तपः सर्वदा करणीयम् इति उद्घोषितम् । ज्ञानप्रवाहस्य वृद्ध्यै तथा तस्याः अखण्डप्रवाहाय च

स्वाध्यायः प्रवचनं च अत्यावश्यकम् । नहीयत्ताऽध्ययनस्य । अतः अध्ययनसमाप्त्यनन्तरमपि ऋषिऋणं तर्तुं सदा अध्ययननिरतैर्भाव्यम् । सति च ज्ञाने ज्ञापनं चावश्यकम् । अध्ययनञ्चाध्यापनाय । अन्याचोपनिषत् प्रस्तौति ''नाप्रवक्त्रे प्रब्रूयात्'' इति । बृहदारण्यकोपनिषत् एवं गदति– दानं कुरुत, दयां कुरुत, इन्द्रियजयं प्राप्नुत इति । ''दत्त, दयध्वं दाम्यत'' इति हि उपनिषद्वाणी। त्रिभिर्दकारैः मानवानां यदवश्यं कर्तव्यं तत् प्रतिपादयति । छान्दोग्योपनिषदपि ''अथ यत्तपो दानम् आर्जवम् अहिंसा सत्यवचनं इति ता अस्य दक्षिणाः'' इति अस्माकं जीवने तपसः, दानस्य, आर्जवस्य, अहिंसायाः सत्यवचनस्य च महतीं सूचयति। कठोपनिषदि एवं श्रूयते– 'नवित्तेन तर्पणीयो मनुष्यः' मानवस्य न कदापि तृप्तिः धनेन इत्याघोषयति ।

अस्मिन् लोके लभ्यमानानि सुखानि मनसः इन्द्रियाणाञ्च तत्काले एव आप्यायमानानि भवन्ति । परमिमानि सुखानि न शाश्वतानि । एतानि ऐहिकसुखानि प्रेय एव न श्रेयः । अत एव उपनिषत् ''अन्यच्छ्रेयोऽन्यदुतेव प्रेयः'' इति प्रेयःश्रेयसोः विभागं प्रादर्शयत् । एतयोर्मध्ये श्रेयोमार्ग एव गरीयान् । न तु प्रेयोमार्गः । यः श्रेय आदत्ते तस्य साधु भद्रं मोक्षाख्यं भवति । श्रेय एव निष्कण्ठकः पन्थाः । यश्च प्रेय ऐहिकसुखानि एव वृणीते स मोक्षाख्यप्रयोजनात् हीनो भवति । प्रेयो बन्धकं भवति । मानवानां निरतिशयानन्दाय नहि भवति । अतः ब्रह्मसाक्षात्कार आवश्यकः । स एव लक्ष्यतया भाव्य इति उपनिषदां सिद्धान्तः ।

कठोपनिषदि यमेन नचिकेतसे क्रियमाणः उपदेशः अद्यास्माकमपि अतीवोचितः । उत्तिष्ठत जाग्रत श्रेष्ठमाचार्यं आश्रयित्वा ज्ञानं प्राप्नुत ।

यथा क्षुरस्य निशिता धारा दुरत्यया तद्वत् दुर्गं पथस्तत्कवयो वदन्ति । ज्ञानिनः प्राप्य तेषामुपेदेशेन ब्रह्मज्ञानं सम्पादनीयम् । इत्येवमादयः उपनिषदामुपदेशाः मानवानां रत्नदीपायिताः ।

## श्रीमध्वाचार्याः

''अनादिकालतो वृत्ताः समया हि प्रवाहतः'' इत्युक्त्या सकलसमयानां अनादिकालतः उपस्थितिः अस्त्येव । किन्तु ऐतिहासिकदृष्ट्या द्वैतवेदान्तस्य प्रतिपादयितारः श्रीमध्वाचार्याः । द्वैतवेदान्तप्रतिष्ठापनाचार्याः इत्येव ते प्रसिद्धिं गताः । मध्वाचार्याणाां विषये ज्ञातुं श्रीनारायण पण्डिताचार्यकृतसुमध्वविजयमहाकाव्यं बहूपकरोति ।

### मध्वाचार्याणां कालः

श्रीमध्वाचार्याणां कालविषये यद्यपि इतिहासतज्ज्ञानां विवादः अस्ति तथाऽपि उपलभ्यमानप्रमाणैः तेषां कालः प्रायः 1238 A.D. 1317 A.D इति वक्तुं शक्यते । अयं च कालनिर्णयः आन्ध्रदेशे विद्यमानस्य श्रीकूर्मनाथदेवालयस्य श्रीमन्मध्वाचार्याणां साक्षात् शिष्येण श्रीनरहरितीर्थाख्ययतिना कारितस्य शिलाशासनस्य आधारेण कृतः । इदं च शासनं (Epigraphica Indica Vol.VI no.25) इत्यस्मिन् संगृहीतमस्ति ।

### मध्वाचार्याणां ग्रन्थाः

मध्वाचार्येण अनेके ग्रन्थाः वेद–इतिहास–पुराण–पञ्चरात्रादीनां अनुसारेण सकलशास्त्रार्थनिर्णयाय विरचिताः । इदानीं ३७ ग्रन्थाः उपलभ्यन्ते ।

तेषां च ग्रन्थानां विभागः यथा

१. गीताप्रस्थानं २. सूत्रप्रस्थानं ३. उपनिषत्प्रस्थानं ४. श्रुति ५. इतिहास ६. पुराण ७. प्रकरणग्रन्थाः ८. स्तोत्रग्रन्थाः ९. अवशिष्टग्रन्थाः

## १. गीताप्रस्थानम्

भगवद्गीतायाः अर्थप्रकाशनार्थं श्रीमध्वाचार्यैः

१) गीताभाष्यम् २) गीतातात्पर्यं इति ग्रन्थद्वयं रचितम् ।

श्रीसुमध्वविजये

**गीतातात्पर्यभाष्याभ्यामाभ्यां विश्वं प्रकाश्यते**
**गोगणैरप्रतीकारैः अर्केन्दुभ्यामिवाधिकम् ।**

इति एतयोः वैशिष्ट्यं प्रतिपादितम् ।

## २. सूत्रभाष्यम्

ब्रह्मसूत्राणां अर्थनिर्णयाय श्रीमध्वाचार्यैः १) सूत्रभाष्यम् २) अनुव्याख्यानम् ३) अणुभाष्यम् ४) न्यायविवरणं इति ग्रन्थचतुष्टयं रचितम् ।

## ३. उपनिषत् प्रस्थानम्

१) ऐतरेयभाष्यम् २) छान्दोग्यभाष्यम् ३) बृहदारण्यकभाष्यम् ४) ईशावास्यभाष्यम् ५) तलवकारभाष्यम् ६) षट्प्रश्नभाष्यम् ७) काठकभाष्यम् ८) आथर्वणभाष्यम् ९) माण्डूकभाष्यम् १०) तैत्तिरीयभाष्यम्

यथा क्षुरस्य निशिता धारा दुरत्यया तद्वत् दुर्गं पथस्तत्कवयो वदन्ति । ज्ञानिनः प्राप्य तेषामुपेदेशेन ब्रह्मज्ञानं सम्पादनीयम् । इत्येवमादयः उपनिषदामुपदेशाः मानवानां रत्नदीपायिताः ।

## श्रीमध्वाचार्याः

''अनादिकालतो वृत्ताः समया हि प्रवाहतः'' इत्युक्त्या सकलसमयानां अनादिकालतः उपस्थितिः अस्त्येव । किन्तु ऐतिहासिकदृष्ट्या द्वैतवेदान्तस्य प्रतिपादयितारः श्रीमध्वाचार्याः । द्वैतवेदान्तप्रतिष्ठापनाचार्याः इत्येव ते प्रसिद्धिं गताः । मध्वाचार्याणाां विषये ज्ञातुं श्रीनारायण पण्डिताचार्यकृतसुमध्वविजयमहाकाव्यं बहूपकरोति ।

### मध्वाचार्याणां कालः

श्रीमध्वाचार्याणां कालविषये यद्यपि इतिहासतज्ञानां विवादः अस्ति तथाऽपि उपलभ्यमानप्रमाणैः तेषां कालः प्रायः 1238 A.D. 1317 A.D इति वक्तुं शक्यते । अयं च कालनिर्णयः आन्ध्रदेशे विद्यमानस्य श्रीकूर्मनाथदेवालयस्य श्रीमन्मध्वाचार्याणां साक्षात् शिष्येण श्रीनरहरितीर्थाख्ययतिना कारितस्य शिलाशासनस्य आधारेण कृतः । इदं च शासनं (Epigraphica Indica Vol.VI no.25) इत्यस्मिन् संगृहीतमस्ति ।

### मध्वाचार्याणां ग्रन्थाः

मध्वाचार्येण अनेके ग्रन्थाः वेद–इतिहास–पुराण–पञ्चरात्रादीनां अनुसारेण सकलशास्त्रार्थनिर्णयाय विरचिताः । इदानीं ३७ ग्रन्थाः उपलभ्यन्ते ।

तेषां च ग्रन्थानां विभागः यथा

१. गीताप्रस्थानं २. सूत्रप्रस्थानं ३. उपनिषत्प्रस्थानं ४. श्रुति ५. इतिहास ६. पुराण ७. प्रकरणग्रन्थाः ८. स्तोत्रग्रन्थाः ९. अवशिष्टग्रन्थाः

## १. गीताप्रस्थानम्

भगवद्गीतायाः अर्थप्रकाशनार्थं श्रीमध्वाचार्यैः

१) गीताभाष्यम् २) गीतातात्पर्यं इति ग्रन्थद्वयं रचितम् ।

श्रीसुमध्वविजये

**गीतातात्पर्यभाष्याभ्यामाभ्यां विश्वं प्रकाश्यते**
**गोगणैरप्रतीकारैः अर्केन्दुभ्यामिवाधिकम् ।**

इति एतयोः वैशिष्ट्यं प्रतिपादितम् ।

## २. सूत्रभाष्यम्

ब्रह्मसूत्राणां अर्थनिर्णयाय श्रीमध्वाचार्यैः १) सूत्रभाष्यम् २) अनुव्याख्यानम् ३) अणुभाष्यम् ४) न्यायविवरणं इति ग्रन्थचतुष्टयं रचितम् ।

## ३. उपनिषत् प्रस्थानम्

१) ऐतरेयभाष्यम् २) छान्दोग्यभाष्यम् ३) बृहदारण्यकभाष्यम् ४) ईशावास्यभाष्यम् ५) तलवकारभाष्यम् ६) षट्प्रश्नभाष्यम् ७) काठकभाष्यम् ८) आथर्वणभाष्यम् ९) माण्डूकभाष्यम् १०) तैत्तिरीयभाष्यम्

**४. श्रुतिः : ऋग्भाष्यम्**

श्रीमध्वाचार्यैः ऋग्वेदस्य चत्वारिंशत् सूक्तानां व्याख्यानं सकलवेदानां विष्णुपरत्वप्रतिपादकत्वस्य प्रदर्शनार्थं दिग्दर्शनतया कृतम् ।

**५. इतिहासः :**

**१) महाभारततात्पर्यनिर्णयः**

महाभारतादिसकलसच्छास्त्रार्थनिर्णयपरोऽयं ग्रन्थः महाभारते, रामायणे च विविधसंशयान् परिहरति ।

**२) यमकभारतम्**

यथा सूत्रभाष्यस्य अणुभाष्यं तथा महाभारततात्पर्यनिर्णयस्य यमकभारतं मध्वाचार्यैः कृतम् । एकाशीति (८१) श्लोकात्मकेऽस्मिन् काव्ये महाभारतस्य अष्टादशपर्वणां सारसर्वस्वं सम्यक् वर्णितम् । यमकात्मकशब्दालङ्कारयुक्तत्वात् अस्य ग्रन्थस्य यमकभारतं इति नाम ।

अस्मिन् ग्रन्थे एकाक्षरश्लोकः विद्यते इत्येतत् विशेषः

भाभाभाभा भाभाभाभा भाभाभाभा भा भा भा भा ।
भाभाभाभा भाभाभाभा भाभाभाभा भा भा भा भा ॥

नरहरितीर्थैः, हृषीकेशतीर्थैः अस्य श्लोकस्य अपूर्वतया व्याख्यानं च कृतम् ।

**६. पुराणप्रस्थानम्**

पुराणप्रस्थाने श्रीमद्भागवतस्य तात्पर्यनिर्णयार्थं श्रीमद्भागवततात्पर्यनिर्णयः इति ग्रन्थं पुराणस्थानपान्थानां सहकाराय चक्रुः ॥

श्रीमध्वाचार्यैः रचितानि दशप्रकरणानि

१) तत्वसङ्ख्यानम् २) तत्त्वविवेकः ३) तत्त्वोद्योतः ४) विष्णुतत्त्वविनिर्णयः ५) प्रमाणलक्षणम् ६) कथालक्षणम् ७) उपाधिखण्डनम् ८) मायावादखण्डनम् ९) प्रपञ्चमिथ्यात्वानुमानखण्डनम् १०) कर्मनिर्णयः

७. **स्तोत्रग्रन्थाः** : १) द्वादशस्तोत्रम् २) नखस्तुतिः ३) कन्दुकस्तुतिः

८. **इतरग्रन्थाः** : १) तन्त्रसारसङ्ग्रहः २) सदाचारस्मृतिः ३) जयन्तीनिर्णयः ४) कृष्णामृतमहार्णवः ५) यतिप्रणवकल्पः

## दशोपनिषद्भाष्याणि

श्रीमदानन्दतीर्थभगवत्पादैः ब्रह्मसूत्रसम्बन्धितया ब्रह्मसूत्रभाष्यं सप्तशत्याः गीतायाः गीताभाष्यं ऋग्वेदस्य ऋग्भाष्यमिति ग्रन्थाः विरचिताः । तथैव उपनिषदामपि उपनिषद्भाष्याणि विरचितानि । तेन अध्येतॄणां महान्तमुपकारं कृतवन्तः । प्रसिद्धानां दशोपनिषदां भाष्यरचनेन उपनिषदर्थाः प्रकाशिताः । मतत्रयविमर्शनपूर्वकं श्रुतिमातुः हार्दं प्रकटितवन्तः । उपनिषदङ्गनायाः अभिप्रायावगमने पाठकानां दीपायितानि इमानि भाष्याणि ।

अतः नारायणपण्डिताचार्याः मध्वविजये

**दशोपनिषदो देवीर्देवा इव समीप्सिताः ।**
**युक्ताः प्रसादयन्त्यर्था एषु भाष्यालयेष्वलम् ॥**

इत्येवं वर्णनं कुर्वन्ति तदतीव औचित्यपूर्णमेवास्ति ।

दशोपनिषदां आचार्यमध्वभाष्याणि नैककारणात् अतीव महत्वपूर्णानि । तेषु च कानिचन वैशिष्ट्यानि–

१) उपनिषदः मूलतः वैदिकसाहित्यम् । अतः तासामध्ययनस्यापि प्रथमतः प्रतिपाद्यदेवतानां, द्रष्टॄणां ऋषीणां, तदर्थस्य छन्दसां परिज्ञानम् अत्यावश्यकम् । एतेषां ज्ञानं विना अध्ययने महती विनष्टिः अनर्थश्च भवति । तदुक्तं सामवेदब्राह्मणे–

"यो हवाऽविदितार्षछन्दोदैवतब्राह्मणेन मन्त्रेण यजति याजयति वाऽध्यापयति स्थाणुं वर्छति गर्तेवा पद्यते प्रवामीयते पापीयान् भवति तस्मादेतानि मन्त्री विद्यात्" इति ।

इतः पूर्वतना भाष्यकारा एतादृशं अतीव मुख्यं विवरणं न प्रददुः । नापि तादृशं प्रयत्नं चक्रुः । परं मध्वभाष्याणि प्रत्युपनिषदां उपर्युक्त-ऋषिदेवतानां विवरणं प्रमाणपुरस्सरं प्रददुः । तेषां च ऋषिदेवतानां कोष्टकं अन्ते अनुबन्धे दत्तमस्ति ।

२) उपनिषदां भाषा सरळा हृद्या च । परं तत्प्रतिपादका विषयास्तु अतीव गहनाः । तेषां निरूपणं तु अतीव गहनमस्ति । तासां पदानि, वाक्यानि वा अर्थवगमकतया दृष्टा अपि तासामभिप्रायस्तु गूढ एव भवति । तदेव तासां वैशिष्ट्यम् । अतः तासामध्ययनं इतिहासपुराणाभ्यां भाव्यम् इति अध्ययनपरम्परा जागरयत्यस्मान् । उक्तञ्च–

**इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।**
**विभेत्यल्पश्रुताद्वेदो मामयं प्रचलिष्यति ।।** इति ।

इतिहासपुराणानि वैदिकसाहित्यस्य प्रथमभाष्याणि । तेषां साहाय्यं विना वेदानामभिप्रायो नावगतो भवति । एवं इतिहासपुराणप्रदर्शितपथा रचितानि भाष्याणि आचार्यमध्वस्य इत्येतत् गरिमाधायकम् । तेषां भाष्येषु आमूलाग्रं परिदृश्यमानानि प्रमाणवाक्यानि श्रुतयः स्मृतयः सूत्राणि च साक्षिभूतानि ।

३) ब्रह्ममीमांसापरपर्यायणि ब्रह्मसूत्राणि च सकलशास्त्रार्थनिर्णयाय मार्गदर्शकसूत्राणि । करदीपायितानि च तानि । सूत्राणां मार्गदर्शनं विना तात्विकविचारस्य अन्तिमो निर्णयोऽशक्यः ।

**तस्मात् सूत्रार्थमागृह्य कर्तव्यः सर्वनिर्णयः ।**

म.भा.तानि (१.४४)

एतेन सूत्रप्रस्थानस्य प्राथम्यं लब्धं भवति ।

वेदोपनिषदां तु साक्षात् निर्णायकसूत्राणि इमानि । परं तेषां उपयोगं प्राधान्येन प्राप्तवन्ति भाष्याणि मध्वभाष्याण्येव । उपनिषदो अध्यात्म-विद्येति प्रसिद्धाः । अतस्तत्रत्यानि पदानि, वाक्यनि प्रकरणानि वा अध्यात्मपरतया ज्ञेयानि । एवमध्यात्मतया विश्लेषणं कृतवन्ति मध्व-भाष्याणि इतीदं गरिम वैशिष्ट्यं च तेषाम् ।

४) उपनिषत्सु अद्वैतपरतया भासमानानि ''अहं ब्रह्मास्मि'' ''तत्वमसि'' ''प्रज्ञानं ब्रह्म'' ''सर्वं खल्विदं ब्रह्म'' ''नेह नानास्ति किञ्चन'' इत्यादीनि पञ्चषाणि वाक्यान्येव तत्वावेदकानीति परिगृह्य अद्वैतमेव उपनिषदां आन्तर्यमिति प्रतिपादकं वादं विमृश्य एतानि वाक्यान्यपि ''द्वा सुपर्णा सयुजा सखाया'' इत्यादिभेदबोधकवाक्यानीव भेदबोधकान्येव न तु कयाऽपि रीत्या अभेदबोधकानि इति नैकरीत्या प्रतिपादनमपि मध्वभाष्यस्य आसाधारणी महिमैव ।

५) उपनिषदुक्तार्थनिर्णयाय प्राक्कथा, स्पष्टीकरणं, उपाख्यानानि, विरोधपरिहाराय तत्सम्बन्धीनि विवरणानि साधारतया प्रतिपादनमपरं मध्वभाष्यस्य वैशिष्ट्यम् । उदाहरणत्वेन इशावास्योपनिषदः ऋषिदेवता-विवेचनाय ब्रह्माण्डपुराणभागवतादिभिः कृतं विवरणवैविध्यं ज्ञेयम् ।

६) प्रधानविषयाणां स्पष्टीकरणमिव आटकी, प्रद्राणकः, चरकः करकः, इत्यादीनां शताधिकानां अपूर्वपदानां अर्थं निष्कृष्टतया प्रमाणपुरस्सरं च प्रतिपादनं मध्वभाष्यस्य परिपूर्णत्वे अपरं कारणम् ।

**उपलाः इष्टकाः स्थूला मटचीति प्रकीर्तिता ।** इति शब्दनिर्णये ।

**आसन्नयौवना योषिदाटकीत्यभिधीयते ॥** इति च ।

**प्रद्रवन्नन्नपानार्थं प्रद्राणक इतीरितः ।** इति च ।

**चरकस्तीर्थसञ्चारी वित्तार्थी करकः स्मृतः ॥ (छान्दो.)**

७) उपनिषत्सु प्रधानतया परिदृश्यमानं प्रमुखं तत्वं ब्रह्मतत्वम् । तदनन्तरं महत्वपूर्णमपरं तत्वं प्राणतत्वम् । ब्रह्मतत्वं श्रीहरिः । प्राणतत्वञ्च मुख्यप्राणः । एतेन उपनिषदां मुख्यसंदेशः हरिसर्वोत्तमत्वं, वायुजीवोत्तमत्वम् । तत्प्रतिपादनं सर्वत्र परिदृश्यते निष्कल्मषैरध्येतृभिः ।

८) उपनिषत्सु मध्ये मध्ये ''तदप्येष श्लोकः'' इति परिदृश्यमानस्य उल्लेखस्य प्रकाशनं न कैरपि भाष्यैः कृतम् । परं मध्वभाष्याणि एतानि तदप्येष इत्यादिवाक्यानि उपनिषद्द्रष्टृभिर्मुनिभिः स्वोक्तसंवादित्वेन स्वोत्तमैर्मुनिभिः दृष्टा मन्त्रा एवेति विवरणं कुर्वन्ति ।

**प्रमाणस्य प्रमाणञ्च बलवद्विद्यते मुने ।**
**ब्रह्मदृष्टान् यतो मन्त्रान् प्रमाणं सलिलेश्वरः ।**
**अत्र श्लोका भवन्तीति चकारैव पृथक् पृथक् ।** इति गारुडे ।
**खण्डचतुष्टयेऽपि पृथक् पृथक् ।** इति माण्डूकोपनिषद्भाष्ये

९) दशोपनिषत्सु ब्रह्मैक्यबोधकतया प्रतिभासमानानि वाक्यनीमानि–

१) योऽसावसौ पुरुषः सोहमस्मि । (ईशावास्यम्)

२) नेह नानास्ति किञ्चन । काठक (२.११)
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ।

३) षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति ।
(षट्प्रश्नोपनिषत् ५.३)

४) कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति ।
तथाविद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥
सह योवै परमं ब्रह्म वेद ब्रह्मैव भवति ॥ (६९)

५) प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥
विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।
उपदेशादयं वादो ज्ञाते द्वैतं नविद्यते ॥ माण्डूकोपनिषत् २.१०

६) स यश्चायं पुरुषे यश्चासावादित्ये स एकः ।
(२.२७) तैत्तिरीयोपनिषत् ।

७) अहं ब्रह्मास्मि । बृहदारण्यकोपनिपत्

८) सर्वं खल्पिदं ब्रह्म । तत्वमसि । छान्दोग्योपनिषत्

९) योऽहं सोऽसौ योऽसौ सोऽहम् । ऐतरेयोपनिषत्

इत्येवमादीनि आत्मैक्यबोधकत्वेन, विश्वमिथ्यात्वबोधकत्वेन, ब्रह्मनिर्गुणत्वबोधकत्वेन शङ्कराचार्यैः परिगृहीतानि सर्वाणि वाक्यानि द्वैतबोधकत्वेन, जगत्सत्यत्वबोधकत्वेन, ब्रह्मणः सगुणत्वबोधकत्वेन जीवेशभेदबोधकत्वेन पञ्चभेदस्थापकत्वेन च स्वभाष्येषु अन्यान्यस्थलेषु विपुलानि प्रमाणानि उदाहृत्य प्रतिपादितं श्रीमदानन्दतीर्थभगवत्पादैः ।

१०) एवमेव प्राधान्येन उपनिषदां औन्नत्यं स्थानं प्रापितम् । मन्त्रारण्यकब्राह्मणोपनिषदिति प्रभेद्युतं वैदिकसाहित्यम् । ''ब्राह्मणोपनिषन्मन्त्रभेदा वेदगिरोऽखिलाः इति श्रीमट्टीकाकृद्भिः श्रीमज्जयतीर्थैरुक्तम् । तत्र उपनिषदां स्थानं अतीव प्रधानमित्यपि साधारतया निरूपितवन्तः ।

**मन्त्राश्चोपनिषच्चैव ब्राह्मणादुत्तमास्ततः ।**
**तत्राप्युपनिषच्छ्रेष्टा युक्तावस्थादिगम्यतः ।**

इति प्रमाणाविवेके । ऐतरेयोपनिषद्भाष्यम्

**विष्णुरुक्तः सर्ववेदैर्मन्त्रेषु च विशेषतः ।**
**आरण्यके विशेषेण नैवान्यत् किञ्चिदुच्यते ॥**
**कर्मार्थं ब्राह्मणं स्यादमुख्यार्थविवक्षया ।**
**मुख्यतो विष्णुरेवैको ब्राह्मणेष्वपि कथ्यते ।**
**आरण्यके ऋते विष्णुं नैवान्यत् किञ्चिदुच्यते ।**
**सूत्रात्मा तूच्यते विष्णोस्तद्विशिष्टत्ववित्तये ।**
**कुत्रचित्तदुपास्तिश्च तस्याध्यर्धतनुत्वतः ।**
**तस्मिन् विष्णोरुपास्त्यर्थं नान्यथा किञ्चिदुच्यते ।**

छान्दोग्योपनिषद्भाष्यम्

**न विनोपनिषद्भिः सज्ञेयः केनापि कस्यचित् ।**
**अत औपनिषत्कं तं प्राहुर्विष्णुं सनातनम् ॥**

इति बृहदारण्यकोपनिषद्भाष्यम्

११) एतासु दशोपनिषत्स्वपि श्रीमन्मध्वाचार्याणां अतीव प्रिया ऐतरेयोपनिषत् । तदुक्तम् श्रीसुमध्वविजये–

साक्षादथोपनिषदो विभुरैतरेय्याः
पाठच्छलेन विजनेऽर्थरसान् ब्रुवाणः ।
अध्यापकाय विततार विमोक्षबीजं
गोविन्दभक्तिमुचितां गुरुदक्षिणां सः॥ (३.५५)

ऐतरेयमथ किञ्चन सूक्तं सूचयन् सदसि तत्र गरिष्ठः ।
श्रोतुमिच्छति सभा भगवद्भ्यः सूक्तभावमिति तावदुवाच । (६.१)

सद्गुरोर्न विरहं सहमानः सत्यतीर्थयतिरन्वगमत्तम् ।
यस्त्रिवारमितरासुतशाखास्वर्थमग्र्यमशृणोत् पुरुसङ्ख्यात् ॥

(६.५०)

अम्बोधेस्वरिततरोर्मिपाणिमृष्टे
स्वच्छेऽसौ विकटतटासने निषण्णः ।
व्याचख्यावतिचिरमैतरेयशाखा
सूक्तानि प्रभुरतिसुन्दरप्रकारम् ॥ १६.१६

नाकीन्द्रास्तमवनिभागमावसन्तं
सुश्लोकैरपि भुवनानि भूषयन्तम् ।
नेमुः खादुपनिषदं तदैतरेयीं
व्याख्यान्तं विविधविशिष्टशिष्यमध्ये ॥ १६.५०

अतः अतीवगहनार्थं वेदयता ऐतरेयोपनिषद्भाष्येण उपनिषत्प्रपञ्चस्य रहस्यसर्वस्वं अनावृतमस्ति । भगवतः सर्वशब्दवाच्यत्वं, बृहतीसहस्र-महिमा, विष्णुनाम्नो वैभवं चेवमादीनि प्रधानप्रमेयाणि विशिष्टतया प्रतिपादितानि ऐतरेयोपनिषद्भाष्ये ।

## उपनिषत्सु केचन द्वैतवेदान्तदर्शनप्रमेयाः

**ईश–केन–कठ–प्रश्न–मुण्ड–माण्डूक्य–तित्तिरिः ।**
**ऐतरेयं च छान्दोग्यं बृहदारण्यकमेव च ॥**

इति समग्रस्यापि वेदान्तदर्शनस्य जीवातुभूताः इमा दशोपनिषदः प्रसिद्धाः सन्ति । प्रसिद्धास्वासु दशसु उपनिषत्सु स्थानं अलभमानाः अपि एतासां समकक्षातां भजन्त्यः वेदान्तदर्शनस्य पोषकविषयवाक्यानि समर्पयन्त्यः इतराः अपि श्वेताश्वतरोपनिषदादयः विलसन्ति । अत्रापि उपनिषत्खण्डे द्वैतवेदान्तदर्शनस्य प्रमेयाः सुलभदर्शनाः इति निरूपयितुमयमुपक्रमः । तत्रादौ उपनिषत्सु विक्षिप्य प्रतिपादितानां प्रयेमाणां बुद्धौ स्थिरीकरणाय ताः क्रोडीकृत्य वक्ष्यामः ।

### द्वैतवेदान्तदर्शनस्य मुख्यप्रमेयाः

I. १. परब्रह्मणस्सर्वोत्तमत्वम् २. ब्रह्मणः स्वतन्त्रत्वम् ३. ब्रह्मणः सर्वगुणपूर्णत्वम् ४. ब्रह्मणः परस्परविरुद्धधर्मवत्वं ५. सृष्ट्याद्यष्टकर्तृत्वम् ६. सर्वशब्दवाच्यत्वम् ७. साकल्येन अज्ञेयत्वम्

II. १. जगत्सत्यत्वम् २. त्रिगुणात्मकप्रकृतेः उपादानकारणत्वम् ३. सदसत्कार्यवादः

III. १. जीवत्रैविध्यम् २. जीवस्य अनादिनित्यत्वम् ३.पराधीनविशेषावाप्तिरूपोत्पत्तिमत्त्वम् ४. जीवस्य स्वरूपसत्ताप्रमितिषु भगवदधीनत्वम्

IV. १. भेदस्य सत्यत्वम् २. भेदस्य धर्मिस्वरूपत्वम् ३. भेदपञ्चकम्

V. १. भगवत्प्रसादस्य मुख्यतः मोक्षसाधनत्वम् २. मोक्षस्य स्वस्वरूपानन्दाभिव्यक्तिरूपत्वम्

VI. १. ज्ञानकर्मणोः परस्परोपकारकत्वम् २. इन्द्रियजयस्य सदाचाराणां च अन्तःकरण शुद्धिद्वारा मोक्षसाधनत्वम् ।

इति एतान् प्रमेयान् संक्षेपतः उपनिषद्वाक्यैरेव प्रदर्शयिष्यामः ।

## ईशावास्योपनिषत्

१. 'ईशावास्यमिदं' सर्वं इति उपनिषदः आरम्भे एव भगवतः सर्वत्र व्याप्तत्वं, स्वतन्त्रत्वं च प्रतिपादितम् ।

तथा चोक्तं ब्राह्मे–

**स्वतः प्रवृत्यशक्यत्वात् ईशावास्यमिदं जगत् ।**
**प्रवृत्तये प्रकृतिगं यस्मात् स प्रकृतीश्वरः ।** (ई.उ.भा. मं.१)

२. कुर्वन्नेवेहेति द्वितीयमन्त्रे च इह मानुषादिजन्मनि यावत् जिजीविषेत् जीवितुमिच्छेत् तावत् शतं समाः कर्माणि कुर्वन्नेव जीवेत् । आमरणं भगवत्पूजात्मकानि असंकल्पितफलानि स्वोचितानि कर्माणि सर्वथा कुर्यात् इति वदन्तीयमुपनिषत् कर्मणां भगवत्पूजात्वेन सर्वदा कर्तव्यत्वं प्रतिपादयति इति स्पष्टम् ।

३. कविर्मनीषी परिभूस्वयंभूः इत्यष्टमे मन्त्रे कविः इत्यस्य सर्वज्ञः इत्यर्थः । मनीषी इत्यस्य प्रकृत्यादिसर्वमनसां ईशितृत्वात् मनीषी । एतेन ज्ञानाविनाभूतदेहः परमात्मा इति लभ्यते । स च अप्राकृतः एव ।

अनाद्यनन्तसंवत्सरेषु याथातथ्येन चराचरात्मकपदार्थान् ''व्यदधात्'' निर्ममे इत्युक्त्या ब्रह्मणि आरोपितत्वात् अर्थानां न तत्सृष्टौ देहाद्यपेक्षा इति चोद्यं निरस्तम् ।

शाश्वतीभ्यः समाभ्यः इत्युक्त्या च 'सदा देहहीनस्यापि सृष्टिसमये देहोपादानेनास्तु सृष्टिः' इति चोद्यं निरस्तं इति ध्येयम् । सृष्ट्यादि-प्रवाहस्य अनाद्यनन्तकालीनत्वात् ।

तथा चोक्तं वाराहे—

**स सत्यं जगदेतादृङ् नित्यमेव प्रवाहतः ।**
**अनाद्यनन्तकालेषु प्रवाहैकप्रकारतः ॥**
**नियमेनैव ससृजे भगवान् पुरुषोत्तमः ।**
**एवम्भूतो महाविष्णुः यथार्थं जगदीदृशम् ।**
**अनाद्यनन्तकालीनं ससर्जात्मेच्छया प्रभुः ॥** इति ।

(ई.उ.भा.–मं.८)

अनेन मन्त्रेण भगवतोऽप्राकृतशरीरत्वं, जगतः सत्यत्वं अनाद्यनन्त-कालीनसत्यजगत्सृष्टिकर्तृत्वं, च स्फुटं प्रतिपादितम् ॥

## केनोपनिषत्

सामवेदस्य तलवकारशाखान्तर्गतत्वात् अस्याः उपनिषदः तलव-कारोपनिषदिति नाम । ''केन'' इति शब्देन चारब्धत्वात् केनोपनिषदिति च नामान्तरं प्रसिद्धम् ।

**चतुर्मुखब्रह्मणः रुद्रदेवस्य च संवादरूपेयमुपनिषत् ।**

तथा चोक्तं—

**वैजयन्ते समासीनमेकान्ते चतुराननम् ।**
**विष्णोर्बिविदिषुस्तत्त्वं पर्यपृच्छत् सदाशिवः ॥** इति ।

(केन भाष्ये उदाहृतम् , प्र.खं. मं.१)

अस्यां केनोपनिषदि प्रथममन्त्रे—

१. **केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः ।**
**केनेषितां वाचमिमां वदन्ति चक्षुश्श्रोत्रं क उ देवो युनक्ति ॥**

(केन. खं.१, मं.१)

इति मनसः इन्द्रियाणां च भगवदधीनत्वम् प्रतिपादितम् ।

तथा हि– जीवाधीनं मनः केन प्रेरितं सत् बलात्कारेण विषयान् प्रति पतति इति रुद्रेण पृष्टे ब्रह्मणा समाहितम् ।

**श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचम्**
**स उ प्राणस्य प्राणः ।** इति । (केन. खं.१, मं.२)

स च प्राणादिप्रेरकः विष्णुरेव इत्युक्तं पुराणे ।

**प्राणादीनां प्रणेता च सर्ववेत्ता च सर्वशः**
**सर्वोत्तमश्च सर्वत्र स विष्णुरिति धार्यताम् ॥** इति ।

(केनभाष्ये उदाहृतम्, खं.१, मं.९)

तथैव श्रोत्रादीन्द्रियाणां तत्तत्कार्यशक्तिः भगवतैव नियन्त्रिता इत्यपि प्रतिपादितम् भवति ।

**२. न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः ।**
**न विद्म न विजानीमो यथैतदनुशिष्यात् ॥** (केन. खं.१,मं.३)

इति मन्त्रे भगवतः चक्षुरादीन्द्रियागोचरत्वं निरूपितम् ।

तदेवोत्तरत्र "यद्वाचा अनभ्युदितं येन वागभ्युद्यते" इत्यादिमन्त्रपञ्चके पञ्चेन्द्रियैः ब्रह्मस्वरूपं साकल्येन अवगन्तुम् अशक्यं इति निरूप्य, जीवब्रह्मणोः भेदस्य पौनःपुन्येन प्रतिपादितत्वात् जीवब्रह्मणोर्भेदे एव अस्याः श्रुतेः तात्पर्यं इति विज्ञायते ।

३. 'अविज्ञातं विजानतां विज्ञातमविजानताम्' इत्यत्र ब्रह्मणः साकल्येन ज्ञानं न कस्यापि भवति । स्वस्वयोग्यतानुसारेण ब्रह्म ज्ञात्वा अधिकारी अमृतत्वं प्राप्नोति इति स्पष्टीकृतम् ।

अस्याः उपनिषदः उपसंहारे "उपनिषदं भो ब्रूहि" इति शिष्यप्रार्थनां निरूप्य "ब्राह्मीं वाव त उपनिषदं अब्रूम" इति उपनिषदां ब्रह्मविद्यात्वं प्रकटीकृतम् ।

एवञ्चोपनिषदियम् "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" इति न्यायेन पुराणप्रमाणपुरस्सरं परिशील्यते चेत् द्वैतवेदान्तीयप्रमेयानेवोद्गिरति इत्यत्र न सन्देहः ।

## काठकोपनिषत्

काठकोपनिषदि श्रेयोमार्गस्य प्रेयोमार्गस्य च फलभेदः स्पष्टीकृतः ।

**अन्यत् श्रेयोऽन्यदुतेव प्रेयः ते उभे नानार्थे पुरुषं सिनीतः ।**
**तयोः श्रेयः आददानस्य साधु भवति हीयते अर्थात् य उ प्रेयो**
**वृणीते ॥** (कठोपनिषत्, अध्याय१, वल्लि१)

इत्यादिना श्रेयोमार्गप्रेयोमार्गयोः फलं भिन्नम्, यः श्रेयोमार्गमनुसरति तस्य मोक्षरूपं साधुफलं भवति । यः प्रेयोमार्गमनुसरति सः इह जन्मनि योगक्षेममात्रं प्राप्नोति इति प्रतिपादितम् । तदुक्तमत्रैव उपनिषदि—

**श्रेयो धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमान् वृणीते ॥**

(कठ. अ.१, व.२, मं.१)

इति ब्रह्मज्ञानस्य दुर्लभत्वं च निरूपितम् ।

**श्रवणायापि बहुभिर्योन लभ्यः श्रुण्वन्तोपि बहवो यं न विद्युः ।**
**आश्चर्योस्य वक्ता कुशलोस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः ॥**

(कठ. अ.१, व.२, मं.७)

इति श्रेष्ठगुरोः प्राप्तिः दुर्लभा । कुशलशिष्यस्यापि प्राप्तिः दुर्लभा । श्रेष्ठगुरूपदेशेनैव परमात्मनः ज्ञानं भवति, न तु यस्य कस्यचित् पण्डितंमन्यस्योपदेशेनेत्येतत् अवगम्यते ।

ब्रह्मज्ञानं तर्केणासादयामि इति चिन्तयतां चेतश्चेतयति । ''नैषा तर्केणमतिरापनेया'' इति । एषा = ब्रह्मविषयिणी संवित् ।

सर्वैः वेदैः परमात्मैव प्रतिपाद्यते । सर्वाणि च तपांसि तज्ज्ञानार्थमेव क्रियन्ते इत्येतत् ''सर्वे वेदा यत्पदमामनन्ति'' (कठ. २.१५) इत्यनेन मन्त्रेण निरूपितम् ।

**एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् ।**
**एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥**

(कठ. अ.१, व.२, मं.१६)

**एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ।**
**एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥**

(कठ. अ.१, व.२, मं.१७)

इत्यादिना च यमः नचिकेतसे अक्षरब्रह्मस्वरूपं विशदयन् ओंकारवाच्यः भगवानेव सर्वोत्तमः सर्वाश्रयः सर्वान्तर्यामी च इति एतन्मन्त्रद्वयेन प्रतिपादयामास । एतच्च भगवतः सर्वाधारत्वे स्पष्टं प्रमाणं भवितुमर्हति ।

**अणोरणीयान् महतो महीयान् आत्माऽस्य जन्तोर्निहितो गुहायाम् ।**
**तमक्रतुः पश्यति वीतशोकः धातुः प्रसादात् महिमानमात्मनः ॥**

(कठ. अ.१, व.२, मं.२०)

**आसीनो दूरं व्रजति शयानो याति सर्वतः ।**
**कस्तं मदामदन्देवं मदन्यो ज्ञातुमर्हति ॥** (कठ. अ.१, व.२, मं.२१)

इत्यादिना भगवान् सूक्ष्मादपि सूक्ष्मः, महतोऽपि महान्, जीवान्तर्यामी, सः आसीनः एव दूरं व्रजति, शयानः एव सर्वतः यातीत्युच्यते ।

अनेन भगवतः विरुद्धधर्माधिकरणत्वं स्फुटं प्रतिपादितं भवति । विरुद्धपरिमाणकत्वं, विरुद्धक्रियावत्वं च भगवतः अचिन्त्याद्भुतशक्त्या उपपद्यते ।

**नायमात्मा प्रवचनेन लभ्यः न मेधया न बहुना श्रुतेन ।**
**यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥**

(कठ. अ.१, व.२, मं.२३)

इत्यनेन च परमात्मनः ज्ञानं न केवलं प्रवचनेन, नापि बहुशास्त्रश्रवणेन, न वा बुद्धिशक्त्या प्राप्तुं शक्यं किं तु भगवतः प्रसादेनैव भगवज्ज्ञानस्य प्राप्तिः भवतीति स्फुटं प्रतिपाद्यते ।

**नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।**
**नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥**

(कठ. अ.१, व.२, मं.२४)

यो दुराचारतो दूरं न भवति, भगवति च आसक्तिं न दर्शयति, यश्च विषयसुखाद्विमुखो न भवति सः भगवत्प्रसादं न प्राप्नोति इति सदाचारस्य ज्ञानप्राप्तिद्वारा भगवत्प्रसादसाधनत्वं स्फुटं निरूप्यते ।

**आत्मानं रथिनं विद्धि शरीरं रथमेव च ।**
**बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥** (कठ.अ.१,व.३,मं.३)

अत्र इन्द्रियनिग्रहस्य आवश्यकता रथरूपकेण निरूपिता ।

**अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ।**
**अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥**

(कठ. अ.१,व.३,मं.१५)

परमात्मनः स्वरूपं प्राकृतगुणादिरहितं इत्येतत् अशब्दम्, अस्पर्शम्, अरूपम्, अरसम्, अगन्धवत् इत्येतैः पदैः निरूप्यते ।

**स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति ।**
**महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥**

(कठ. अ.२, व.१, मं.३)

अत्र जाग्रत्, स्वप्न, सुषुप्तिरूपावस्थात्रयं भगवतः अधीनं इति स्फुटं निरूप्यते ॥

**न तत्र सूर्यो भाति न चन्द्रतारकम् ।**
**नेमा विद्युतो भान्ति कुतोऽयमग्निः ॥**

**तमेव भान्तमनुभाति सर्वम् ।**
**तस्य भासा सर्वमिदं विभाति ॥** (कठ. अ.२,व.२,मं.१५)

सूर्यचन्द्रनक्षत्रादयः भगवतः सकाशदेव प्रकाशं प्राप्नुवन्ति न तु स्वशक्त्या इति प्रमेयोऽत्र निरूपितः । एवं कठोपनिषदि परमात्मनः स्वरूपं विशदतया वर्णितम् ।

## षट्प्रश्नोपनिषत्

द्वितीयप्रश्ने द्वैतवेदान्तस्य मुख्यप्रमेयेषु अन्यतमन्मुख्यप्राणस्य जीवोत्तमत्वं स्फुटं प्रतिपादितम् ।

''तान् वरिष्ठः प्राण उवाच इत्यारभ्य तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रमन्ते तस्मिंश्च प्रतिष्ठमान सर्व एव प्रतिष्ठन्ते'' इति मुख्यप्राणसन्निधानात् सर्वेषां स्थितिः तदभावे सर्वेषां स्थित्यभावः इति सर्वदेवतानां मुख्यप्राणाधीनत्वं, मुख्यप्राणस्य श्रेष्ठत्वं च प्रतिपादितम् ।

चतुर्थप्रश्ने जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयस्थस्वरूपं निरूप्य भगवदधीनत्वं उपस्थापितम् ।

**अत्रैष देवः स्वप्ने महिमानमनुभवति ।**
**यद्दृष्टं दृष्टमनुपश्यति श्रुतं श्रुतमेवार्थमनुशृणोति**
**देशदिगन्तरे च प्रत्यनुभूतं पुनःपुनः प्रत्यनुभवति ।**
**दृष्टं चादृष्टं च श्रुतं चाश्रुतं चानुभूतं चाननुभूतं**
**च सच्चासच्च सर्वं पश्यति सर्वः पश्यति ।**
**स यदा तेजसाभिभूतो भवत्यत्रैव देवः स्वाप्नान्न पश्यति ।**
**अथ यदेतस्मिन् शरीरे सुखं भवति ॥** (षट्प्रश्न प्रश्न.४, मन्त्र.४)

**स यथा सोम्य वयांसि वासो वृक्षं सम्प्रतिष्ठन्ते ।**
**एवं ह व तत्सर्वं परे आत्मनि सम्प्रतिष्ठते ।** (षट्. प्र.४, मन्त्र.५)

## आथर्वणोपनिषत्

अस्यां उपनिषदि **"द्वे विद्ये वेदितव्ये इति ह स्म यत् वेदविदो वदन्ति"** इति विद्यायाः द्वैविध्यमुक्तम् । (आथर्वण खं.१, मन्त्र.४)

ऋग्वेदादिवेदाः शिक्षादिवेदाङ्गानि च सर्वाण्यपि यदा विष्णुपराणि तदा तानि परविद्यासंज्ञकानि यदा च विष्ण्ववाचकानि तदा तु अपर-विद्यासंज्ञकानि इत्ययं अपूर्वविषयोऽपि प्रस्तुतः ।

तथा ब्रह्ममीमांसाशास्त्रस्य च मुख्यतया परविद्यात्वं च अत्र प्रतिपादितम् ।

तदुक्तं परमसंहितायां

**ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः**
**ता एव परमा विद्या यदा विष्णोस्तु वाचकाः ॥**
(आथर्वण भाष्योऽदाहृत परमसंहिता वचनम् खं.१, मन्त्र.४)

**यत् तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं**
**तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मम् ।**
**यद्भूतयोनिं परिपश्यन्ति धीराः ॥** (आथ. खं.१, मन्त्र.६)

इत्यनेन अक्षरशब्दवाच्यस्य परब्रह्मणः स्वरूपमुपपादितम् । तथा अधस्थादुल्लिखिताः भगवतः असाधारणधर्माः अत्र कथिताः ।

१) अद्रेश्यत्वम् – दृष्ट्युपलक्षितबाह्येन्द्रियाविषयत्वं

२) अग्राह्यत्वम् – अनुमानाद्यवेद्यत्वम्

३) अगोत्रत्वम् – भारद्वाजादिप्रसिद्धगोत्रशून्यत्वम्

४) अवर्णत्वम् – ब्राह्मणादि वर्णरहितत्वम् प्राकृतभौतिकशुक्लादि-वर्णरहितत्वं वा ।

५) अचक्षुःश्रोत्रत्वम् – जडज्ञानेन्द्रियरहितत्वम्

६) अपाणिपादत्वम् – जडकर्मेन्द्रियरहितत्वम्

७) नित्यत्वम् – स्वरूपतः देहतश्च अविनाशित्वम्

८) विभुत्वम् – सर्वस्वामित्वम्

९) सर्वगतत्वम् – सर्वव्यापित्वम्

१०) सुसूक्ष्मत्वम् – जीवादपि अतिशयेन सूक्ष्मत्वम्

११) अव्ययत्वम् – गुणतो नाशशून्यत्वं अथवा "जायते अस्ति वर्धते विपरिणमते अपचीयते विनश्यति" इति वाक्योक्तषड्भावविकार-रहितत्वं इति ।

सृष्टिप्रक्रियाऽपि अस्यां उपनिषदि निरूपिता ।

**१. यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति ।**
**यथा सतः पुरुषात् केशलोमानि तथाक्षरात् सम्भवतीह विश्वम् ॥**

(आथ. खं.१, मन्त्र.७)

यथा ऊर्णनाभ्युपभुक्तान्नपरिणततच्छरीरधातवः तन्त्वाकारेण परिणताः भवन्ति । तत्र ऊर्णनाभिः कर्ता भवति । तथा महाप्रलये परमेश्वरेण निगीर्णं महदादिकार्यं तच्छरीररूपप्रधानतां गच्छति । तत्र प्रधानं पुनः

महदाद्याकारेण परिणमते तत्र ईश्वरः कर्ता भवति । न उपादानकारणं इत्याशयेन अयमूर्णनाभिदृष्टान्तः श्रुतावुपात्तः ।

२. यथा पृथिवी शाल्यादिनानाबीजान्यपेक्ष्य नानाविधान् अङ्कुरान् जनयति तथा जीवानां नानाविधकर्माण्यनुसृत्य नानाविधजीवान् सृजति । तथा च वैषम्यनैर्घृण्ये न ईश्वरस्येत्याशयेनायं द्वितीयः दृष्टान्तः ।

३. भगवतः सृष्टिरनायासेन न तु कुलालवत् क्लेशेन इति दर्शयितुं तृतीयः दृष्टान्तः ।

यथा पुरुषाणां केशलोमानि अनायासेन भवन्ति, तथा भगवतः सकाशात् जगदप्यनायासेन सम्भवति इति ।

एवं भगवतः निमित्तकारणत्वं, वैषम्यनैर्घृण्याभावः, अनायासेन जगत्स्रष्टृत्वं च श्रुत्या एव प्रतिपादितम् ।

एवमेव सर्वाः देवताः परमात्मनः अङ्गेभ्यः सृष्टाः इत्यपि निरूपितम् ।

तथा हि—

**अग्निर्मूर्धा चक्षुषि चन्द्रसूर्यौ दिशः श्रोत्रो वाग्विवृताश्च वेदाः ।**
**वायुःप्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष भूतान्तरात्मा ॥**

(आथ. खं.२, मन्त्र.४)

अत्र भगवतः सर्वदेवताजनकत्वं, सर्वदेवतानां आश्रयत्वं च प्रतिपादितम् ।

अग्निस्त्वस्य मूर्ध्नो जायते । न तु अग्न्यादीनां तन्मूर्धाद्यवयत्वमिहाभिप्रेतम् । सृष्टिप्रकरणस्य प्रक्रान्तत्वात् । यथा 'ब्राह्मणोऽस्य मुखमासी'दित्यत्र ब्राह्मणत्वजातेः जनकत्वात् मुखस्य ब्राह्मणत्वोक्तिः

तथैवेहापि अग्न्यादीनां मूर्धादिजन्यत्वात् 'अग्निर्मूर्धा'' इत्यादिव्यपदेशः इति ज्ञातव्यम् ।

## माण्डूक्योपनिषत्

''ॐ इत्येतदक्षरं सर्वं तस्योपव्याख्यानम् भूतं भवद् भविष्यदिति'' इति वाक्येनेयमुपनिषत् प्रारभ्यते ।

**''सर्वं ओङ्कार एव यच्चान्यत् त्रिकालातीतं तदपि ओङ्कार एव सर्वं ह्येतत् ब्रह्म अयमात्मा ब्रह्म''** इति ब्रह्मणः गुणपूर्णत्वसर्वाधारत्वरूपं स्वरूपं प्रतिपादितम् । (माण्डूक खं.१ मन्त्र.२)

'सर्वं हि एतत्' इति वाक्यं ब्रह्मजगतोः ऐक्यं न प्रतिपादयति ।

अत्र निरूपितस्य आत्मनः वैश्वानरः तैजसः प्राज्ञः तुरीयश्च इति चत्वारः पादाः निरूपिताः । एते चत्वारः भगवतः स्वरूपरूपाण्येव ।

तथैव अस्यामुपनिषदि सृष्टेः कारणं सृष्टिप्रक्रिया च निरूपिता ।

**''इच्छामात्रं प्रभोः सृष्टिः इति''** (मा. खं.१, मन्त्र.१४)

भगवतः इच्छा एव सृष्टेः कारणं इति स्पष्टीकृतम् । अस्मिन् विषये पराभिमताः अभिप्रायाः निरूप्य निराकृताः ।

तथा हि–

ब्रह्मपरिणामवादिनः सृष्टिं ब्रह्मणः विभूतिं मन्यन्ते । प्रपञ्चविवर्तवादिनश्च **''इन्द्रजालसदृशीयं सृष्टिरिति''** प्रमाणं विना स्वमनीषयैव कल्पयामासुः । **''कालात् प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः''** (मा. खं.१,मन्त्र.१४) इत्यनेन भूतानां सृष्टिः कालतः एव भवति न तु

तत्र परमेश्वरापेक्षा इति केचिन्मन्यन्ते । "भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे" (मा.खं.१, मन्त्र.१८) इत्यत्र प्रलये भोग्याभावात् भोगाभावेन अतृप्तस्य हरेः भोगार्थं सृष्टिरित्यन्ये मन्यन्ते । अपरे तु प्रलये क्रीडासाधनाभावेन आलस्यात् तत्परिहारमुद्दिश्य क्रीडार्थं सृष्टिरिति मन्वते । इति विविधपूर्वपक्षान् निरूप्य श्रुतिः स्वयमेव स्वमतं प्रकटयति ।

'देवस्यैष स्वभावोऽयं आप्तकामस्य का स्पृहा' इति ।

(मा. खं.१, मन्त्र.१८)

अयं सृष्ट्यादिविविधव्यापारः ईश्वरस्य स्वभावः एव न तु पूर्णकामस्य ईश्वरस्य आनन्दकामनया सृष्ट्यादौ प्रवृत्तिः ।

**"प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।**
**मायामात्रमिदं द्वैतं अद्वैतं परमार्थतः ।"** (मा. खं.२, मन्त्र.९)

इति मन्त्रेण पञ्चभेदाः समर्थिताः । अत्रत्यप्रपञ्चशब्दस्य पञ्चभेदः इत्यर्थः । अस्मिन् मन्त्रे मायामात्रमिदं द्वैतं इत्यनेन यद्यपि आपाततः भेदस्य मिथ्यात्वं तथा ऐक्यस्य परमार्थत्वं प्रतिभाति तथापि नायं मन्त्रार्थः, किन्तु अत्र द्वैतपदेन अन्यथाज्ञानमुच्यते अद्वैतपदेन यथार्थ-ज्ञानमुच्यते । महद्भिः यत् अनन्यथा ज्ञातं, तथा अज्ञैः यत् अन्यथाज्ञातं तत्सर्वं परमार्थशब्दवाच्यात् ईश्वरादेव भवति इति अस्य मन्त्रस्यार्थः ।

**विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।**
**उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ।** (मा. खं.२, मन्त्र.१०)

इत्यस्मिन् मन्त्रे द्वैतस्य सत्यत्वं समर्थितम् । अत्र विकल्पशब्दस्य भेदः इत्यर्थः ।

भेदः यदि कल्पितः स्यात् तदा निवर्तेत न च निवर्तते, अतः भेदः सत्यः एव इति भेदस्य सत्यत्वं तर्कमुद्रया निरूपितम् ।

## तैत्तिरीयोपनिषत्

**ब्रह्मविदाप्नोति परम् । तदेषाऽभ्युक्ता । सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान्त्सह । ब्रह्मणा विपश्चिता ॥** (तैत्तिरीयवल्ली.२ मं.२)

इति तैत्तिरीयोपनिषदि ब्रह्मवल्ल्यां प्रथममन्त्रे ब्रह्मलक्षणं निरूप्य तादृशब्रह्मज्ञाने सत्येव ज्ञानी मोक्षं प्राप्नोति इत्युक्तम् ।

तथा मोक्षे मुक्तस्य आप्तकामत्वं, जीवब्रह्मणोः भेदश्च अस्मिन्नेव मन्त्रे प्रतिपाद्यते ।

किञ्च "सत्यं ज्ञानं अनन्तं ब्रह्म" इति ब्रह्मणः जगत्सृष्ट्यादिकर्तृत्वं, स्वपरगताशेषविशेषविषयकज्ञानवत्वं, देशतःकालतःगुणतश्च अपरिच्छिन्नत्वं अत्र प्रतिपादितम् ।

अस्यामेवोपनिषदि सृष्टिप्रक्रिया अपि निरूपिता

**"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः ।**
**आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी"**

(तैत्ति. व.२ मं.३)

पूर्वमन्त्रे सत्यं, ज्ञानं, अनन्तं ब्रह्म इति ब्रह्मणः अनेकानि लक्षणानि उक्तानि । सत्यमित्यनेन ब्रह्मणः जगत्सृष्ट्यादिकर्तृत्वमुक्तम् । तदेव विशदीक्रियते "तस्माद्वा एतस्मादात्मनः" इति मन्त्रेण ।

ब्रह्मणः सकाशात् आकाशादीनां क्रमेण जन्मात्र उच्यते । अत्र तस्मादिति पञ्चमीनिर्देशेन ब्रह्मणः आकाशादीन् प्रति निमित्तकारणत्वमवगम्यते ।

अथ सृष्टिप्रक्रियां निरूप्य श्रुतिः परमात्मनः अन्नमयादि पञ्च रूपाणि विशदयति । द्वैतमतानुसारेण एतानि परमात्मनः पञ्चरूपाण्येव, न तु कोशाः ।

**"सोऽकामयत बहुस्यां प्रजायेयेति स तपोऽतप्यत । स तपस्तप्त्वा इदं सर्वमसृजत । यदिदं किञ्च । तत् सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च निलयनं चानिलयनं च । विज्ञानं चाविज्ञानं च सत्यं चानृतं च सत्यमभवत् । यदिदं किञ्च तत् सत्यमित्याचक्षते"** इति प्रकारान्तरेणाप्यत्र भगवतः सृष्टिप्रक्रिया निरूपिता ।

अस्यां प्रक्रियायां आकाशादिपदार्थं सृष्ट्वा तदनुप्रविश्य वाय्वादीनां उत्पत्तौ अवान्तरं कारणं भगवानेव बभूवेति व्यक्तमवगम्यते ।

तथा च भगवतः प्रधानकारणत्वं, अवान्तरकारणत्वं च विद्यते इति सिद्धम् ।

किञ्च "सच्च त्यच्चाभवत्" इत्यनेन भगवतः तत्तन्नामवत्वं च विज्ञायते । आकाशं सृष्ट्वा आकाशं अनुप्रविश्य वायुं प्रत्यवान्तरकारणत्वात् । भगवतः आकाशशब्दवाच्यत्वम् । एवं वायुं सृष्ट्वा वायुमनुप्रविश्य अग्निं प्रत्यवान्तरकारणत्वात् भगवतः वायुशब्दवाच्यत्वम् इत्येवं स्वप्रविष्टनामवत्त्वमवगम्यते ।

अथ मुमुक्षूणां मुक्तानां च आनन्दस्य मीमांसां निरूप्य आनन्दतारतम्यं प्रकाशितम् ।

सैषाऽनन्दस्य मीमाँसा भवति युवा स्यात् साधु युवाध्यायकः
(तैत्ति. व.२ मं.१७)

'स एको मानुष आनन्दः' इत्यनेन मुमुक्षूणां आनन्दे तारतम्यमुक्तवा 'ते ये शतं मानुषा आनन्दाः' इत्यनेन मुक्तानां च आनन्दे तारतम्यं श्रुत्या एव स्फुटं प्रतिपादितम् ।

## श्वेताश्वतरोपनिपत्

श्वेताश्वतरोपनिषदि ब्रह्मणः कारणं किं इति प्रश्नः उद्घाटितः ।

**ब्रह्मवादिनो वदन्ति ।**

**किं कारणं ब्रह्म कुतस्म जाताः जीवाम केन क्व च सम्प्रतिष्ठा ।**
**अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम् ।।**
इति । (श्वे. अ.१ मं.१७)

अस्य प्रश्नस्य सम्भावितोत्तररूपेण कानिचन कारणानि निर्दिष्टानि । **''कालः स्वभावः नियतिः यदृच्छा भूतानि योनिः पुरुषः इति चिन्तया''** इत्यनेन वाक्येन कालादीनां कारणत्वं यत् अन्यैः निरूपितं तत् निराक्रियते ।

तथैव ''संयोग एषां न तु आत्मभावात्'' इत्यनेन एषां संयोगस्य कारणत्वं प्रस्तूय तदपि न शक्यते इत्युच्यते ।

एवमेव जीवात्मनः कारणत्वं प्रस्तूय तदपि ''आत्माऽप्यनीशः सुखदुःखहेतोः'' इत्यादिना निराकृत्य अन्ते देवात्मशक्तिरेव कारणं इति निरूपितम् ।

**ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम् ।**
**यः कारणानि निखिलानि तानि कालात्मयुक्तानि अधितिष्ठत्येकः ।।**

(श्वे. अ.१ मं.३)

अस्यां उपनिषदि कालादीनां कारणत्वं सर्वथा न निराकृतं किन्तु स्वातन्त्र्येणैव कारणत्वं निराकृतम् । परमात्माधीनतया कारणत्वं निरूपितं च ।

अयमेवाभिप्रायः भागवते—

**द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।**
**यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया ।**

इति श्रुतिं प्रमाणत्वेन उदाहृत्य विशदीकृतः ।

अस्यामेवोपनिषदि

**द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।**
**तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्ननन्योऽभिचाकशीति ।**

(श्वे. अ.४ मं.६)

इति अस्यवामीयसूक्तोक्तः जीवब्रह्मणोः भेदस्य स्फुटप्रतिपादकः मन्त्रः पुनःपठितः ।

**"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।**
**कर्माध्यक्षः सर्वभूताधिकश्च साक्षी चेता केवलो निर्गुणश्च ।।"**

(श्वे. अ.६ मं.११)

इत्यनेन परमात्मनः सर्वव्यापित्वं कर्माध्यक्षत्वं, प्राकृतगुणरहितत्वं च प्रतिपादितम् ।

**"तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था अयनाय विद्यते ।"**

(श्वे. अ.६ मं.१५)

इति ब्रह्मज्ञानस्यैव मोक्षसाधनत्वं प्रतिपादितम् ।

**"नित्यो नित्यानां चेतनश्चेतनानां एको बहूनां यो विदधाति कामान् ।**
**तत्कारणं साङ्ख्ययोगादिगम्यं ज्ञात्वा देवं मुच्यते सर्वपापैः ॥"**

(श्वे. अ.६ मं.१३)

**एवं "न तस्य कार्यं करणं च विद्यते न तत् समश्चाभ्यधिकश्च दृश्यते ।**
**परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकीज्ञानबलक्रिया च ॥"**

(श्वे. अ.६ मं.८)

"यो देवानामधिपः" "यस्मिन् लोका अधिश्रिताः" "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्" "विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरथ विश्वतस्पात्" "अणोरणीयान् महतो महीयान्" "न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चिदेनम् । हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति ॥" इत्यादिमन्त्रेषु परमात्मनः स्वरूपं वर्णितम् ।

**यस्य देवे पराभक्तिः यथा देवे तथा गुरौ ॥** (श्वे. अ.६ मं.२३)

इत्यत्र भक्तेः आवश्यकता निरूपिता ।

**"तपःप्रभावात् देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽयं विद्वान् अत्याश्रमेभ्यः परमं पवित्रं प्रोवाच सम्यक् ऋषिसङ्घजुष्टः"** इत्यत्र परमात्मनः प्रसादस्य उल्लेखः दृश्यते । (श्वे. अ.१ मं.९)

**ज्ञाज्ञौ द्वावजावीशानीशावजा ह्येका भोक्तृभोगार्थयुक्ता ।**
**अनन्तश्चात्मा विश्वरूपो ह्यकर्ता त्रयं यदा विन्दते ब्रह्म एतत् ॥**

(श्वे. अ.१ मं.९)

इत्यस्मिन् मन्त्रे ज्ञः जीवः परमात्मा च अज्ञा जडस्वरूपभूता प्रकृतिः । एतेषु जीवः भोक्ता प्रकृतिः भोग्या परमात्मा तु अनन्तः विश्वरूपः अकर्ता चेति एतत्त्रयस्य यथावत्स्वरूपज्ञानेन ब्रह्मप्राप्तिर्भवति इति प्रतिपादितम् ।

**''अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।**
**अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगां अजोऽन्यः ॥''**

(श्वे. अ.४ मं.५)

इति मन्त्रे सत्वरजस्तमोगुणात्मिका प्रकृतिः अजाशब्देन निरूपिता । अजो नाम जीवः प्रकृतिजन्यपदार्थानां भोगं करोति इति प्रतिपादितम् ।

## छान्दोग्योपनिषत्

''सर्वं खलु इदं ब्रह्म'' ''तज्जलान् इति शान्त उपासीत'' इत्यत्र प्रलयोदके परमात्मनः स्वातन्त्र्येण प्रवर्तमानत्वं तज्जलानिति वाक्येन सूचितम् । (छा. अ.३ खं.१४ मं.१)

तत् ब्रह्म जलं प्रलयोदकं अनिति चेष्टमानं आस्ते इति तज्जलान् ।

प्रलयोदके ''तदेकं'' सर्वोत्तमं 'अवातं' वातप्रेरणया विनैव 'स्वधया' सुखेनैव 'आसीत्' अचेष्टत तस्मादन्यत्परः किञ्चन न आस ।

'तमः' चेतनप्रकृत्यात्मकं अग्रे आसीत् ।

तच्चोक्तं पुराणे

**तच्च ब्रह्म जलान् साक्षात् योऽसौ विष्णुर्जलानिति ।**
**आनीदवातं इति यं वेदवागवदत् स्फुटम् ॥**

(छान्दोग्यभाष्योदाहृतप्रमाणम्)

सत्यकामजाबालप्रकरणे ''आचार्याद्देव विद्या विदिता साधिष्ठं प्रापयति'' इति गुरोः महिमा उपवर्णिता ।

एवमेव उपकोसलप्रकरणेऽपि आवहनीयाद्यग्निदेवतादिभिः पृथिव्यादिगत परमात्मरूपमेव उपदिष्टं आसीत् किन्तु पुनः गुरुणा अक्ष्यन्तस्थस्य पुरुषस्य उपदेशः कृतः । एतेन गुरूपदेशस्य श्रेष्ठत्वं ज्ञापितं भवति ।

**''लोकाः किल सोम्य ते अवोचन् अहं ते तद्वक्ष्यामि यथा पुष्कर-पलाशे आपो न श्लिष्यन्ते एवं विदि पापं कर्म न श्लिश्यति'' ।**

**''य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष होवाच एतदमृतं अभयं एतद् ब्रह्म एतस्मिन्नकिञ्चन श्लिष्यती''ति ।**

उद्दालकश्वेतकेतुसंवादे च एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातं, तच्च दृष्टान्तत्रयेण विशदीकृतम् ।

**१. ''यथा सोम्य एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्''**

(छा. अ.६ खं.१ मं.४)

इत्यनेन दृष्टान्तेन सादृश्यमूलकतया एकविज्ञानेन सर्वविज्ञानं प्रदर्शितम् ।

**२. ''यथा सोम्य एकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्''**

(छा. अ.६ खं.१ मं.५)

इति द्वितीयोदाहरणेन 'प्राधान्येन' एकविज्ञानेन सर्वविज्ञानं प्रदर्शितम् ।

३. **"यथा सोम्य एकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं ...."**

(छा. अ.६ खं.१ मं.६)

इति तृतीयोदाहरणेन कैमुत्येन एकविज्ञानेन सर्वविज्ञानं प्रदर्शितम् ।

तच्चोक्तं—

१. **यथा मृत्पिण्डविज्ञानात् सादृश्यादेव मृण्मयाः ।**
**विज्ञायन्ते स्वतो विष्णोः सादृश्याज्जगदेव च ॥**

२. **यथा स्वर्णस्य विज्ञानात् सर्वे लोहमयास्तथा ।**
**प्राधान्याद्विष्णुविज्ञानात् विज्ञातं स्याज्जगत्सदा ॥**

३. **अत्यल्पेऽपि हि विज्ञाते सदृशे तादृशं बहु ।**
**ज्ञायते नखकृन्तन्या यथा सर्वमयोमयम् ।**
**किमु विष्णोः बहोर्ज्ञानात् अत्यल्पं जगदीदृशम् ॥**

(छान्दोग्यभाष्योदाहृतसामसंहितावचनानि) (अ.६ खं.१ मं.४)

इत्थं परमात्मविज्ञानेन सर्वविज्ञानस्य गतार्थत्वं निरूप्य परमात्मनः प्राधान्यं प्रदर्शयितुं तत्कृतसृष्टिः वर्णिता ।

"सदेव सोम्य इदमग्र आसीत्" "एकमेव अद्वितीयं ब्रह्म" "बहुस्यां प्रजायेयेति" इत्यादिना च विशदीकृतश्च स सृष्टिप्रकारः ।

(छा. अ.६ खं.२ मं.१)

"सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इति परमात्मनः सदायतनत्वं सत्प्रतिष्ठितत्वं च प्रतिपाद्य उपसंहृतम् ।

**"स एषो अणिमा ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत् त्वमसि श्वेतकेतो"** (छा. अ.६ खं.८ मं.७)

इत्यस्मिन् वाक्ये ऐतदात्म्यमित्यनेन परमात्मनः सर्वस्वामित्वं, सर्वस्य तदधीनत्वं च प्रदर्शितम् । अत्र आत्मशब्दस्य स्वामित्वार्थकत्वात् ऐतदात्मकं एतत्स्वामिकं, एतदधीनं इदं सर्वं इत्यर्थो लभ्यते ।

तत्वमसि इत्यनेन जीवस्य परमात्मसदृशत्वं परमात्माधीनत्वं च स्पष्टं प्रतिपादितम् ।

अस्मिन् प्रकरणे नवदृष्टान्तैर्हि जीवपरमात्मनोः भेदः प्रदर्शितः ।

सप्तमेऽध्याये नारदसनत्कुमारसंवादे "नाम ब्रह्मेत्युपासीत" इति नामादिप्रतीकोपासनां निरूप्य "भूमा वै तत्सुखं" इति परमात्मनः पूर्णसुखरूपत्वं प्रतिपादितम् ।

अष्टमे अध्याये प्रजापतीन्द्रविरोचनसंवादे अपरोक्षज्ञानिनां परमात्म-दर्शनप्रकारः प्रदर्शितः ।

## बृहदारण्यकोपनिषत्

### अव्याकृतब्राह्मणे

**"ब्रह्म वा इदं अग्र आसीत् तदात्मानमेव अवेत् अहं ब्रह्मास्मीति ।"**

इत्यत्र ब्रह्मणः अहेयत्वं, गुणपूर्णत्वं च प्रतिपादितम् । अत्र ब्रह्म एव आत्मानं अवेत् इति ब्रह्मोद्दिश्य अहंपदप्रयोगादत्रत्यब्रह्मपदं न जीवपरम्, अपि तु ब्रह्मैव "अहं गुणपूर्णोऽस्मि" इत्युच्यते । "अहं मनुरभवं अहं सूर्यः" इति तस्य मनुभवनं, सूर्यभवनं च यदुक्तं तदपि न युक्तम् । यतः

अस्मिन् प्रकरणे ब्रह्मणैव अहं मनुः मनोरन्तर्यामी, अहं सूर्यः सूर्यान्तर्यामी च अभवं इत्युक्तत्वात् ।

किञ्च पूर्वतने प्राजापत्यब्राह्मणे ''आत्मा वा इदमग्र आसीत्,'' ''पुरुषविदः सोऽहमस्मि'' इति अग्रे व्याहरत् । ततो अहं नाम अभवत् इति अहंपदेन अहमिति ब्रह्मणः एव नामान्तरमिति निरूपितम् । एतस्मादपि कारणात् अत्रस्थोऽहंशब्दः न जीवपरः इति सिध्यति ।

### चतुर्थाध्याये मैत्रब्राह्मणे

''आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ।'' ''मैत्रेयी आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेन इदं सर्वं विदितं'' इति मन्त्रेण आत्मनः श्रवणमनननिदिध्यासनानि विहितानि । वेदान्तदर्शनस्य जीवातुभूतं बीजं अत्रैव निहितं इति तस्य इदमेव प्रधानविषयत्वेन जेगीयते ।

अत्रैव प्रकरणे '' विज्ञानघनः एव एतेभ्यो भूतेभ्यः समुत्थाय तान्येव विनश्यति न प्रेत्य संज्ञा अस्ति'' इत्यत्र अमुक्तानां मुक्तविषयं ज्ञानं नास्ति इति प्रतिपादितम् ।

अत्र 'प्रेत्य' इति शब्दस्य चरमशरीरनाशानन्तरं स्थितस्य मुक्तस्य मुक्तविषयकं 'संज्ञा' अपरोक्षज्ञानं अमुक्तस्य जीवस्य नास्ति इति प्रतिपादितम् ।

### अन्तर्यामिब्राह्मणम्

''यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्यः अन्तरः यं सर्वाणि भूतानि न विदुः यस्य सर्वाणि भूतानि शरीरम् । एष ते आत्मा अन्तर्यामी

अमृतः'' इति परमात्मनः सर्वान्तर्यामित्वं, सर्वनियामकत्वं च प्रतिपादितम् । एवमेव 'प्राणे तिष्ठन्' इत्यादिना अध्यात्मशब्दवाच्यभूतसर्वेन्द्रियस्थितत्वं, नियामकत्वं च प्रतिपादितम् । एवमेव अन्यास्वपि ऐतरेयाद्युपनिषत्सु बहवः द्वैतवेदान्तदर्शनस्य मुख्यप्रमेयाः विपुलं सुस्पष्टं उपलभ्यन्ते । विस्तरभिया च अत्रैव उपरम्यते ।

## छान्दोग्योपनिषद्

बृहदारण्यमृते अतिदीर्घा इयं छान्दोग्योपनिषत् । छान्दोग्योपनिषदः सामत्वं तन्नाम्नैवावगम्यते । छन्दोगानामियमुपनिषत् छान्दोग्योपनिषत् । उक्तं च महासंहितायां–

**हयग्रीवोद्गीतवाक्यैः रमा देवी रमापतिम् ।**
**ओमित्येतन्मुखैर्वेदैरस्तुवद् सामवेदगैः ।। इति ।**

किञ्च सहस्रशाखस्य सामवेदस्य कौथुम–जैमिनि–तलवकार–राणायनाख्याः चतस्रः शाखा इदानीमुपलभ्यन्ते । तासु कौथुमशाखा प्रसिद्धतरा । सामवेदस्य अष्टौ ब्राह्मणानि । तदुक्तं सामविधाने सायणाचार्यैः–

**अष्टौ हि ब्राह्मणग्रन्थाः प्रौढं ब्राह्मणमादिमम् ।**
**षड्विंशाख्यं द्वितीयं स्यात् ततः सामविधिर्भवेत् ।।**
**आर्षेयं देवताध्यायो भवेदुपनिषत्ततः ।**
**संहितोपनिषद्वंशो ग्रन्थावष्टावुदीरिताः ।। इति ।**

उपनिषदिति छान्दोग्योपनिषदित्यर्थः ।

दशाध्यायी चेयमुपनिषत् । तत्र ''देवसवितुः प्रसुव'' ''यज्ञं प्रसुव'' ''यज्ञपतिं भगाय'' इत्यादि आद्याध्यायद्वयेऽन्तःकरणशुद्धिद्वारा ब्रह्म-

विद्याधिकारार्थं कर्मस्वरूपं निरूपितम् । अवशिष्टाऽष्टाध्यायी परब्रह्म-प्रतिपादिका । अतः अध्यायद्वयं अव्याख्याय अवशिष्टा अष्टाध्यायी व्याख्याता श्रीमदानन्दतीर्थभगवत्पादैः ।

"वेदानां सामवेदोऽस्मि" इति भगवतः श्रीकृष्णस्य गीतावाणी । अतो भगवतो विभूतिरत्र स्थिता । इयं छान्दोग्योपनिषद् सामवेदीयोप-निषत् । तेन हीयमुपनिषदपि भगवतो विभूतिरूपा । तेन वैशिष्ट्यमस्या उपनिषदः । उपनिषत्स्वपि गात्रे महत्याश्च तृतीयेयम् ।

भाष्यस्य ग्रन्थसङ्ख्या तावत् द्विशताधिकसहस्रम् (१२००) । हयग्रीव-रूपी नारायणोऽस्या उपनिषदः मुख्यर्षिः । तदनन्तरं रमाब्रह्मादयोऽपि ऋषयः । शेषशायी नारायणः प्रतिपाद्यदेवता ।

ओङ्कारार्थः, उद्गीथशब्दार्थः, भगवतो अष्टमरसत्वं, पराध्र्यस्य विवरणं, वायोः आखणाश्मसमत्वनिरूपणं, सामविद्या, उषस्तिचाक्रायणकथा । सत्यकामजाबालाय ऋषभादिरूपैः, वाय्वादिदेवैः क्रियमाणो वासुदेवादि-भगवत्स्वरूपोपदेशः, उपकोसलाय आहवनीयगार्हपत्यान्वाहार्यपचनाख्यैः अग्निभिः क्रियमाणं भगवत्स्वरूपनिरूपणम् । जानश्रुतये पौत्रायणाय रैक्वैः संवर्गविद्योदेशः । वायोरेव संवर्गत्वनिरूपणम्, प्राथमिके चतुर्विंशतिवर्षेषु वसूनामाधिपत्यं, अनन्तरं चतुश्चत्वारिंशद्वर्षेषु रुद्राणामाधिपत्यं, अन्तिमेषु अष्टचत्वारिंशद्वर्षेषु आदित्यानामाधिपत्यं क्रमेणेति जीवानां षोडशाधिक-शतवर्षीये जीवने देवानामाधिपत्यनिरूपणम् । वस्वाद्युपासनेन रोगाद्युप-द्रवपरिहारः, ऐतरेयनाम्ना ऋषिणा वस्वाद्युपासनया लब्धा सिद्धिः, ज्येष्ठश्रेष्ठरूपस्य वायोरुपासना, तत्फलञ्च, श्वेतकेतवे उद्दालकेनोपदिष्टो भगवत्तत्वज्ञानस्य महिमा, तथा जगत्सृष्टेः क्रमनिरूपणं (अ)तत्वमसि-

वाक्यार्थनिरूपणं, द्वादशाब्दं अधीत्यापि तदान्तर्यमज्ञाय स्तब्धाय श्वेतकेतवे पित्रा उद्दालकेन किं त्वं भगवान् असि? न, किं त्वतदसि इति जागरणप्रसङ्गः इत्येवमादयोंऽशाः उपनिषदः अत्यन्तं प्रमुखाः भागाः । अस्य विषयस्य विश्लेषणारीतिराचार्याणामन्यादृश्यतीवापूर्वा चेयम् । नारदाय सनत्कुमारोपदेशः, नामविद्या, अन्ते च इन्द्रविरोचनयोर्ब्रह्मोपदेशः न च पुनरावर्तते न च पुनरावर्तते इति मोक्षस्वरूपं वर्णयन्त्या उपनिषद उपसंहारः ।

## छान्दोग्योपनिषद्भाष्यम्

एवं नैकरहस्यप्रमेयभरिताया अस्या उपनिषदः आचार्यमध्वरचितं भाष्यं प्रतिघट्टं मुख्यविषयान् प्रज्वालयति ।

"सर्वं हवै भवति" "सर्वं खल्विदं ब्रह्म" "तज्जलानिति शान्त उपासीत" "तत्त्वमसि" इत्यादि अभेदबोधकानां श्रुतीनां भेदे एव परमतात्पर्यं इत्याशयं सप्रमाणं समर्थयन्त्यत्र ।

१) हयग्रीवोपदिष्टैः मन्त्रैः रमादेवी स्वपतिं श्रीहरिं तुष्टावैतयोपनिषदा ।

**हयग्रीवोद्गीतवाक्यैः रमादेवी रमापतिम् ।**
**ओमित्येतन्मुखैर्देवमस्तुवत् सामवेदगैः ॥**
**हयग्रीवमुखोत्थानि यानि वाक्यानि तानि तु ।**
**रमा ददर्श तान्येव ब्रह्मा तान्येव नारदः ।**
**यानि विष्णोरयोग्यानि प्रार्थनाद्यात्मकानि तु ।**
**तान्युत्तरेषां वाक्यानि भविष्याण्यवद्धरिः ।**
**एवं रमा तथा ब्रह्मा छान्दोग्योपनिषद्धि सा ।**

इति सामसंहितायाम् ।

२) अवैष्णवकृतां पूजां ब्रह्मादिनाम्नोऽपभ्रष्टदेवताः स्वीकुर्वन्ति । वैष्णवकृतां पूजामेव ब्रह्मादयो देवाः स्वीकृत्य अनुगृह्णन्ति ।

**अपभ्रष्टा अदेवाश्च ब्रह्माद्याख्यायुता अपि ।**
**देवसंज्ञाश्च दीनत्वात् पूजयेयुर्न तान् क्वचित् ।**
**यद्भागवतबुद्ध्यैव ब्रह्मादयः सुराः ।**
**वैदिकाः प्रतिगृह्णीयुरपभ्रष्टास्तथेतरत् ॥**

३) तारतम्यज्ञानं एकान्तभक्तिः अच्छिद्रसेवनं मोक्षस्य मुख्यं कारणम् ।

**यथाक्रमपरिज्ञानादेकान्तित्वाच्च केवलम् ।**
**अच्छिद्रत्वाच्च नियतो मोक्षोऽन्यत्तु विडम्बनम् ॥**
**विष्णौ भक्तिर्विशेषेण मोक्षावाप्तौ हि कारणम् ।**
**तद्भक्तेषु क्रमेणैव रमाद्येषु त्वनन्तरम् ॥**
**तृतीयमपि वैराग्यं न चान्यन्मोक्षकारणम् ।**
**एतत्साधनताहेतोस्तदन्यद्धि विधीयते ॥**

४) श्रीहरेः परार्ध्यत्वनिरूपणारीतिः अतीवापूर्वा ।

**परर्धं परमादुच्चं परार्धं तु ततोऽधिकम् ।**
**ततोऽधिकं परार्धिः स्यात् पराध्यर्मिति तत्परम् ।**
**परतः परमाच्चैव परार्धो वायुरीरितः ।**
**परार्धिनी श्रीरुद्दिष्टा पराध्र्यो भगवान् हरिः ।**

इति शब्दनिर्णये

परमादुच्चं परर्धम् । परर्धादधिकं परार्धम् । परार्धाधिकं परार्द्धिः । परार्द्धेरधिकं पराध्र्यम् । अत्र परार्धो वायुः । परार्धिनी श्रीः । पराध्र्यो भगवान् श्रीहरिः ।

वाक्यार्थनिरूपणं, द्वादशाब्दं अधीत्यापि तदान्तर्यमज्ञाय स्तब्धाय श्वेतकेतवे पित्रा उद्दालकेन किं त्वं भगवान् असि? न, किं त्वतदसि इति जागरणप्रसङ्गः इत्येवमादयोंऽशाः उपनिषदः अत्यन्तं प्रमुखाः भागाः। अस्य विषयस्य विश्लेषणारीतिराचार्याणामन्याद्दश्यतीवापूर्वा चेयम्। नारदाय सनत्कुमारोपदेशः, नामविद्या, अन्ते च इन्द्रविरोचनयोर्ब्रह्मोपदेशः न च पुनरावर्तते न च पुनरावर्तते इति मोक्षस्वरूपं वर्णयन्त्या उपनिषद उपसंहारः।

## छान्दोग्योपनिषद्भाष्यम्

एवं नैकरहस्यप्रमेयभरिताया अस्या उपनिषदः आचार्यमध्वरचितं भाष्यं प्रतिघट्टं मुख्यविषयान् प्रज्वालयति।

''सर्वं हवै भवति'' ''सर्वं खल्विदं ब्रह्म'' ''तज्जलानिति शान्त उपासीत'' ''तत्त्वमसि'' इत्यादि अभेदबोधकानां श्रुतीनां भेदे एव परमतात्पर्यं इत्याशयं सप्रमाणं समर्थयन्त्यत्र।

१) हयग्रीवोपदिष्टैः मन्त्रैः रमादेवी स्वपतिं श्रीहरिं तुष्टावैतयोपनिषदा।

हयग्रीवोद्गीतवाक्यैः रमादेवी रमापतिम्।
ओमित्येतन्मुखैर्देवमस्तुवत् सामवेदगैः॥
हयग्रीवमुखोत्थानि यानि वाक्यानि तानि तु।
रमा ददर्श तान्येव ब्रह्मा तान्येव नारदः।
यानि विष्णोरयोग्यानि प्रार्थनाद्यात्मकानि तु।
तान्युत्तरेषां वाक्यानि भविष्याण्यवद्धरिः।
एवं रमा तथा ब्रह्मा छान्दोग्योपनिषद्धि सा।

इति सामसंहितायाम्।

२) अवैष्णवकृतां पूजां ब्रह्मादिनाम्नोऽपभ्रष्टदेवताः स्वीकुर्वन्ति । वैष्णवकृतां पूजामेव ब्रह्मादयो देवाः स्वीकृत्य अनुगृह्णन्ति ।

**अपभ्रष्टा अदेवाश्च ब्रह्माद्याख्यायुता अपि ।**
**देवसंज्ञाश्च दीनत्वात् पूजयेयुर्न तान् क्वचित् ।**
**यद्भागवतबुद्ध्यैव ब्रह्मादयः सुराः ।**
**वैदिकाः प्रतिगृह्णीयुरपभ्रष्टास्तथेतरत् ॥**

३) तारतम्यज्ञानं एकान्तभक्तिः अच्छिद्रसेवनं मोक्षस्य मुख्यं कारणम् ।

**यथाक्रमपरिज्ञानादेकान्तित्वाच्च केवलम् ।**
**अच्छिद्रत्वाच्च नियतो मोक्षोऽन्यत्तु विडम्बनम् ॥**
**विष्णौ भक्तिर्विशेषेण मोक्षावाप्तौ हि कारणम् ।**
**तद्भक्तेषु क्रमेणैव रमाद्येषु त्वनन्तरम् ॥**
**तृतीयमपि वैराग्यं न चान्यन्मोक्षकारणम् ।**
**एतत्साधनताहेतोस्तदन्यद्धि विधीयते ॥**

४) श्रीहरेः परार्ध्यत्वनिरूपणारीतिः अतीवापूर्वा ।

**परर्धं परमादुच्चं परार्धं तु ततोऽधिकम् ।**
**ततोऽधिकं परार्धिः स्यात् परार्ध्यमिति तत्परम् ।**
**परतः परमाच्चैव परार्धो वायुरीरितः ।**
**परार्धिनी श्रीरुद्दिष्टा परार्ध्यो भगवान् हरिः ।**

इति शब्दनिर्णये

परमादुच्चं परर्धम् । परर्धादधिकं परार्धम् । परार्धाधिकं परार्द्धिः । परार्द्धेरधिकं परार्ध्यम् । अत्र परार्धो वायुः । परार्धिनी श्रीः । परार्ध्यो भगवान् श्रीहरिः ।

५) मटची, आटकी प्रद्राणकेत्यादिपदानां विशेषार्थो निरूपितः ।

**उपला इष्टकाः स्थूला मटचीति प्रकीर्तिता ।**
**आसन्नयौवना योषिदाटकीत्यभिधीयते ।**
**प्रद्रवन्नन्नपानार्थं प्रद्राणक इतीरितः ॥** इति शब्दनिर्णये ।

**निनदः समुद्रघोषः स्यान्नदथुर्मेघसम्भवः ।**
**दीर्घबिन्दुविसर्गादीनां लोपो वेति सूत्रदाशुवेवाश्वा ।**

(महाव्याकरणसूत्रम्)

**कोलं पूगफलं प्रोक्तं कलं ताम्बूलमात्रकम् ।** इत्यभिधानम् ।

**अस्थिरस्मरणं चित्तं स्थिरसंस्मरणं स्मरः ।** इति शब्दनिर्णये ।

**वेदनं ज्ञानमात्रं स्यात् विद्वत्वं तु विशेषतः ।** इति च ।

**वेदनं शास्त्रतो ज्ञानं विज्ञानं ब्रह्मदर्शनम् ।** इति च ।

**मोक्षे यस्मिन् प्रवेशः स्यात् सा प्रतिष्ठादि मुख्यतः ।**
**उपचारतस्त्ववस्थानमिति शब्दविदो विदुः ॥** इति च ।

**आनुपूर्वी श्रुतिर्वेद आम्नायश्चेति कथ्यते ।** इत्यभिधानात् ।

६) जले नारायणादिपञ्चरूपिणो विष्णोरुपासकस्य जलेन मृत्युर्न भवति ।

**अप्सु पञ्चविधोपासी यो नारायणवान् भवेत् ।**
**न चास्य मृतिरप्सु स्यादप्सुपङ्क्तिगवान् हरिः ॥**

७) विष्ण्वादिदेवानां स्वरेऽपि व्यत्यासोऽस्ति । तत्प्रतिपादकानि वाक्यानि ।

विष्णोः स्वरो वृषभवन्मेघनादवदेव वा ।
स्त्रीपशुस्वरवद्वह्नेर्गम्भीरोऽनुपमो विभोः ॥
ब्रह्मणस्त्वथ सोमस्य साक्षाद्बृंहानिनादवत् ।
मृदुमेघस्वरो वायोरिन्द्रस्य स्तनयित्नुवत् ॥
बृहस्पतेः क्रौञ्चवच्च वरुणस्य तु विस्वरः ।
एकस्य पादवर्षस्य स्वरो विष्णोरुदाहृतः ॥
वायोर्विंशतिवर्षस्य ब्रह्मणस्तु तदन्तरा ॥

८) भगवतो विष्णोरविस्मरणं नाम सदा स्मरणम्, अन्यथाज्ञान-राहित्यम्, सदाशास्त्राभ्यासः श्रवणमननासक्तिः, निषिद्धकर्मत्यागः सदा स्वधर्माचरणमित्यर्थः ।

अविस्मृतिः सदा विष्णोरन्यथाज्ञानवर्जनम् ।
शास्त्राभ्यासः सदोद्योगाच्छ्रवणाच्च विचारतः ।
निषिद्धकर्मणां त्यागः स्वधर्मस्य कृतिः सदा ।
अप्रमाद इति प्रोक्तः ...... ....... ॥

९) कर्णपिधाने श्रवणे श्रूयमाणः श्रुतिः प्राणकृता श्रीहरेः स्तुतिरेव सा ।

सप्राणः स्तौति तं विष्णुं सा श्रुतिः श्रूयते सदा ।
कर्णौ पिधाय तद्विद्वान् दिव्यचक्षुः सुकीर्तिमान् ।
मुक्तौ भूत्वा भवेद्यस्मादुपासीतैव तं ततः ॥

इति शब्दनिर्णये ।

१०) आयुषः घट्टत्रये क्रमेण वसुरुद्रादित्यान्तर्गतभगवद्रूपस्मरणेन अकाले प्राप्तो अपमृत्युः परिहृतो भवति ।

विष्णुपूजार्थयज्ञोऽहमित्युपासनमादरात् ।
कुर्वीत पुरुषो नित्यं तस्य यत् षोडशोत्तरम् ।
शतमायुस्तत्सवनत्रयमीरितमुत्तमम् ।
चतुर्विंशत्तु यत्पूर्वं प्रातः सवनमेव तत् ।
प्रार्थयित्वा वसूंस्तद्वं पुमान् मृत्युमपानुदेत् ।
मध्ये चतुश्चत्वारिंशन्मध्यमं सवनं स्मृतम् ।
रुद्राणां प्रार्थनेनात्र पुमान् मृत्युमपानुदेत् ।
ततोऽष्टचत्वारिंशत्तु तृतीयं सवनं स्मृतम् ।
आदित्यानां प्रार्थनेन तद्वं मृत्यमपानुदेत् ॥ इति सर्वयज्ञे ।

११) भोजनस्य पूर्वोत्तरं सर्वैः पीयमानं आपोशनं प्राणस्य वस्त्रमिति बुद्धिमतां स्वर्गे मोक्षे वा दिव्यवस्त्रलाभो भवति ।

प्राणस्य वस्त्रबुद्ध्यातु भोजनोभयतः पिबन् ।
स्वर्गे मुक्तौ तथा दिव्यवस्त्रलाभी भवत्यलम् ॥

१२) अहं ब्रह्मास्मि इति श्रुतेरप्यपूर्वमर्थान्तरं निरूपयन्ति ।

हं नाम हन्यमानत्वात् जीवस्य समुदाहृतम् ।
जीवादन्यो यतो विष्णुरहंनामा ततः स्मृतः
स्मीति जीवः समुद्दिष्टः स्मीत्यल्पं सुमितत्वतः ।
पूर्णत्वादस्मि नामाऽसौ पूर्णपूर्णत्वहेतुतः ।
ब्रह्मास्मीत्युच्यते विष्णुर्बृहत्पूर्णो यतः सदा ।
असौ सूर्यगतो विष्णुर्दूरस्थत्वात् प्रकीर्तितः ।
अहं नामा जीवगतो नित्याहेयत्वहेतुतः ॥ इति ब्रह्माण्डे ।

१३) ब्रह्मसूत्रानुसारेणैव वेदादिशास्त्राणां अर्थः कथनीयः । ब्रह्मसूत्राणामर्थ एव निर्णायकः इत्यस्य विवरणम् ।

**ब्रह्मसूत्रानुसारेण वेदाद्यं सर्वमेवच ।**
**योज्यं न ब्रह्मसूत्राणि दृश्यमानार्थतोऽन्यथा ।**

इति च ब्रह्मवैवर्ते ।

१४) सप्तसु प्रथमा, षट्सुद्वितीया एवमाद्यपूर्वसूत्राणामुल्लेखनेन अभेद-बोधकवाक्यानि भेदबोधकान्येवेत्यवगमकरीतिरत्रत्योऽयमपूर्वो विशेषः ।

**नामादिप्राणपर्यन्ताः सप्तम्यर्थाः प्रकीर्तिताः ।**
**तृतीया पञ्चमी षष्ठी चतुर्थ्यर्थाश्च सर्वशः ॥**
**शब्दास्ते ब्रह्मशब्देन सम्बद्ध्येयुर्यदा तदा ।**
**ब्राह्मणोऽस्य मुखं यद्वदात्मा वै पुत्रको यथा ॥**
**यथा च यूप आदित्यः एवमेष प्रकीर्तितः ।**
**सप्तसु प्रथमा यस्माद्भूयो भूयत्वस्तथा ॥**
**षट्सु द्वितीया यस्माच्च कारणत्वात् परस्यच ।**
**नह्यन्यदन्यदित्येव ध्यातं स्यात् पुरुषार्थदम् ॥**
**अनर्थश्च भवेत् तस्मात् भृत्ये राजेति बोधवत् ।**
**राजपूजां यथाभृत्ये कुर्याद्राजा हिनस्ति हि ॥**
**तद्वशत्वात् तथा भृत्य एव नामादिकं च यः ।**
**उपास्ते ब्रह्मरूपेण तं ब्रह्माथेतराणि च ॥**
**पातयन्ति तमस्यन्धे तस्मान्नेक्षेत तांस्तथा ॥**

इति सामसंहितायाम् ।

१५) बलञ्च ज्ञानबलं बाहुबलञ्चेति द्वेधा । तत्र युक्तियुक्तं ज्ञानं ज्ञानबलमिति कथ्यते । ज्ञानमात्रादपि युक्तियुक्तं ज्ञानमधिकम् ।

**बलं ज्ञानबलं चैव वाह्यं चेति द्विधा मतम् ।**
**युक्तिज्ञता ज्ञानवलं सा ज्ञानादधिका मता ॥** इति तत्वसारे ।

१६) गुरोः सकाशात् ज्ञानाधिगमनं मुख्याहारः ।

आहारशुद्धौ ज्ञानशुद्धिः । ज्ञानशुद्धौ स्मृतिः स्थिरा भवति । स्मृतौ स्थिरायां हरेः अपरोक्षज्ञानम् । तस्माच्च मोक्षो भवेत् ।

**गुरोर्विद्याहृतिर्यातु स आहार इति स्मृतः ।**
**तच्छुद्धौ ज्ञानशुद्धिः स्याज्ज्ञानशुद्धौ स्थिरास्मृतिः ।**
**स्मृतिस्थैर्ये त्वपरोक्ष्यं हरेर्मोक्षस्ततो भवेत् ॥**

इति साधननिर्णये ।

# केचन श्रुत्यर्थाः

## "सर्वं खल्विदं ब्रह्म" इति श्रुत्यर्थः

सर्वं खल्विदं ब्रह्म इति श्रुतिः न पराभिलषितजीवैक्यमात्रबोधिका । सर्वशब्दबलात् जगद्ब्रह्मैक्यस्यापि श्रुतेः । बाधात् जीवपरत्वमात्रोक्तौ नाहं सर्वज्ञ इत्यादिप्रत्ययबाधस्य जीवैक्येऽपि सद्भावात् जीवपरत्वमपि न स्यात् । किं चेदम्पदबलात् जडजगदेवात्र वेत्तुं शक्यमिति जडैक्यमेव स्यान्न जीवैक्यम् । बाधात् जडैक्यत्यागे चेतनैक्येऽपि बाधात् तदपि त्याज्यमेव । किं तु अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः इति वैयाकरणेन्द्रावतारपार्थोक्तिरीत्या सर्वव्यापित्वमेव सर्वशब्दार्थः । न केवलं पार्थः शाब्दिकः किं तु भगवच्छक्तिज्ञश्च । नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परमम् उदाहरन्ति इति सर्वशब्दमुख्यत्वज्ञानवानिति मुख्य एवायमर्थः ।

ऐक्यपरत्वे तज्जलानिति शान्त उपासीत इति पूर्ववाक्ये तदेतद् दृष्टं श्रुतं चेत्युपासीत इति परवाक्ये चोपास्तिविरोधात् भेदस्यैव न्यायत्वात् ।

किं च सर्वपदस्य जीवलक्षकत्वे सर्वपदमेवानुपपन्नं स्यात् । न ह्येकबोधाय सर्वपदं कोऽपि प्रयुनक्ति । यदि सर्वभ्रमाधिष्ठानत्वं सर्वशब्दार्थः तदापि मुख्यार्थसन्त्याग एव । लाघवात् मध्ये भ्रमं विहाय सर्वाधिष्ठानत्वमेवार्थं वदेः । अथवा पूर्वोक्तरीत्या सर्वस्मिन् ब्रह्मेत्यर्थमवैहि । न च प्रथमा-विभक्तेः निरवकाशः शङ्क्यः । यथाश्रुतार्थस्यायोगे सप्तसु प्रथमा इत्यादिना व्यत्ययेन शासितत्वात् पाणिन्यादिभिरप्रतिषिद्धत्वाच्चास्मदुक्तार्थ एव रमणीयः ।

## 'येनाश्रुतं श्रुतं भवति' इति श्रुत्यर्थः

''येनाश्रुतं श्रुतं भवति'' श्रुत्यामस्याम् एकश्रवणेन सर्वश्रवणं एक-ज्ञानेन सर्वज्ञानम् अभिहितम् । तच्च सर्वस्य ब्रह्मस्वरूपत्वमृते नोपपद्यते, इत्यैक्यमत्राभिप्रयन्ति परे । तदनुपपन्नम् । स्यादियमैक्याशा यदि ब्रह्मविज्ञाने पररीत्या सर्वजगज्ज्ञानं स्यात्, तदेव न । तन्मते निर्धर्मक-चिन्मात्रनिर्विकल्पकज्ञानमेव ब्रह्मज्ञानम् । तस्मिंश्च सति न जगतो ज्ञानं त्वन्मते इत्युभयोः कालिकसामानाधिकरण्यमेव दुर्वचम् ।

किं च जगत् त आरोपितं ब्रह्म च तदारोपाधिष्ठानं ततश्चाधिष्ठान-याथात्म्यज्ञानदशायामारोपितजगज्ज्ञानं न कथञ्चित् स्यात् । न चैक-विज्ञानमिदं श्रौतं, न चरमब्रह्मज्ञानम् इति शङ्क्यम् । एकविज्ञान-प्रशंसारूपार्थवादपरत्वात् अन्तिमनिर्विकल्पकज्ञानमेवैकविज्ञानं वाच्यम् । एतेनैतदपि निरस्तम् । यत् भ्रमस्य द्वावंशौ स्तः इदन्त्वेनाधिष्ठान-सामान्यधीः रजतत्वादिना आरोपितज्ञानं च । एवं चारोपितजगज्ज्ञाने सति यदधिष्ठानब्रह्मसामान्यज्ञानं तदेकविज्ञानमित्युभयोः युगपत् स्थितिः सम्भावितेति । अन्तिमनिर्विकल्पकज्ञानस्यैवेकविज्ञानत्वेन स्वीकार्यत्वात् ।

भ्रमानुकूलसामान्यधियः एकविज्ञानपदानर्हत्वात् । तथा सत्युपसर्गवैयर्थ्यात् । तथात्वेऽप्यखिलभ्रान्तजगदैक्यमेव सिद्ध्येत् न जीवैक्यम् । तादृशाधिष्ठानसामान्यज्ञानस्य संसारबीजत्वेन गर्ह्यत्वात् तत्प्रशंसाया अयोगात् । मोक्षोपयोगिब्रह्मज्ञानोपक्रमविरोधाच्च । आत्मनि विज्ञाते सर्वं विज्ञातं स्यात् इति समाख्यारूपकाण्वश्रुतौ, आत्मविज्ञानेन सर्वविज्ञानं निगद्य एतावदरे खल्वमृतत्वम् इति तस्य मुक्तिरूपत्वमाह । तच्च लाङ्गलं जीवनमितिवत् मुक्तिहेतुत्वाभिप्रायेण । एवं च मुक्तिहेत्वात्मविज्ञानमेव, एकविज्ञानपदाभिधेयमिति समाख्यश्रुतिविरोधाच्च नाधिष्ठानसामान्यज्ञानमेकविज्ञानं स्यात् । न च, एकविज्ञानम् अनारोपरूपं चरममेव, न च तदा नास्ति सर्वज्ञानं, निषेध्यत्वेन तदाऽपि सर्वज्ञानसम्भवादिति शङ्क्यम् । अन्तिमज्ञानस्य निर्विकल्पकत्वेन तन्मते तस्याभावगोचरत्वाभावेन तदापि न सर्वाभावज्ञानं सुतरां घटते । किं च सा सर्वाभावधीरेव स्यात् न पुनः सर्वधीः । न हि घटाभावज्ञानं कोऽपि कोविदो घटज्ञानं ब्रूयात् । तथात्वे, अद्वैतज्ञानी द्वैतज्ञानी स्यात्, द्वैतज्ञानी तद्विपरीतः स्यात् । तदभावबोधनाभिप्रायेण श्रुतेः तद्भावकथनं चासम्बद्धं स्यात् । भूयो भूयो भूखननेऽप्यनधिगतजलं पुमांसं को वा अधिगतपानीयं कथयेत्? किं च एकविज्ञानेन सर्वज्ञानमस्तु, तथापि न ते तेनार्थः प्रत्युत महाननर्थः । मिथ्याभूतसर्वजगदैक्यं सतः ब्रह्मणः स्यात् । न तत्तव कामितं जीवैक्यम् अतः जीवैक्यं कामयतस्ते, एकज्ञानेन दृश्यमानाखिलजगद्ज्ञानं प्रस्तुवतः विनायकं प्रकुर्वाणः रचयामास वानरम् इत्याभाणकविषयत्वं प्राप्तम् । चरमविज्ञानेन सर्वस्य ज्ञानोक्तौ प्रमाविषयत्वेन सर्वस्य सत्यत्वमेव सिद्धम् । तेन ते मिथ्यात्वसाधनमतिविरुद्धं च । यत् तज्ज्ञानं ब्रह्मवत् जगच्च परमार्थसदेवासीषधत् । ततश्च सत्यत्वचित्वादिधर्मैः इदं

चराचरं परावरपरमात्मसदृशं, न तावदेव किं तु तदङ्गेषु आश्रितं च ततो हेतोः तज्ज्ञाने जगद् ज्ञायत इति श्रुतेर्भावः । सादृश्यबलादेव धूमे वह्नेरविनाभावज्ञानम् । विविधभूषणगन्धाद्यलङ्कारदर्शने यथा तद्भूषण-गन्धादिदर्शनं तथा विश्वम्भरविष्णुदर्शने तदाश्रितसर्वजगद्ज्ञानं च सुलभम् । प्रपञ्चितश्चेदं गीतादिस्मृतिषु । अक्रूरवचश्च भूमौ वियति जले यावन्ति, आश्चर्याणि तानि त्वयि दृष्टानि, न किमप्यदृष्टं मे इति । शिशोश्च हरेर्मुखे यशोदाम्बिका निखिलं विश्वम् अपश्यच्च । किं च लोके ग्रामेश्वरे दृष्टे, अखिलाः दृष्टा इति ग्रामेश्वरं स्तुवन्ति । तत्कुतो हेतोः अखिलदर्शनेन यत्फलं तत् तद्दर्शनेन यदधिगतम् । एवमेव सर्वदर्शनेन यत्फलं तत्फलस्यापवर्गरूपस्य हरिज्ञानेन लब्धम् ।

न चैवममुख्यार्थत्वमिति वाच्यम् । सत्यं तथा, तथापि प्रयोजन-बाहुल्यादमुख्यार्थ एवादर्तव्यः । प्रवाहसम्बन्धेन पावित्र्यादिद्योतनाय वक्तुराधीन्येऽपि लाक्षणिकं प्रयुञ्जते खलु । लघुता च तथा स्यात् विचार्यमाणे च लाक्षणिकप्रयोगा एव भूयांसः लोके । अथवा ब्रह्मणि विज्ञाते तत्सुप्रसन्नता प्रसादेन सार्वज्ञं च सुसुलभं नृणामित्यस्मदुक्तार्थ एव श्रुतेः सर्वश्रुतिमनोहरः । सर्वकर्तृत्वसार्वज्ञसर्वेश्वरत्वादिसनाथस्य मधु-मथनस्य दर्शने सर्वं च कथं न ज्ञायते? एवं च, एवविज्ञानेन सर्वज्ञानं मम सुलभं, न सुतरां तव । नन्वेवं कुतो तथा न स्फुटं श्रुतिः श्रावयति? इति चेत्, परोक्षप्रियत्वात् देवानां वेदानां देवेशस्य हरेश्च । उक्तं चैतत् बर्हिष्मन् एतदध्यात्मं पारोक्ष्येण प्रकीर्तितम् इति । अस्पष्टवचनेन च श्रुतीनां परमतत्त्वं भगवद्रूपं दैत्येभ्यः गूहितं च स्यात् । तद्विषदमुक्तं वादिराजतीर्थैः स्वकाव्ये–

द्वेषाभिवृद्धिं द्विषतां विधातुं व्यासश्च न स्पष्टमिदं प्रमेयम् ।
ऊचे न चेत् भक्तजनैरगंम्यं पापैरसाध्यं तमवाप्नुयात् कः ।। इति ।

## 'तत्त्वमसि' इति श्रुत्यर्थः

इयमपि श्रुतिः चित्वसत्यादिकतिपयगुणैः ब्रह्मसादृश्यं लोकवेदानुसारेणाह । यथा खलु लोके तावदतिशूरं नरं नरशार्दूल इति स्तुवन्ति, तथा अग्निर्माणवक इति । तपसा दाहकत्वादिना अग्निसादृश्यात् ब्रह्मचारी अग्नित्वेन बोध्यते वैदिकैः । अथवा, इयं श्रुतिः स्पष्टं भेदं सतात्पर्यं साधितुमुद्युक्ता । तेन च सर्वत्र स्वार्थप्रच्यावनपरम् अचखण्डत् । यद्यपि सन्दिग्धार्थेयं श्रुतिः, तथापि स्पष्टं नवभिः भेदविषयैः दृष्टान्तैः स आत्मा अतत्त्वमसि इति पदविच्छेदपुरस्सरमेव स्वार्थं निरूपयति । शब्दो नित्य इत्यत्र नित्यत्वानित्यत्वसन्देहेऽपि घटदृष्टान्तेनानित्यत्वनिश्चय इवात्रापि दृष्टान्तैरकारच्छेद एवाभिप्रेतः । तथा हि तत्रोपनिषदि, आदौ जीवेश्वरयोरत्यन्तभेदबोधाय, असहायस्यैव भगवतः तेजोबन्नादिसमस्तजगन्निमित्तकारणत्वरूपं जीवेष्वसम्भाव्यमानं महामाहात्म्यम् उपवर्णितम् । तच्चागममात्रवेद्यं न पुनरनुभवारूढमित्यतो जागरे जीवस्य स्वातन्त्र्याभिमानात् सुषुप्तौ तदभावात् । तदा जीवस्य भगवदाश्रयत्वं स्पष्टं द्योतयितुं "स्वप्नान्तं मे सौम्य विजानीहि" यत्रैतत् पुरुषः स्वपिति नाम सता सौम्य तदा संपन्नो भवति इत्युपक्रान्तम् । अस्यायमाशयः, आत्मन्यक्षिगते जाग्रदवस्था, कण्ठगते च तस्मिन् स्वप्नः, तदवसाने सुषुप्तिः यदा हृद्यात्मा तिष्ठति । तस्यां च दशायां पुरुषपदवाच्यो जीवः सच्छब्दवाच्येन ब्रह्मणा समं सम्पन्न एव स्यात् सम्यक् तमाश्रित एव स्यात् न तु तदैक्यमाप्नोति । येन च जागरस्वप्नयोः शरीरेन्द्रियमनसाम् इतस्ततो विक्षेपेण यः श्रमो

जीवस्य तस्य निवृत्तिः । इदं च प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद इति शाखान्तरश्रुत्या सुप्तौ प्राज्ञेन संपरिष्वङ्गमभिदधत्या दृढीकृतं च । सम्यगालिङ्गनं सम्यक् प्राप्तिर्वा भिन्नयोरेव स्यात् । तत्रैव वर्तमाना स्वं ह्यपीतो भवति इति श्रुतिरपि स्वातन्त्र्यात् स्व इति प्रोक्तः इति स्वशब्दवाच्ये परमात्मनि, अपीतः सुप्तौ मुक्तौ च प्रविष्टोऽपिहितः स्यात् । इति स्वापे मुक्तौ च जीवस्य परमात्मनि निवेश एव न त्वैक्यम् । अपीतः इत्यत्र, अपिः पिधानार्थकोपसर्गः इण्धातुश्च स्तः । एवं च शब्दशक्तिशोधने, अन्तर्हिततया प्राप्तिरेव, अपीतिशब्दार्थो ज्ञेयः । सूत्रकृ-व्यासोऽपि ॐ सुषुप्त्युत्क्रान्त्योर्भेदेन ॐ इति सुप्तौ च जीवेशयोर्भेद-मेवासूत्रयत् । एवं च व्यासपाणिन्युभयशासनाद्धा सुप्तौ मुक्तौ चेत्युभयत्र स्थित्या द्विर्बद्धो भेदः प्रकृतश्रुतिगले सुबद्धः समजनि । सुप्तिश्च तव मते देहादेरप्ययात् अवान्तरमुक्तिरेव । एवं च सुप्तौ मुक्तौ चासदैक्यं कदा अवसरं लभेत? दृष्टान्ताश्च नव स्पष्टं भेदं निदर्शयन्ति । जीवः शकुनिस्थानीयः सूत्रधारी हरिः सूत्रस्थाने, इति दृष्टान्ते भेदस्य निदर्शनात् एवमेवेतरेष्वपि दृष्टान्तेषु भेदः सुतरां दृष्टः ।

ननु, स यथा शकुनेः सूत्रेण प्रबद्धो दिशं दिशं पतित्वा अन्यत्रायतन-मलब्ध्वा बन्धनमेवोपाश्रयते, एवमेव खलु सौम्य एतन्मनो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा प्राणमेवाश्रयते इति दार्ष्टान्तिकवाक्ये मनसः प्राणाश्रयणं श्रूयते । तत्कथं जीवेशयोः भेदोऽत्र निरूपित इति चेन्न । मन्तृत्वान्मन उद्दिष्टः इति मनश्शब्द जीव एव । न चेत् यत्रायं पुरुषः स्वपिति नाम इति जीवस्वापोपक्रमातिक्रमः स्यात् । किं च अध्वनीनस्य शुभशकुनिं ऋते जीवभयाभावः ज्ञाप्यते तथाऽत्रापि दृष्टान्ते शकुनेः शकुनात् सूचनात् दार्ष्टान्तिकस्य, अजीवविषयकत्वस्यापगम एव

सिद्ध्यति। चेतनस्य शकुनेः दृष्टान्तस्य चेतनो जीव एव दार्ष्टान्तिकः स्यात् न जडं मनः । किं च त्वन्मतेऽपि सुप्तौ मनो लीनं, लीनस्य प्राणसंश्रयता असङ्गतैव स्यात् । अतोऽगत्या जीव एव वाच्यः । ते मनो लीनम् । इति वदता ग्रन्थकृता परस्य मनः दुराग्रहात् नष्टप्रायमिति सूचितम् । किं चोपरिष्टात् सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः इति जीववाचिप्रजाशब्दं बिभ्रती श्रुतिरत्रापि जीवपरैवेति निश्चप्रचम् । ततश्चोक्तप्राणोऽपि न बाह्यवायुः किं तु ब्रह्मैव ज्ञेयः । एवं च सदृष्टान्तं पुरा भेदं प्रस्ताव्य श्रुतिः तत्त्वमसि इति कथमैक्यं बोधयेत्? द्विरूपाया अस्या गिरोऽस्मदुक्तार्थ एव ग्राह्यः । न चेत् वेदः प्रारब्ध-मुत्सृज्य द्विरूपायाः स्वैरिण्याः वाक्बलात् विना कारणम् असम्बन्धार्थं सिषाधयिषुमद्यपायिस्थानम् अधिगच्छेत् । एवं च स आत्मा अतत्त्वमसि इत्यस्मदुक्तमुख्यार्थ एव सर्वथा श्लाघ्यतमः । तवापि तत्त्वंपदमुख्यार्थ-योरैक्यं न विवक्षितं नापि वक्तुं शक्यम् इत्यन्ततोऽमुख्या लक्षणैव गतिः, ततो मुख्यार्थ एव श्रेयान् । एवं च तत्त्वज्ञो न तत्त्वज्ञः, किं तु मत्त एव मद्यप एवेति विरोधः, परिहारस्तु भगवद्भावज्ञः श्रुतौ न तत्त्वज्ञानीति । किं च जीवस्य सन्मूलत्वकथनेन सृष्टौ, सदायतनत्वकथनेन स्थितौ, सत्प्रतिष्ठत्वेन मुक्ताविति त्रिधा सादरं जीवेशभेदं बोधयन्ती श्रुतिः भेदपरैवाभ्युपगम्या ।

किं च लवणमेतदुदकेऽवधाय.... इत्यादिना अभिहिते लवणोदक-दृष्टान्ते च भेदोऽतिरोहित एव । भिन्नरसयोः लवणोदकयोः मेलनेऽपि नैक्यं, परम् आलोडनमेव सम्यक् मिश्रणमेव न चैवं जलमाधुर्यस्य लवणरूपस्य च कथं नानुभूतिरिति शङ्क्यम् । तप्तोदके जलस्य शीत-स्पर्शाभिभवः, अग्नेश्च शुक्लभास्वररूपाभिभवः तथा लवणोदकेऽपि लवणरसस्यानुभवः रूपस्याभिभवः, जलस्य तु रसस्याभिभवः रूपानुभवः।

एवं इमाः सोम्य नद्यः पुरस्तात् इत्यादिनोक्ते नदीसमुद्रदृष्टान्तेऽपि भेद एव शास्त्रादिना सेत्स्यति । गङ्गासागरसङ्गम इति शास्त्रं शास्ति । वृद्धाश्च सङ्गममेव व्यवहरन्ति । एवं च अम्बोधेर्लवणोदके नदीशुद्धोदसङ्गम एव ज्ञेयः । यथोदकं शुद्धे चावधारणार्थैकैवकारेण मिलनमेव । एवं चेत् वार्धौ शुद्धोदलवणोदयोः कथमैक्यं स्यात्? नद्यम्बुयोगे वर्षासु वार्धिरप्यभिवर्धते इति पुराणोक्तवृद्ध्यन्यथानुपपत्यापि मिथो मिलनमेव वाच्यम् । यत्र वृद्धिः न तत्रैक्यम् । तदभावे तदभावः । अत्र नदीसङ्गतो वार्धि-रन्वयोपमा। रासोत्सवान्ते बहुमूर्त्येकतां गतः कृष्णः गृहद्वारं प्रविशन् पूर्ववदेव स्थित इति व्यतिरेकदृष्टान्तः । किं च सङ्गमे द्विगुणफलोक्त्यापि नदीसमुद्रयोः सङ्गम एव, ऐक्ये न सा घटते । समुद्रोदकेऽपि स्थित-लवणस्य च जलस्य चेशकृतः संयोग एव । एवं सति नदीसमुद्रयोः किं वाच्यम्? समुद्रः सरित्पतिः नद्याः दृढालिङ्गमादेव, न मन्दानां भेदो दृश्यः । तदिदं चमत्कृत्य कथयति सरसकविवादिराजतीर्थः – समुद्रराजो वरुणः प्रधानदिक्पालः महालये वसन् मुनीनां पितास्ति, चन्द्रस्य च मित्रं, यद्यैक्यं तर्हीदं कथं स्यात्? इति ।

किं च वर्षासु वारिधराः वार्ध्यम्बुमध्यात् शुद्धं नद्यम्बु आदाय तत्र तत्र वर्षन्ति । यदि नद्यम्बु, ऐक्यमापन्नं वार्ध्यम्बुना तर्हि कथमिदं घटेत? किं च नद्योऽपि वार्धौ मिथो मिलन्त्येव नैकतां यान्ति किमुत नदीसमुद्रौ । यतः प्रतिवर्षं गङ्गोदकं श्वेतं तुङ्गाम्बु रुचिरं यमुनाम्बु नीलमिति भेदो दरीदृश्यते । एवं चाविपालगोपालव्यवह्रियमाणः सङ्गमः, तव त्वेकतेति त्वां त एवोत्तरेयुः किमु मध्वसिद्धान्तस्थिरधियः तच्छिष्याः?

किं च सितासिते सरिते यत्र सङ्गते तत्राप्लुतासो दिवमुत्पतन्ति इति श्रुतिः प्रयागे गङ्गायमुनासङ्गममेव श्रावयति । क्वचिच्च पुराणे

मिश्रतीर्थमिति कीर्त्यते । अस्थिदानात्पूर्वं तीर्थेषु स्नानाभिलाषुकेण दधीचिना प्रार्थितेनेन्द्रेण सर्वतीर्थेभ्यः तीर्थमादाय नैमिषारण्यप्रान्तस्थे सरोवर इदं तीर्थं निरमायि । यच्च सर्वतीर्थमिश्रणज्ञापकं मिश्रतीर्थमिति । किं च कृष्णवेणीतुङ्गाभद्राभीमरथीमलापहारिणी भवनाशिनीति सप्तनदीनां सङ्गमः निवृत्तिसङ्गम इति वदन्ति । कृष्णाभीमरथीसङ्गममद्याप्यपभ्रष्टभाषया काडलूरसङ्गममिति जनाः वदन्ति ।

एवं यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति इत्यादिनोक्ते मधुमधुकृद्दृष्टान्ते च विचारिते मधुनि नानारसमिश्रणमेव किं तु नैक्यम् । अन्यथा वृद्धेः रसवैचित्र्यस्य चायोगात् । सर्वत्र दार्ष्टान्तिकावसाने सति संपद्य न विदुः सति संपत्स्यामः सत आगम्य न विदुः सत आगच्छाम इति इति सृष्टौ ब्रह्मणः सकाशात् जीवानाम् आगमनं मुक्तौ तस्मिन् सम्यक् प्रवेश एव यतो निगद्यते अतः भेद एवाघोषितः । गम्यगमकभावस्य भेदनियतत्वात्, आगन्तुश्च आगमावधेश्चावश्यं भेदो वाच्यः । तदिदं गृहादागतस्य गृहे प्रविष्टस्य न तदैक्यम् इति वदता आचार्येण विवृतमेव । सर्वत्रान्ते त इह व्याघ्रो वा सिंहो वा इत्यादिना अनाद्यनन्तकालिकजीवेशभेदज्ञानिनां सिंहव्याघ्रादितिर्यग्योनिप्राप्त्या निन्दनाच्च निन्दारूपार्थवादात् एतावदवधिसूचिताभ्यासात् उपपत्तिसन्दोहबलाच्च तात्पर्यनिर्णायकात् भेदपरैवेयं श्रुतिः नैक्यस्य भूः । एवं च केरलानां करवालमिव परस्येयं श्रुतिरैक्यपरत्वेनाभिप्रेता, उक्तरीत्या भेदं बोधयन्ती मारिका समजनि ।

एवं तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्यथ इति श्रुतौ, अखिलप्रारब्धकर्मनाशानन्तरकालं ब्रह्मसम्पत्तिः श्रुता, सा परमतेऽपि परममोक्ष एव । अतः मोक्षवृत्तित्वेन भेदः स्थिर एव । गम्यगन्तृभावस्यान्यथानुपपत्तेः । एवं चोच्चैः रोदनेऽप्यैक्यं न सिद्ध्येत् । किं तु

तदरण्यरोदनायते । अहो चित्रम् । अतत्त्ववादिनां तत्त्ववादिता । एवं च अक्षराणामकारोऽस्मि इत्युक्तवर्णादिना, अकारेण च्छिन्नं पदं श्रुतिप्रियाः वर्णादिमाः ब्राह्मणाः सन्धाय गोष्ठीषु भेदार्थलाभायोदाहरन्ति । तेषाम् अभेद एव, अ इति ब्रह्म इति ब्रह्मभेद एवाभिप्रेतः ।

किं च स्तब्धस्य शिष्यस्याहंकृतिनिरासेच्छया गुरुणा ब्रह्मभेद एव बोध्यो न त्वैक्यम् । तद्बोधे मदोत्कर्ष एव स्यात् । किं च सर्वत्र तेऽर्धचरतीयन्यानुसृतिरेव । तथा हि ज्ञानमज्ञानस्यैव निवर्तकमिति स्वकपोलकल्पितयुक्तिभिया दृष्ट्वैव तं मुच्यते इति ज्ञानादेव बन्धनिवृत्तिः श्रुतिश्रुता निराकृता । किं तु ज्ञानेनाज्ञाननिवृत्तौ, उपादानाभावात् बन्धनिवृत्तिरिति श्रौतार्थविरुद्धार्थः प्रतिपादितः ।

अत्र त्वबाधितप्रत्यक्षसनाथविरुद्धगुणवत्वरूपमहायुक्तिविरोधेऽप्यापात-प्रतीतमुख्यार्थे, एव महानाग्रहः प्रदर्श्यत इति चित्रम् । अत्राक्षयुक्ति-श्रुत्यादेः निरवकाशस्यामानत्वम् । स्वकल्पितयुक्तेः महान्मान इति विरुद्धचरितम् । यद्यक्षादेरमानत्वं तर्हि तद्विरोधाभावात् विरुद्धैक्योक्तौ कस्ते प्रतिबन्धः । कुत्राप्यदर्शनात् विरुद्धैक्यमयुक्तं चेत् तर्हि, अक्षादि-मानत्वमेव सिद्धमिति विरुद्धगुणयोः सत्यत्वेन प्राणत्यागेऽपि तत्यागो न युक्त इत्युभयतःपाशा रज्जुः ।

## छान्दोग्यभाष्यविवृतिकाराः व्यासतीर्थाः

अयं व्यासतीर्थः सकलविद्वन्मूर्धन्यमान्यश्रीमन्न्यायसुधाद्यनेकप्रौढ-ग्रन्थनिर्मातॄणां श्रीमट्टीकाचार्यापरनामकानां श्रीमज्जयतीर्थभिक्षूणां विनेयः । तुरीयाश्रमोऽपि तेषां सकाशादधिगतः । त्रयोदशशताब्दीयोऽसाविति ऐतिहासिकानां समयः । अयं व्यासतीर्थः न्यायामृततर्कताण्डव-

तात्पर्यचन्द्रिकेत्याद्यनेकग्रन्थकर्तुः व्यासराजादन्य एव । व्यासतीर्थ इति नामसाम्यं अनयोरभेदव्यवहारकारणमिति भाति । एतच्च तत्तत्कृत-व्याख्यानशैलीतः निश्चप्रचं प्रतीयते । एते व्यासतीर्थाः उपनिषद्व्याख्या-परम्परायां सर्वैरपि व्याख्यातृभिरादरेण नताः सम्मानिताश्च । एतेषां गुरुभिः श्रीमज्जयतीर्थैः ईशप्रश्नोपनिषदोः टीका व्यारचि । इतरोपनिषदां व्याख्या व्यासतीर्थेषु अनुग्रहायैव न व्यरचि श्रीमज्जयतीर्थश्रीचरणैः । उक्तं च छलारी संकर्षणाचार्यैः श्रीमज्जयतीर्थविजये–

**इतरोपनिषद्भाष्यटीकाकृतिसयाचने ।**
**शिष्यार्ये व्यासतीर्थाख्ये टीका नाकृत स स्वयम् ॥**

ईशप्रश्नोपनिषद्द्वयं विहायातिरिक्ताष्टोपनिषद्भाष्याणां टीकाः व्यासतीर्थेन विरचिताः । अपि च श्रीमन्मध्वाचार्यविरचितस्य महाभारततात्पर्य-निर्णयस्यापि व्याख्यानमेतैर्निर्मितम् । तथा स्वगुरुगरिमाप्रतिपादके अणुजयतीर्थविजयः, बृहज्जयतीर्थविजयश्च इत्येते काव्ये अप्यनेन विरचिते । एतेषां व्याख्यानशैली सरला सुबोधा च । एते एव माध्वसम्प्रदाये इदं प्रथमतया उपनिषदां खण्डार्थरचयितारः । आचर्याभिप्रायानुसारी खण्डार्थः आवश्यकश्चासीत् । तथैव पदशः वाक्यशः अर्थक्रमोऽपि अनेन प्रादर्शि । श्रीवादिराजतीर्थः, श्रीरघूत्तमतीर्थः, वेदेशतीर्थः श्रीविश्वेश्वरतीर्थः श्रीराघवेन्द्रतीर्थः, जगन्नाथतीर्थाश्च वारंवारं व्यासतीर्थं स्मृत्वा अस्य व्याख्यानमनुकुर्वन्ति । सर्वेषां व्याख्यातृणां जीवातुभूताः एते व्यासतीर्थाः ।

## श्रीजयतीर्थाः

जयतीर्थाः व्यासतीर्थानां गुरवः । माध्ववाङ्मये श्रीजयतीर्थानां विशिष्टं स्थानं विद्यते । श्रीपद्मनाभतीर्थानां कालानन्तरं द्वैतवेदान्तपरम्परायां

विशिष्टव्याख्यातारः श्रीजयतीर्थाः एव आसन् । श्री अक्षोभ्यतीर्थानां साक्षात् शिष्याः श्रीजयतीर्थाः तेषां परमानुग्रहेण श्रीमध्ववाङ्मये निहितान् अपूर्वान् अर्थान् प्रकाशयामासुः ।

## जयतीर्थानां पूर्वाश्रमः

श्रीजयतीर्थानां पूर्वाश्रमनाम धोण्डूरघुनाथपन्थः इति । तेषां कालः विद्वद्भिः १३६५–१३८८ इति निश्चितः । श्रूयते यत् ते एकस्मिन् धनिककुटुम्बे जाताः इति । तेषां विषये गुरुचर्या नामके ग्रन्थे

**वृष्टिखेटाधिपो धोण्डोरघुनाथाभिधः प्रभुः ।**
**चतुरङ्गबलोपेतो मृगयां प्रचरन् वने ॥ (–गुरुचर्या)**

इति तेषां स्वराज्यस्य आधिपत्यमपि उररीकृतम् । राजोचितं अश्वकलानैपुण्यमपि आसीदिति तेषां चरित्रग्रन्थेभ्यः विज्ञायते ।

एकस्मिन् दिने अश्वारूढाः सन्तः सञ्चरित्वा अथ मध्याह्ने तृषावशात् कागिनीतीरं गताः । तत्र अश्वारूढाः एव जलं प्रविश्य जलं अपिबन् ।

तत् दृष्ट्वा नद्याः अपरस्मिन् तीरे स्थिताः श्रीअक्षोभ्यतीर्थाः "किं पशुः पूर्वदेहे" इति गिरं अब्रुवन् ।

अनेन सम्प्राप्तपूर्वजन्मस्मृतिः श्रीधोण्डोरघुनाथः अक्षोभ्यतीर्थानां पादारविन्दे अपतत् । तस्य विरक्तिं भक्तिं च अवलोक्य श्री अक्षोभ्यतीर्थ-श्रीचरणाः सन्यासदीक्षां च ददुः । "श्रीजयतीर्थः" इति नामधेयं च चक्रुः।

श्रीअक्षोभ्यतीर्थश्रीमच्चरणानां अन्तिके ते विद्याभ्यासं चक्रुः । श्रीजयतीर्थानां ग्रन्थैरेव विज्ञायते यत् अक्षोभ्यतीर्थानां कृपाबलेन ते

समधीतशास्त्रा अभूवन् इति । गीताभाष्यप्रमेयदीपिकायां ते स्वयमेव एवं कथयन्ति—

"अक्षोभ्यतीर्थगुरुणा शुकवच्छिक्षितस्य मे" इति । (गी.भा. प्र.दी.)

**श्रीजयतीर्थानां पाण्डित्यम्**

द्वैतवाङ्मयभूषणैः श्रीव्यासतीर्थैः न्यायामृते

**"चित्रैः पदैश्च गम्भीरैः वाक्यैर्मानैरखण्डितैः**
**गुरुभावं व्यञ्जयन्ती भाति श्रीजयतीर्थवाक्"**

इति गम्भीर–अखण्डित–वाक्य–रचनाकौशलं श्रीजयतीर्थानां स्वभावतः एव विद्यते इति वर्णितम् । श्रीजयतीर्थानां अद्वितीया प्रतिभा स्मारं स्मारं विस्मयमावहति । तेषां सर्वतोमुखपाण्डित्यं विद्वज्जनानां मनः आकर्षति ।

तेषां अपूर्वां ग्रन्थरचनाचातुरीं, प्रक्रियाप्रतिपादनपटुतां, भावाविष्करण-पद्धतिं च महान्तो मुहुः मुहुः स्तुवन्ति ।

## जयतीर्थानां ग्रन्थाः

जयतीर्थाः तेषां विस्तृतग्रन्थरचनेन मध्ववाङ्मयस्य टीकाचार्यः इत्येव प्रसिद्धिं गताः । तेषां ग्रन्थेषु समस्तस्यापि मध्वशास्त्रस्य तत्त्वं सुव्यक्तमस्ति ।

श्रीजयतीर्थैः द्वाविंशत्यधिकाः ग्रन्थाः विरचिताः ।

१. तत्त्वसङ्ख्यानटीका २. तत्त्वविवेकटीका ३. तत्त्वोद्योतटीका

४. विष्णुतत्त्वविनिर्णयटीका ५. मायावादखण्डनटीका

६. प्रपञ्चमिथ्यात्वानुमानखण्डनटीका ७. उपाधिखण्डनटीका

८. प्रमाणलक्षणटीका ९. कथालक्षणटीका १०. कर्मनिर्णयटीका

**सूत्रप्रस्थानम्**

१. श्रीमन्न्यायसुधा (अनुव्याख्यानटीका) २. तत्त्वप्रकाशिका (ब्रह्मसूत्रभाष्यटीका) ३. न्यायविवरणटीका

**उपनिषत्प्रस्थानम्**

१. षट्प्रश्नोपनिषद्भाष्यटीका २. ईशोपनिषद्भाष्यटीका ३. ऋग्भाष्यटीका

**गीताप्रस्थानम्**

१. गीताभाष्यप्रमेयदीपिका २. गीतातात्पर्यन्यायदीपिका

**स्वतन्त्रग्रन्थाः**

१. वादावली २. प्रमाणपद्धतिः ३. पद्यमाला ४. शतापराधस्तोत्रम् ५. अध्यात्मतरङ्गिणी

**श्रीमन्न्यायसुधा—श्रीजयतीर्थानां मेरुकृतिः**

समस्तेऽपि माध्ववाङ्मये श्रीमन्न्यायसुधायाः अत्युन्नतं स्थानं अस्ति । ''सुधा वा पठनीया वसुधा वा पालनीया'' इत्येतद्वचनं तस्य ग्रन्थस्य प्रौढिमां सुष्ठु प्रकटयति ।

इयं श्रीमन्न्यायसुधा श्रीजयतीर्थानां कृतिषु अत्युत्तमा, अतिविशदा, अतिगम्भीरा । किं बहुना एषा श्रीजयतीर्थानां मेरुकृतिः इत्येव

वक्तुमुचितम् । ग्रन्थस्यास्य विषमपदवाक्यार्थविवृतिः इति नामान्तरं च विद्यते ।

## व्यासतीर्थप्रशस्तिः

व्यासतीर्थरचितायाष्टीकायाः टिप्पणीरूपा च वादिराजतीर्थविरचिता प्रकाशिकानाम्नी कठोपनिषदष्टिप्पणी । श्रीमद्वादिराजतीर्थाः स्वीये व्याख्याने व्यासतीर्थानां नामोल्लिख्य तेषां वचसां अर्थविवरणपूर्वं तेषु आदरातिशयः प्रदर्शितः । वादिराजतीर्थानां इमं व्याख्याभागं परिशीलयत– ''आगतं यमं भार्योवाचेति वैश्वानर इत्यस्य प्राग्ग्राह्यम्'' इति व्यासतीर्थीये । अन्यथा भार्यावचनस्यानवसरस्थत्वादिति ज्ञेयम् ।

प्रसङ्गान्तरेच व्यासतीर्थानां ''इवशब्देन जानतां श्रेयःप्रेययोरेकत्वं सूचयति इति वाचोविवरणरूपेवास्ति वादिराजतीर्थानां व्याख्या । तदित्थम्–

''इवेति वदता वस्तुगत्या वैराग्यवतां ज्ञानिनां ब्रह्मादीनां धनादिकमपि विष्णुप्रीतियजनाद्युपयोगीति श्रेयस्येवान्तर्भावात्तस्य न पार्थक्यमिति सूचयति । अत एव ते उभे नानार्थे भिन्नप्रयोजने । उक्तरीत्या प्रेयसोऽपि श्रेयस्येवान्तर्भाव इत्यजानन्तं प्रेयसा उदरभरणाद्यैहिकफलमेव साधनीयमिति निश्चयवन्तं च पुरुषं सिनीतः वध्नीतः ।

यत एवं प्रेयसि पृथगादरवान् श्रेयस्साधनाध्ययनाध्यापनादिसत्कर्माऽपि भृतकाध्ययनादिना स्वोदरपूरणाय वोपयुङ्क्ते, किं बहुना साक्षान्मोक्षोपयोगि देवालयगृहिगेहादौ क्रियमाणं विष्णुपूजनमपि स्वोदरभरणार्थमेवोपकरोति, तस्मात् ''असतीसङ्गदोषेण सति च मतिविभ्रमः इतिवदुभयोरपि बन्धकत्वमिति भावः'' इति ।

केवलं नैते एव राघवेन्द्रतीर्थाः तथा वेदेशतीर्थाश्च एतान् व्यासतीर्था-ननुसृत्यैव व्याख्यान्ति । एतेषां व्यासतीर्थानां अवतरणिकैव प्रायः सर्वेषु मन्त्रेषु अवतरणिकात्वेन दीयते एतैः ।

व्यासतीर्थाः – दीयमानमपि पुत्रादिकं प्रेयोऽपरनामानं परित्यज्य श्रेयोऽपरनाम्नीं ब्रह्मविद्याम् अभ्यर्थयमानं प्रशंसितुं श्रेयसः प्रेयसः सकाशात् को विशेषः येन तदभ्यर्थयमानः प्रशस्यत इत्यतः श्रेयसो मोचकत्वात् प्रेयसो बन्धकत्वादित्याह– **अन्यदित्यादिना** ॥ काठके.१.२.१

वेदीशीयखण्डार्थः – दीयमानमपि पुत्रादिकं परित्यज्य ब्रह्मविद्या-मभ्यर्थयमानं नचिकेतसं स्तोतुं तदुभयस्वरूपमाह– अन्यदित्यादिना ॥
१.२.१.

राघवेन्द्रतीर्थखण्डार्थः – दीयमानमपि पुत्रादिकामं हित्वा ब्रह्मविद्यां याचमानः त्वं प्रशस्तोऽसीति तं ''सत्वं प्रियान्'' इत्यादिना प्रशंसितुं...
२.१.२

भावबोधकृत्वेन प्रसिद्धाः मान्या धन्याः श्रीरघूत्तमतीर्थाः एतेषां उपनिषद्भाष्यटीकाः उल्लेखयन्ति ।

**येन वेदान्तभाष्याणि विवृतानि महात्मना ।**
**तं वन्दे व्यासतीर्थार्यं वेदान्तार्थप्रसिद्धये ॥**

–बृहदारण्यकभावबोधः ।

किञ्च जगन्नाथतीर्थाः स्वीये भाष्यदीपिकानाम्नि ग्रन्थे एतेषां नैकानि वाक्यानि उद्धरन्ति । छान्दोग्यटीकायाः उल्लेखोऽपि भाष्यदीपिकायां दृश्यते ।

वेदेशतीर्था अपि छान्दोग्यभाष्यव्याख्याने आदिमे मङ्गळाचरणे एतान् स्तुवन्ति–

**श्रीमध्वकृतवेदान्तभाष्यं येन प्रकाशितम् ।**
**तं वन्दे व्यासतीर्थार्यं जयराजनिषेवकम् ॥** इति ।

नैकग्रन्थव्याख्यातारः अध्येतृणां चिरपरिचिताः श्री वंशपल्लीश्रीनिवासतीर्था अपि जयराजनिषेवकत्वेन वर्णयन्त्येतान् ।

इत्येवं प्रकारेण सर्वव्याख्यातृभिः आदृताः पूजिता मानिता इमे महानुभावाः ।

## व्यासतीर्थानां कृतयः

स्वगुरूणां श्रीमट्टीकाकृत्पादानां आज्ञया नैके ग्रन्थाः व्याख्याताः ।

१. तलवकारोपनिषद्भाष्यटीका (मुद्रिता)
२. आथर्वणोपनिषद् भाष्यटीका ''
३. तैत्तीरीयोपनिषद्भाष्यटीका ''
४. काठकोपनिषद्भाष्यटीका ''
५. माण्डूक्योपनिषद्भाष्यटीका ''
६. बृहदारण्यकोपनिषद्भाष्यटीका ''
७. छान्दोग्योपनिषद्भाष्यटीका (प्रकृते सम्पादितोऽयं ग्रन्थः)
८. ऐतरेयोपनिषद्भाष्यटीका (अनुपलब्धोयं ग्रन्थः)
९. महाभारततात्पर्यनिर्णयभावटीका
१०. बृहज्जयतीर्थविजयः
११. अणुजयतीर्थविजयः

१. **ऐतरेयोपनिषद्भाष्यटीका** – (अमुद्रिता) अस्याः नैकाऽपि मातृका संप्रति नोपलब्धा । परं अप्रसिद्धाष्टिप्पणीकारः कृष्णाचार्यनामानः स्वीयग्रन्थमङ्गलाचरणे अस्याः व्याख्याया उल्लेखं कुर्वन्ति । अस्याः मातृका, तञ्जापुरीग्रन्थालये (३.१५.९२) दर्शनीयाऽस्ति ।

**महैतरेयखण्डार्थो व्यासतीर्थादिभिर्लघु ।**
**सङ्गृहीतः स एवार्थो विस्तराल्लिख्यते मया ॥**

इति हि तेषामादिमः श्लोकः ।

२. **वृहदारण्यकोपनिषद्भाष्यटीका**–

अस्याः मातृकाः बरोडा प्राच्यसंशोधनालयग्रन्थालये (वि.सि.३९१४) मैसूरुनगरे (सि.९४८) तञ्जापुर्याञ्च (३.१६.५०) संरक्षिताः । इयमेका पञ्चशताधिकत्रिसहस्रग्रन्थात्मिका विस्तृतकृतिः । भाष्यदीपिकाकाराः श्रीजगन्नाथतीर्थाः इमामुल्लेखयन्ति । भावबोधकाराः श्रीरघूत्तमतीर्थाश्च मङ्गलाचरणे एषां नाम स्वीकुर्वन्ति ।

३. **तैत्तिरीयोपनिषद्भाष्यटीका – (मुद्रिता)**

इयमतीवाण्वीकृतिः । तथाऽपि स्पष्टतरनिरूपणात्मिका । अस्याः ग्रन्थसङ्ख्या चतुःशतम् । कुम्भकोणवास्तव्येन टि.आर्. कृष्णाचार्य-महोदयेन तथा विश्वमध्वमहापरिषदा च प्रकाशिता ।

४. **छान्दोग्यभाप्यटीका– (प्रकृतसम्पादनम्)**

अस्याः मातृकाः मैसूरुनगरीयप्राच्यविद्यासंशोधनालये तथा तञ्जापुर्यां (१६१८) बेङ्गळूरुहोसपेटनगरस्थोत्तरादिमठीयग्रन्थालये च सन्ति ।

अष्टाध्यायीयं पूर्णा कृतिः । पञ्चशताधिकद्विसहस्रग्रन्थात्मिका । अस्याः उल्लेखः भाष्यदीपिकायां ४२८ पत्रे दृश्योऽस्ति । प्रकृते सम्पादनाय स्वीकृतेयं कृतिः ।

**५. केनोपनिषद् अथवा तलवकारोपनिषद्भाष्यटीका– (मुद्रिता)**

इयं १९०५ मध्ये मुद्रापिता । विश्वमध्वमहापरिषदा पुनर्मुद्रिता । अस्याः उल्लेखोऽपि भाष्यदीपिकायां दृश्यते ।

**६. मुण्डकोपनिषद्भाष्यटीका** – (मुद्रितमिदम्) । पञ्चाशदधिकत्रिशतात्मिका ग्रन्थव्याप्तिः ।

**७. माण्डकोपनिषद्भाष्यटीका–**

मुद्रिताचेयम् । ग्रन्थव्याप्तिः षष्ट्यधित्रिशतम् । इयमपि विश्वमध्वमहापरिषदा मुद्रापिता । मयैव सम्पादिता ।

उपनिषदां खण्डार्थः भाष्यार्थश्च एकत्र सङ्गततया दत्तोऽस्ति ।

**८. कठोपनिषत् भाष्यटीका** – इयमपि विश्वमध्वमहापरिषदा मुद्रिता वर्तते ।

**९. महाभारततात्पर्यनिर्णयव्याख्या–**

अस्याः मातृकाया अस्तित्ववार्ता मैसूरतः (५०६३) लब्धा । तथा बेङ्गलूरीयश्रीमदुत्तरादिमठीयग्रन्थालयेऽपि अस्ति । इदानीं तावत् अध्यायनवकं श्रीमदुत्तरादिमठाधीशैः श्रीसत्यात्मतीर्थैः ऐदंप्राथम्येन विश्वमध्वमहापरिषदा मुद्रापिता ।

**१०. जयतीर्थविजयः** – नैकच्छन्दआत्मकमिदं काव्यम् । पञ्चसर्गाः सन्त्यत्र ।

**११. अणुजयतीर्थविजयः** – अस्मिन् विजये स्रग्धरावृत्ते केवलं चतुस्त्रिंशत् श्लोकाः सन्ति । श्रीमज्जयतीर्थपूज्यपादानां ग्रन्थनाम अष्टादश-श्लोके तथा एकोनविंशत्यांच दृश्यते । काशीयात्रायाः प्रयागयात्रायाश्च उल्लेखः । तथा विद्याधिराजानां शिष्यत्वेन स्वीकारः आश्रमप्रदान-मित्यादिका कथा श्रूयते ।

## छान्दोग्यभाष्यटीकायाः वैशिष्ट्यम्

१. पठनपाठनसम्प्रदायागतच्छान्दोग्योपनिषद्भाष्यस्याध्ययने अध्यापने च महान्तमुपकारमादधतीयं कृतिः ।
श्रीमन्न्यायसुधादिनैकोद्ग्रन्थनिर्मातृणां श्रीमज्जयतीर्थपूज्यपादानां विनेयकृतिः इत्येतावदेव प्रथमं वैशिष्ट्यमस्य व्याख्यानस्य ।

२. संक्षेपतः अत्र विषयनिरूपणपद्धतिरतीव मनोहारिणी

३. प्रायशोऽधिकानां उपनिषद्वाक्यानां भाष्यवाक्यानाञ्च अर्थविवरणेन भावाविष्कारेण च विदुषां पामराणां हृदयहारिणी ।

४. योजनाक्रमः अयमपूर्वोऽत्र । इदम्प्रथमतया परिदृश्यमानप्रकारः ।

५. उपनिषदां खण्डार्थनिरूणम् । एतदपि खण्डार्थनिरूपणं माध्व-संप्रदाये ऐदंप्राथम्येन रचितम् । अयं खण्डार्थनिरूपणप्रकारचातुरी इतरेषां व्याख्यानानां जीवातुभूता । इयं खण्डार्थकथनसरणि-रर्वाचीनैर्व्याख्यातृभिरनुसृता ।

६. उपनिषदो, भाष्यस्य च अवतारिकाप्रदानं मुख्यतः सर्वत्र दृश्यते । अवतारिकयैव उपनिषद्वाक्यानां भाष्यवाक्यानां च अतीव सरलतया सुगमतया च अभिप्रायं निरूपयति ।

७. केषाञ्चन शब्दानां तत्र तत्र विग्रहः प्रदर्शितः ।

८. कचिच्च पदार्थोक्तिः परिदृश्यते । इत्येवमादिना क्रमेण इदं व्याख्यानं अतीव मनोहारि । इदं व्याख्यानं–

**पदच्छेदः पदार्थोक्तिः विग्रहो वाक्ययोजना ।**
**आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम् ।। इति ।**

यद्व्याख्यानलक्षणमुक्तं तदिदं स्मारयति ।

तस्मादेषा व्याख्या पाठान्तरसंशोधनादिना सहावश्यं प्राकाशमुपनेतुमर्हेति मातृकाचतुष्टयसहायेन सम्पादिता ।।

## छान्दोग्यभाष्यटीकाविशेषविचारः

तत्र तावदृषिपरम्परा महासंहितावाक्योक्त्या भाष्ये निरूपिता । तट्टीकायां स्पष्टीक्रियते । तथा हि – ऋष्यादीनज्ञात्वा विद्यामनुतिष्ठतोऽनर्थोक्तेरस्यास्तदवगमनाय ऋष्याद्याह । हयग्रीवेति । हरेरनन्तगुणत्वात् बहुवाक्यात्मकत्वेन विस्तृताया अस्यास्तत्प्रतिपादकत्वं युक्तमिति भावेनोक्तं विस्तृतगुणमिति ।

अनेनास्या हयग्रीवऋषिः शेषशायी देवतेत्युक्तं भवतीति ।

### १. भाष्यस्थप्रतिवाक्यस्याप्यवतारिकानिरूपणम् ।

१) यद्यपि टीकासु सर्वासु अवतरणिका भवत्येव । तथाऽपि प्रायः प्रतिवाक्यास्याप्यवतरणिका अस्तीत्यस्या विशेषः । अनेन भाष्यवाक्यं किमर्थं प्रवृत्तमिति सुस्पष्टं ज्ञातं भवति । तथाहि– प्राणस्य तद्वेदितुश्चोक्तं ज्येष्ठत्वं श्रेष्ठत्वं च केभ्यः कदेति न ज्ञायते तद्व्याचष्टे ।। य इति ।।

**भाष्यम्–** **यः श्रेष्ठं ज्येष्ठमखिलदेवानां वायुमञ्जसा ।**
**वेद सः स्वसमानानां ज्येष्ठः श्रेष्ठो विमुक्तिगः ॥**

वसतां श्रेष्ठो वसिष्ठः । तत्कथं घटते सर्वेषामपि वसिष्ठत्वादित्यतस्तद् घटयन् व्याचष्टे ॥ **समीप इति** ॥

**समीपे वसतां श्रेष्ठः वसिष्ठस्यैव वेदनात् ।**

२. प्रणवस्य सर्ववेदार्थोऽप्यर्थ इति भावेनाह **तेनेति । तेन** ओंनामकेन । स्वप्रतिपाद्येन सतेयं त्रयी विद्या प्रवर्तत इति तद्व्याचष्टे **तेनेति** ॥

**तेनैव विष्णुनेयं च त्रयीविद्या प्रवर्तते ।**
**ओमित्युक्त्वा हि तद्व्याख्या सर्वैर्मन्त्रैः प्रवर्तते ॥**

अस्तु प्रणवस्य सर्ववेदार्थवत्वम् । तथापि विष्णोः सर्ववेदार्थत्वं कुत इत्यत आह **ओमित्याश्रावयतीति** । एतस्यैवाक्षरस्य विष्णोरपचित्यै पूजार्थं वेद ओमित्युक्त्वा तदर्थमाश्रावयति व्याख्यातीत्यादि योज्यं । विष्णोर्वेदार्थत्वाभावे तदयोगादित्यर्थः । तथाऽप्रतीतेस्तद्व्याचष्टे **ओमित्युक्त्वेति** ॥ भगवतः सर्वोत्तमत्वं समृद्धत्वं सर्ववेदार्थत्वं चोक्तं प्रणवार्थं महिम्ना रसेनेत्यनूद्य तेनोभावित्यादिना सर्वप्रवर्तकत्वं चार्थमाह । उभौ कावित्यप्रतीतेस्तद्व्याचष्टे । **महिम्नेति** ॥

३) ननु षष्टिघटिकाकालो ह्यहोरात्रस्तस्य वस्वादिभ्य उक्तक्रमेण विभागे कृतेऽपीषदूनघटिकाद्वयमवशिष्यते । तस्य देवता नोक्तेत्यस्ता एव देवतेत्याशयेन स्पष्टं कालविभागमाह एकेति ॥

**एकत्रिंशत्तु घटिकाः साधिका वसुदैवताः ।**
**तदर्धा रुद्रदैवत्यास्तत आदित्यदैवताः ॥**

ततस्तदर्धा इति यावत् । चतुर्षु पर्वसु श्रुतं द्विस्तावदिति वाक्यं क्रमेण वस्वादिकालार्थत्वेन व्याख्यातम् । तथापि तद्वाक्येन स्फुटमप्रतीतेर्व्याख्याय तद्दर्शयति **रौद्र इति** ॥

**रौद्रो द्विगुणीभूतो वसुकालो यावांस्तावान् भवतीति द्विस्तावत् ।**

**द्विः**द्विगुणीभूतो **रौद्रः** । **कालो** वसुकालो यावांस्तावान् भवतीति द्विस्तावदिति योजना । वाक्यार्थमुक्त्वा तात्पर्यार्थमाह **अर्ध** इति । वसुकालार्धो रौद्रः काल इत्यर्थः। अनयैव रीत्या द्विगुणीभूत आदित्यकालः रौद्रकालो यावांस्तावान् भवतीति द्विस्तावदित्यादि योजना सर्वत्र द्रष्टव्या । अहरादिकालविशेषाः वस्वादिदेवताकत्वेनोक्तास्तद्युक्त्याच समर्थयते **ब्राह्म** इत्यादिना ॥

## २. भाष्यार्थयोजनाक्रमनिरुपणम्

१) केषाञ्चन भाष्यवाक्यानां स्पष्टं योजना कथ्यते । अनेन भाष्य-वाक्येन किमुक्तं स्यादिति सन्देहः भवति । तादृशवाक्यानां स्पष्टं योजनां कथयति । तथा हि– ओमिति तावदनुज्ञाय अनुज्ञा एषा उ एव एषैव समृद्धिरिति ।

तद्वाक्यं तथाऽप्रतीतेर्व्याचष्टे । ओमित्ययमित्यादिना ।

योजना तु प्रणवस्यार्थान्तरमुच्यते । ओमित्ययं पूर्णवाची । कुतः समृद्धिस्तावदोमितीरिता । तदपि कुतः ओमित्यनुज्ञातत्वात् । अनुज्ञाचायं ते कामः समृद्धो भवेदित्येवंरूपा। अतः समृद्धिवाची हरेरपि ईरितः प्रयुक्त ओंशब्दः पूर्णत्ववाची स्यादिति । अत्र ओंशब्दस्य पूर्णत्वार्थकत्वं कथमिति स्पष्टं न ज्ञायते । तमर्थं विशदीकृत्य योजनामाहानेन वाक्येन ।

२) सर्वे स्वरा घोषवन्त इत्याद्यप्रतीतेर्व्याचष्टे – **इन्द्र इत्यादिना ॥**

**इन्द्रे बलं ददानीति स्वरान् घोषवलात्मकान् ॥**

**ब्रूयादग्रस्तान्निरस्तानूष्मणः स्पर्शानपि ।**

अत्र योजना ॥ इन्द्रे बलं ददानीति स्वरान् घोषबलात्मकान् घोषोनाम ध्वनिविशेषः । घोषबललक्षणप्रयत्नयुक्तान् ब्रूयात् । अहं स्वात्मानमेव प्रजापतिनामकस्य विष्णोरर्पये इति उष्मणोऽग्रस्तानदष्टानतिद्रुतोच्चरितानिति यावत् । अनिरस्तानिति दूरोच्चारितान् । विवृतप्रयत्नयुक्तान् ब्रूयात् । समस्तान् स्पर्शानपि मृत्योरात्मानं परिहराणि मोक्षयोग्यान् मृत्यूज्झितान् करिष्यामीति लेशेनानभिहितान् लेशतोऽप्यसंस्पृष्टान् ब्रूयादिति ।

३) इदं सर्वं जगत् ब्रह्म खलु, कथं तस्माज्जायते तस्मिंल्लीयते तेनानितीति तज्जलान् कार्यकारणयोरैक्यादिति परव्याख्यानं तदसाधु । अप्रामाणिकत्वात् । प्रमाणविरुद्धत्वादित्याशयवान् पर्व प्रमाणेन **व्याचष्टे– इदं ब्रह्मेत्यादिना ॥**

**इदं ब्रह्मातिसामीप्यात् सर्वं पूर्णगुणत्वतः ।**
**तच्च ब्रह्मजलान् साक्षाद्योऽसौ विष्णुर्जलेऽनिति ॥**

सर्वान्तस्थत्वेनातिसामीप्यात् । तद्ब्रह्म जलान् च । यतो जलेऽनिति प्रवर्तते ब्रह्मनामकं । योऽसौ विष्णुः साक्षाद्ब्रह्मेति योजना । विष्णुर्जले तिष्ठतीति कुत इत्यतः श्रुतिं प्रमाणयन्नाह– **आनीदिति ॥**

**आनीदवातमिति यं वेदवागवदत् स्फुटम् ।**
**अप्रकेते तु सलिले ब्रह्म नारायणोऽपि सः ॥**

आनीदवातं स्वधया तदेकं इति वेदवाक् । नासदासीन्नो सदासी-

दित्यादिना कार्यं सर्वात्मना नासीत् । कारणं चष्टमानं नासीत् इति प्रलये कार्यकारणाभावं निरूप्य तम आसीत्तमसा गूढमग्रे प्रकृतं सलिलं सर्वमा इदमिति जडचेतनप्रकृतिभावमभिधायागाधत्वेनाप्रकेते अविज्ञाते सलिले तदेकमवातं वातप्रेरणया विना स्वधया स्वेच्छयै(सुखेनैववा)वानीदचेष्टतेति यमवदत् स ब्रह्म नारायण इति योजना ।

## ३. उपनिषत्पदार्थविवरणम्

१) तत्र उपनिषदि ''अमनसः'' इति शब्दः श्रूयते । तस्य च आपाततः मनःशून्याः इत्यर्थः प्रतीयते । स चार्थः बाधितः सर्वथा मनःशून्यत्वे वाक्चक्षुःश्रोत्रेन्द्रियव्यापार एव न स्यात् । अस्ति च व्यापारः । अतः कोर्थोऽस्य शब्दस्य इत्यतोऽर्थमाह ॥ अमनसः प्राणेतरमनोभिमान्यनधिष्ठितमनोवन्तः । प्राणाधिष्ठितमनोवन्तः इति यावत् इति । मनोभिमानिदेवानधिष्ठितत्वादेव अमनसः इत्यर्थः ।

२) पड्वीशशङ्कवः इत्यस्य कोऽर्थः इति न प्रतीयते । तस्याप्यर्थमाह ॥ पड्वीशो हयबन्धकरज्जुरिति ।

३) व्याननिष्ठतयोद्गीथोपास्तिमाह– **अथ खल्विति** ॥ व्यानेकोऽतिशयः येन तन्निष्ठतयोद्गीथोपास्तिः कार्येत्यतस्तस्य प्राणापानसन्धिप्रवर्तकत्वेनातिबलत्वादित्याह– **अथ यः प्राणापानयोः सन्धिरिति** ॥ कौ प्राणापानौ नाम, यत्सन्धिप्रवर्तकत्वं व्यानस्येत्यतस्तौ तल्लक्षणोक्त्याह– यद्वै इत्यादिना । यत्प्राणिति । यः ऊर्ध्वं प्राणनं करोति स प्राणः । यदपानिति यः अधोनयनं करोति सोऽपान इत्यर्थः । व्याने उद्गीथोपास्तौ तस्य वागादिप्रवर्तकत्वं च हेतुमाह– **यो व्यानः सा वागित्यादिना** ॥ तस्य वागादिप्रवर्तकत्वं कुत इत्यतस्तदनुभवारूढं करोति – **तस्माद-**

**प्राणन्ननपानन्नित्यादिना** ॥ प्राणापानौ निरुध्येति यावत् । अतो व्यानो वागादिप्रवर्तक इति शेषः ।

### ४. संग्रहेण खण्डार्थकथनम्

पञ्चमाध्याये एकादशखण्डे प्राचीनशाल इत्यादिखण्डः सुदीर्घः सम्प्रवृत्तः । तस्य सङ्ग्रहः व्यासतीर्थैः एवं क्रियते । तत्रहि सर्वपापविधूननेन पुण्यलोकाप्तिकारणपञ्चाग्निविद्या उक्ता । सर्वलोकगतसर्वजीवाद्यन्नातृत्वोपादकवैश्वानरविद्यामाख्यायिकयाऽऽहेति ॥

आदित्यनिष्ठां सप्तविधसामनामकभगवदुपास्तिमाह ॥ **अथ खल्वमुमादित्यमित्यादिना** ॥ सामत्वं द्वेधा निरुच्य दर्शयति ॥ **सर्वदेत्यादिना** ॥

सामनामकस्यादित्यास्योपास्त्यर्थं सर्वभूताश्रयत्वं महिमानमाह ॥ **तस्मिन्निति** । अन्वायत्तान्याश्रितानि । सर्वभूतानां तदाश्रयत्वं विशदमाह ॥ **तस्य यदित्यादिना** । तस्यादित्यस्योदयात् । पुरा यद्रूपं स हिंकारः हिमिति सामभक्तिप्रतिपाद्यो भगवांस्तत्र तिष्टतीत्यादि योजना द्रष्टव्या ॥

एवमेवानेकानि वैशिष्ट्यानि सन्ति ।

## प्रकृतमातृकापरिचयः

### व्यासतीर्थरचितछान्दोग्यभाष्यटीकामातृकाः

अस्य ग्रन्थरत्नस्य शुद्धपाठसम्पादनार्थं मातृकाचतुष्टयमाश्रितम् । चतस्रोऽपि मातृकाः कर्गजपत्रे देवनागरीलिप्यां लिखिताः वर्तन्ते । तत्र मातृकात्रयं सम्पूर्णं लब्धम् । अवसितमेकमपूर्णम् । पाठसम्पादनक्रियायां मातृकाणां कृते सरलतया क, ख, ग, घ इति सङ्केताक्षराणि दत्तानि ।

१) कमातृका

एषा तावद् अनन्तश्रीविभूषितैः श्रीमदुत्तरादिमठाधीशैः श्रीसत्यात्मश्रीचरणैः कर्नाटकराज्यस्य राजधानीबेङ्गळूरु नगरस्थोत्तरादिमठग्रन्थालयादुद्धृत्य दत्ताऽस्ति । सम्पूर्णतया लब्धा । प्रायः बहुशुद्धपाठयुक्तेयं मातृकैव सम्पादने प्रामुख्येन स्वीकृता ।

अशीतिः– (८०) (पुटानि षष्ट्युतरशतम् (१६०) । मातृकाविवरणम् – सामग्री कर्गजपत्रम् । पत्राणि – पङ्क्यः । लिपिः देवनागरी । स्थितिः समीचीना ।

२. खमातृका

मातृकेयं डा. व्यासनकेरे प्रभञ्जनाचार्याणां व्यासमध्वप्रतिष्ठानस्य मातृकालयात् अधिगता । पूर्णतया लभ्यते ।

मातृकाविवरणम् । सामग्री कर्गजपत्रम् । पत्राणि षट्सप्ततिः (७६) (पुटानि द्विपञ्चादुत्तरशतम् । १५२) पङ्क्यः–(द्वादश १२) । लिपिः देवनागरी । स्थितिः समीचीना ।

३. गमातृका

मातृकैषा होसपेटेप्रान्त्यस्थोत्तरादिमठग्रन्थालयात् प्राप्ता । असम्पूर्णतया लब्धा । मध्ये मध्ये कानिचन पत्राणि लुप्तानि । अन्त्ये च कानिचन पत्राणि लुप्तानि ।

मातृकाविवरणम् – सामग्री कर्गजपत्रम् । लिपिः देवनागरी । स्थितिः जीर्णा ।

### ४. घमातृका

सुधाविशारदानां विद्वदपश्चिमानां श्रीगुत्तलरङ्गाचार्याणां विद्यामन्दिर-ग्रन्थालयात् प्राप्ता मातृकेयम् । मातृकाविवरणम् । सामग्री कर्गजपत्रम् । लिपिः देवनागरी । स्थितिः अतीव जीर्णा ।

**पाठसम्पादनप्रकारः**

मातृकाचतुष्टयमाश्रित्य छान्दोग्यभाष्यटीकायाः शुद्धपाठसम्पादनं कृतम् । केचन लेखकदोषाः इदम्प्रथमतया सम्पादितायाः छान्दोग्यभाष्यटीकायाः सर्वासु मातृकासु दृश्यन्ते स्म । ते च यथामति निवारिताः ।

पाठभेदाः ‘ ’ एतच्चिह्ने अन्तःकृत्वा मातृकानाम च निर्दिश्याधस्तात् सम्प्रदर्शिताः । तत्र तत्र परव्याख्याविमर्शनं कृतमस्ति । परव्याख्या विमर्शनं वेदेशतीर्थीये कृतमस्ति । तदधः सम्प्रदर्शिताः । केषाञ्चन शब्दानां अर्थाश्च अधोनिर्दिष्टाः । अत्रावसरे उपनिषदः भाष्यस्य प्रति-विषयं शीर्षिकादि च प्रदत्तम् । तदेवं मातृकाचतुष्टयमाश्रित्य प्रकृतः पाठः शुद्धतरः यथाशक्ति यथामति सम्पादितः ।

## उपसंहारः

भौतिकदृष्ट्या सागरजीविनः देहावयवरूपोऽपि शङ्खः भारतीयसंस्कृतौ महालक्ष्मीसन्निधानभाजनतया समादृतः । तत्रापि दक्षिणावर्तशङ्खस्य ततोऽप्यतिमहत्वं वर्णितम् । तस्य विषये काचन कथा श्रूयते मध्वविजये । कश्चन सुधाकारः सागरतीरे लभ्यं शुक्तिशङ्खादिकं चूर्णीकृत्य वह्निना भस्मस्तात् विधाय सुधां सम्पाद्य जीवति । तेन कदाचित् दक्षिणावर्तशङ्खः अदृश्यत । अन्यशङ्खवत् तमपि पेष्टुमयतत । परन्तु दृढतरत्वात् तस्य तथा कर्तुं स नापारयत् । अलं श्रमेणेति तं प्रचिक्षेप ।

१) कमातृका

एषा तावद् अनन्तश्रीविभूषितैः श्रीमदुत्तरादिमठाधीशैः श्रीसत्यात्मश्रीचरणैः कर्नाटकराज्यस्य राजधानीबेङ्गळूरु नगरस्थोत्तरादिमठग्रन्थालयादुद्धृत्य दत्ताऽस्ति। सम्पूर्णतया लब्धा। प्रायः बहुशुद्धपाठयुक्तेयं मातृकैव सम्पादने प्रामुख्येन स्वीकृता।

अशीतिः– (८०) (पुटानि षष्ट्युतरशतम् (१६०)। मातृकाविवरणम् – सामग्री कर्गजपत्रम्। पत्राणि – पङ्क्यः। लिपिः देवनागरी। स्थितिः समीचीना।

२. खमातृका

मातृकेयं डा. व्यासनकेरे प्रभञ्जनाचार्याणां व्यासमध्वप्रतिष्ठानस्य मातृकालयात् अधिगता। पूर्णतया लभ्यते।

मातृकाविवरणम्। सामग्री कर्गजपत्रम्। पत्राणि षट्सप्ततिः (७६) (पुटानि द्विपञ्चादुत्तरशतम्। १५२) पङ्क्यः–(द्वादश १२)। लिपिः देवनागरी। स्थितिः समीचीना।

३. गमातृका

मातृकैषा होसपेटेप्रान्त्यस्थोत्तरादिमठग्रन्थालयात् प्राप्ता। असम्पूर्णतया लब्धा। मध्ये मध्ये कानिचन पत्राणि लुप्तानि। अन्त्ये च कानिचन पत्राणि लुप्तानि।

मातृकाविवरणम् – सामग्री कर्गजपत्रम्। लिपिः देवनागरी। स्थितिः जीर्णा।

### ४. घमातृका

सुधाविशारदानां विद्वदपश्चिमानां श्रीगुत्तलरङ्गाचार्याणां विद्यामन्दिर-ग्रन्थालयात् प्राप्ता मातृकेयम् । मातृकाविवरणम् । सामग्री कर्गजपत्रम् । लिपिः देवनागरी । स्थितिः अतीव जीर्णा ।

**पाठसम्पादनप्रकारः**

मातृकाचतुष्टयमाश्रित्य छान्दोग्यभाष्यटीकायाः शुद्धपाठसम्पादनं कृतम् । केचन लेखकदोषाः इदम्प्रथमतया सम्पादितायाः छान्दोग्यभाष्यटीकायाः सर्वासु मातृकासु दृश्यन्ते स्म । ते च यथामति निवारिताः ।

पाठभेदाः ‘ ’ एतच्चिह्ने अन्तःकृत्वा मातृकानाम च निर्दिश्याधस्तात् सम्प्रदर्शिताः । तत्र तत्र परव्याख्याविमर्शनं कृतमस्ति । परव्याख्या विमर्शनं वेदेशतीर्थीये कृतमस्ति । तदधः सम्प्रदर्शिताः । केषाञ्चन शब्दानां अर्थाश्च अधोनिर्दिष्टाः । अत्रावसरे उपनिषदः भाष्यस्य प्रति-विषयं शीर्षिकादि च प्रदत्तम् । तदेवं मातृकाचतुष्टयमाश्रित्य प्रकृतः पाठः शुद्धतरः यथाशक्ति यथामति सम्पादितः ।

## उपसंहारः

भौतिकदृष्ट्या सागरजीविनः देहावयवरूपोऽपि शङ्खः भारतीयसंस्कृतौ महालक्ष्मीसन्निधानभाजनतया समादृतः । तत्रापि दक्षिणावर्तशङ्खस्य ततोऽप्यतिमहत्वं वर्णितम् । तस्य विषये काचन कथा श्रूयते मध्वविजये । कश्चन सुधाकारः सागरतीरे लभ्यं शुक्तिशङ्खादिकं चूर्णीकृत्य वह्निना भस्मस्तात् विधाय सुधां सम्पाद्य जीवति । तेन कदाचित् दक्षिणावर्तशङ्खः अदृश्यत । अन्यशङ्खवत् तमपि पेष्टुमयतत । परन्तु दृढतरत्वात् तस्य तथा कर्तुं स नापारयत् । अलं श्रमेणेति तं प्रचिक्षेप ।

पतितं तं शङ्खोपजीवी वणिक् ददर्श । तस्य दुर्लभत्वं जानन् स विना विलम्बं तमानीय आपणे विक्रयणाय समस्थापयत् । इतरवस्त्वपेक्षया अधिकं मूल्यञ्च निरधारयत् ।

तदनु कश्चन धार्मिको राजा मूल्येन तं क्रीत्वा गृहमानीय प्रतिदिनं सवैभवं यथोचितं लक्ष्मीनारायणं प्रपूज्य इह धनकनकराजाश्वादिसमृद्धिं पुत्रपौत्रादिसौभगं शत्रुजयादिभाग्यं चानुभूय परत्राप्युत्तमान् लोकानाप इति सा कथा ।

अस्यां कथायां महिमविशेषवान् शङ्खः, तस्य त्रिविधाः उपयोक्तारश्च दृश्यन्ते । तत्र शङ्खस्थाने भारतीयज्ञानसन्ततिः, तत्रापि विश्वतोमुख-प्रयोजनवती उपनिषद्दर्शनज्ञानसम्पत् विभाव्यते चेत् तत्समक्षं त्रिविधा जना दृश्यन्ते । केचन अध्यात्मगन्धशून्याः शीघ्रमर्थकारिभिः लौकिक-विद्याभिः सन्तोल्य इमां विद्यां दूरे कुर्वन्ति । अपरे केचन तत्र महत्वबुद्धिं धारयन्तोऽपि तां विद्यां पुस्तकरूपेण पीठे संस्थाप्य कुङ्कुमाक्षतादिना सम्पूज्य कवाटे स्थापयन्ति, अथवा तया जीवनं यापयन्तः अर्थैकदृष्टयः केवलं मस्तके धरन्ति । न कदाऽपि आत्मसात् कर्तुमिच्छन्ति । अल्पा अपि केचन तामेतां विद्यां श्रुत्वा मत्वा हृदये स्थापयन्ति । उपनिष-द्दर्शनदर्शितरीत्या चरन्तः मनोबलं सम्पाद्य लौकिकीमुन्नतिमपि लभन्ते । अलौकिकीं शान्तिं समृद्धिमपि लभन्ते । साम्प्रतिके जीवने मनुष्यः क्रमेण अधिकस्वार्थी, अधिकभोगमग्नः, अल्पपरहितेच्छुः विस्मृतप्रायपरमात्मा च वर्तते । अत एव तस्य दुःखं अतृप्तिः असन्तुष्टिश्च क्रमेणाभिवर्धन्ते । तदेदृश्यां परिस्थितौ अस्मत्प्राचीनैः परिदृष्टा उपनिषद्दर्शनपद्धतिः सुखाय कल्पते ।

## अन्तनिवेदना

अन्ते इदं वक्तुमभिलषामि यत् उपनिषत्प्रस्थानान्तर्गतायाः श्रीमज्जयतीर्थपूज्यपादविनेयरचितयाः छान्दोग्यभाष्यटीकायाः सम्पादनावकाशः अस्मत्प्राचीनानां पुण्यवशादेव लब्धः । न केवलं विद्वत्प्रपञ्चे किन्तु सारस्वतप्रपञ्चे एव सुधादिनैकोद्ग्रन्थनिर्मातृणां श्रीज्जयतीर्थपूज्यपादानां स्थानं सुमहत् । तेषामुपकारः निश्चेतुमशक्यः । टीकाग्रन्थेष्वसत्सु श्रीमध्वाचार्याणां ग्रन्थभावः दुरधिगम एवासीत् । तेषां शिष्याणां व्यासतीर्थानां कृतिरेका प्राकाश्यं नीयते इति तु महतः प्रमोदस्य कारणम् । अस्मिन् कर्मणि यथाशक्ति प्रयत्नो विहितः । लिखितश्च सविमर्शं विस्तृतोपोद्घातः । अत्रोपोद्घाते प्रायशो ग्रन्थाधारेणैव विषयो निरूपितः । प्रमादस्य सम्भावितत्वात् यदत्र स्खलनं भवेत् तत् क्षमासमुद्राः सदयहृदयाः विपश्चिदपश्चिमाः मधुरया कारुण्यपूर्णया दृष्ट्या निरीक्ष्य ससूचनं क्षमन्तामिति सविनयं प्रार्थये ।

अनेन वाग्व्यापारेण भारतीरमणमुख्यप्राणान्तर्गतः साकल्येन वाचामगोचरोऽप्यौपनिषद; पुरुषः ग्रन्थप्रतिपाद्यः अम्भृणीसमेतः वासिष्ठकृष्णापरनामको भगवान् वेदव्यासः प्रीणात्विति सम्प्रार्थ्य विरमामि ।



छान्दोग्योपनिषत्-भाष्य-व्यासतीर्थीय-टीका

# अथ छान्दोग्योपनिषत्

## अथ प्रथमाध्याये प्रथमः खण्डः

### शान्तिमन्त्रः

।। हरिः ॐ ।। आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुःश्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मौपनिषदं माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ।

ॐ शान्तिः शान्तिः शान्तिः ।।

### उद्गीथोपासना

उपनिषत्– ओमित्येतदक्षरमुद्गीथमुपासीत । ओमिति ह्युद्गायति तस्योपव्याख्यानम् ।। १ ।।

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

## अथ छान्दोग्योपनिषद्भाष्यम्

### मङ्गलाचरणम्

अत्युद्रिक्तविदोषसत्सुखमहाज्ञानैकतानप्रभा-
सर्वप्राभवशक्तिभोगबलसत्सारात्मदिव्याकृतिम् ।
सृष्टिस्थाननिरोधनित्यनियतिज्ञानप्रकाशावृति-
ध्वान्तामोक्षविमोक्षदं हरिमजं नित्यं सदोपास्महे ।।

## श्रीमच्छान्दोग्योपनिषद्भाष्यव्यासतीर्थविरचिताटीका भाष्यविवृतिः

**प्रणम्य रमणं लक्ष्म्याः पूर्णबोधान् गुरूनपि ।**
**छन्दोगोपनिषद्भाष्यविवृतिः क्रियते मया ॥ १ ॥**

इहामुत्र फलभोगविरक्तस्य शमादिमतो मुमुक्षोरनिष्टनिवृत्तीष्टावाप्ति-साधनप्रतिपादिकां छान्दोग्योपनिषदं यथावद्व्याचिख्यासुर्भगवानानन्दतीर्थ-मुनिः स्वयमन्तरायविधुरोऽपि शिष्यान् शिक्षयन् निरन्तरायप्रारिप्सित-परिसमाप्त्यादिहेतुतया शिष्टाचारपरंपराप्राप्तं तदुक्तगुणवत्तया भगवत्स्तुति-रूपं मङ्गलमादावाचरति **अत्युद्रिक्तेति** ॥ विदोषसत्कमुत्पत्यादिराहित्यम् । सुखस्य सत्वमुत्पत्तिनाशदुःखसंभिन्नत्वाल्पत्वादिराहित्यम् ।[१] **एकताना** अनन्यवृत्तिः । तथा चात्युद्रिक्ताच सा विदोषाच सा सत्सुखमहाज्ञान-योरेकतानप्रभाच इत्यत्त्युद्रिक्तविदोषसत्सुखमहाज्ञानैकतानप्रभा । विदोषसत् विदोषभूतमिति सुखविशेषणम् । सर्वेति प्राभवशक्त्योर्विशेषणम् । सत्सुख-महाज्ञानैकतानप्रभादिगुणानां श्रेष्ठा सारस्वरूपभूताऽत एव दिव्याकृति-र्मूर्तिर्यस्येति सत्यात्मदिव्याकृतिम् । **आवृतिः** अज्ञानम् । **अमोक्षः** संसारः । **अजं** नित्यं जन्ममरणादिदोषरहितम् ।

न वयमिदानीमेव कार्यार्थत्वेन हरिमुपास्महे । किं नाम सदोपास्महे ।[२] शिष्याः सम्भावितविघ्नाः कार्यादौ मङ्गलाचरणं कुर्युरिति सदाशब्दं प्रयुञ्जानस्य भावः ।

---

१. सुखस्य सत्वं नाम साधुभावः । ''सद्भावे साधुभावे च सदित्येतत् प्रकीर्तितम्'' इति वचनात् ।

२. श्रुतौ ''उपासीत'' इति विधिश्रवणेऽप्युपास्महे इत्युत्तमपुरुषं प्रयुञ्जानः स्वोपासनस्य स्वेच्छानियतत्वं सूचयति । भविष्यद्ब्रह्मणः स्वस्य मनुष्यवद्विधिनियतत्वाभावात् । तथा हि श्रुतिः - ''विधिनियता मनुष्याः अनियता देवाः ब्रह्मैव स्वेच्छानियतः'' इति ।

## उपोद्घातभाष्यम्

हयग्रीवमुखोद्गीर्णगीर्भिर्देवी[१] रमा पतिम् ।
अस्तुवद् विस्तृतगुणं भोगिप्रस्तरशायिनम् ।।

ओमितिनामकमक्षरं सर्वसन्निहितत्वादेतत् । उच्चत्वाद्गीतत्वात् सर्वस्थानत्वाच्चोद्गीथं भगवन्तमुपासीत । उक्तं च महासंहितायाम्–

हयग्रीवोद्गीतवाक्यैः रमा देवी रमापतिम् ।
ओमित्येतन्मुखैर्देवमस्तुवत्सामवेदगैः ।। इति ।

ओंनामानमुपासीत तदर्थगुणपूर्वकम् ।
ओतत्वादवनान्मानादधिकोच्चत्वकारणात् ।।
आनन्दादोजसश्चैव भरणादोमुदाहृतः ।। इति समन्वये ।

ओतमस्मिन् जगत्सर्वमत्युच्चश्चाखिलैर्गुणैः ।
इत्योमिति सदोपास्यः सोऽक्षरः पुरुषोत्तमः ।।
उच्चत्वाद्गीयमानत्वात् स्थानादुद्गीथ उच्यते ।

भगवतः ओङ्कारवाच्यत्वकथनम्

ओमित्येनं समुद्दिश्य ह्युद्गाता गायति स्फुटम् ।।

विष्णोरोमितिनाम्नोऽस्य व्याख्यानमधिकोच्चता ।
अकारेणाधिकं प्रोक्तमुकारेणोच्चमुच्यते ।।

तथा मितं सर्ववेदैर्मकारेणाभिधीयते ।
अधिकोच्चमिति ज्ञातमोमित्यस्यार्थ ईरितः ।।

---

१. ''देवम्'' इति हृपाठः

**भाष्यविवृतिः**– योहवा अविदितार्षछन्दोदैवतब्राह्मणेन मन्त्रेण[१] (यजति) याजयति वाऽध्यापयति वा स्थाणुं वर्च्छतीत्यादिना ऋष्यादीनज्ञात्वा विद्या-मनुतिष्ठतोऽनर्थोक्तेरस्यास्तदवगमनाय ऋष्याद्याह **हयग्रीवेति** ॥ हरेरनन्त-गुणत्वाद्बहुवाक्यात्मकत्वेन विस्तृताया अप्यस्यास्तत्प्रतिपादकत्वं युक्तमिति भावेनोक्तम्– **विस्तृतगुणमिति** ॥ एतदुपनिषत्प्रतिपाद्यम् निर्विशेष-जिज्ञासायामुक्तम्– **भोगीति** ॥ अनेनास्या हयग्रीव ऋषिः शेषशायी देवते-त्युक्तं भवति । वाक्यरूपत्वाच्छन्दसोऽभावः । उपनिषत्वात्सिद्धं ब्रह्मपरत्व-मस्याः तत्रादावुद्गीथलक्षणसामैकदेशसर्ववेदार्थप्रतिपादकप्रणवनिष्ठोपास्ति-माह– **ओमिति**[२] ॥ उद्गीथैकदेशत्वादुद्गीथमोमित्येतदक्षरं प्रणवमुपासीता-वर्तयेदित्येवं प्रतीयते न तु भगवत उपास्यत्वमित्यतस्तद्व्याचष्टे– **ओमिति** ॥ अविनाशात् **अक्षरम्** । हयग्रीवादयोऽस्या ऋष्यादित्वेनोक्तास्तत्प्रमाणेन समर्थयन्नाह– **तदुक्तमिति** ॥ किमुक्तमित्यतस्तत्पठति– **हयग्रीवेति** । ओंनामकस्योपास्तिप्रकारमाह– **ओंनामानमिति**[३] । के ते ओंनाम्नोऽर्थभूता गुणार्यैर्युक्ततयोपास्यो भगवानित्यत आह– **ओतत्वादिति** ॥ जगतोऽस्मिन्नोतत्वाद्भगवतस्तत्र प्रविष्टत्वादिति वेति । अवनान्मानादित्येकं

१. यजतिपदं मूलकोशे नास्ति ।

२. ननु आदिमाध्यायद्वयं कुतो न व्याख्यातामिति चेत् । न । तस्य कर्मकाण्डत्वेना-ब्रह्मविद्यात्वात् । परैरव्याख्यातत्वेन विप्रतिपत्त्यभावाच्च ।

३. तत्रेदं वाक्यं परैरेवं व्याख्यातम् । ओमित्येतदक्षरं वर्णात्मकमुद्गीथभक्त्यवयवत्वाद् उद्गीथवाच्यमुपासीतेति । तदसत् ॥ प्रणवस्य जडत्वेन तदुपासनवैयर्थ्यस्य वक्ष्यमाण-त्वात् । न च परमात्मप्रतीकत्वेन तदुपासनं विधीयते इति वाच्यम् । परमात्मप्रधानके वेदान्ते आदौ तदुपास्तिमनभिधाय तत्प्रतीकोपास्तिविधानायोगात् । नचैतान्युपासनानि सत्त्वशुद्धिकरत्वेन वस्तुतत्वावभासकत्वादद्वैतज्ञानोपकारकाणीति पूर्वमुपन्यस्यत इति वाच्यम् । तथा सति कर्मकलापस्यापि सत्त्वशुद्धिसम्पादकत्वेन तत्परपूर्वाध्यायद्वय-स्यापि व्याख्येयत्वापातात् । न च तत्र साक्षादद्वैताप्रतिपादनात् तदव्याख्यातमिति वाच्यम् । तर्ह्येतस्यापि त्वन्मते साक्षादद्वैताप्रतिपादकत्वेनाव्याख्येयत्वापातादिति ।

व्याख्यानमिति श्रुतोऽर्थः[१] । तमेव सङ्ग्रहेण व्याकुर्वन् उद्गीथपदव्याख्यानं समर्थयते– **ओतमिति** । अक्षयत्वात्– **अक्षरमिति** चोपास्यः । ओंनामकत्वं भगवतः कुत इत्यतस्तत्समर्थयते– **ओमिति ह्युद्गायतीति** । तत्तथात्वा-प्रतीतेर्व्याचष्टे[२]– **ओमिति** ॥ उद्गात्रादिनाऽदावोमित्युच्चार्यैनं समुद्दिश्यो-द्गानादेः प्रवर्त्यमानत्वात्तन्नामकत्वं भगवतः सिद्धम् । अन्यथाऽसङ्गतेरित्यर्थः। एवं तस्योपव्याख्यानमिति प्रतिज्ञायैषां भूतानां पृथिवीरस इत्यादिकया प्रणवार्थव्याख्यानरूपया समग्रोपनिषदोक्तः प्रणवार्थः उक्तः । प्रणवार्थः कः यद्विशिष्टतया ब्रह्मोपास्यमित्यपेक्षायां प्रणवार्थं व्याख्यातुं प्रतिजानीते ॥ **तस्योपव्याख्यानमिति** ॥ तस्य प्रणवस्योपपन्नं व्याख्यानं क्रियत इत्यर्थः । प्रतिज्ञातं प्रणवार्थं व्याख्याति – **एषां भूतानामित्यदिका समग्रोपनिषत्** ॥ तां तात्पर्यार्थोक्त्या व्याचष्टे – **विष्णोरिति** । **अस्य** विष्णोरोमिति नाम्नो व्याख्यानं अधिकोच्चतेति योजना ॥ अधिकोच्चत्वं प्रणवस्यार्थो भवन् कथं शब्दलब्ध इत्यतो वर्णार्थपूर्वकमाह– **अकारेणेति** । ज्ञातं[३] प्रमितम् ।

## मुक्तये तारतम्यज्ञानमावश्यकम्

**तदेतत्परमत्वं तु यथाक्रममुदीर्यते ।**
**देवतानुक्रमज्ञाश्च विष्णोः परमताविदः ॥**

**एकान्तिनस्ते विज्ञेया यथाक्रमपरास्तथा ।**
**अस्मादसावुच्च इति क्रमस्यान्तगतं हरिम् ॥**

**एकमेव तु ये विद्युस्ते ह्येकान्तिन ईरिताः ।**
**एवं यथाक्रमज्ञाश्च सदैकान्तपरायणाः ॥**

---

१. श्रुतेरर्थ इति स्याद्वा । वेदेशीये तथैव सत्वात् ।

२. व्याकरोति इति घपाठः । ३. 'मितं' गपाठः ।

प्रविशन्ति परं देवं नारायणमनामयम् ।
उच्चक्रमान्तगत्वेन कुर्युः पूजां हरेः सदा ॥

लक्ष्म्यादेः क्रमशः पूजां ज्ञात्वा भागवता इति ।
स्वतन्त्रपूज्यताबुद्ध्या न दद्युः किञ्च कस्यचित् ॥

ब्रह्माद्या मनुसञ्ज्ञा ये वर्णत्वेनोदिताः[१] श्रुतौ ।
मानवाख्याश्च मुनयस्तान्यजन्ति न चेतरान् ॥

पितृत्वेन गुरुत्वेन साक्षाद्भागवतत्वतः ।
अपभ्रष्टा अदेवाश्च ब्रह्माद्याख्यायुता अपि ॥

देवसञ्ज्ञाश्च दीनत्वात् पूजयेयुर्न तान् क्वचित् ।
यद्भागवतबुद्ध्यैव दत्तं ब्रह्मादयः सुराः ॥

वैदिकाः प्रतिगृह्णीयुरपभ्रष्टास्तथेतरत् ।
यथाक्रमपरिज्ञानादेकान्तित्वाच्च केवलम् ॥

अच्छिद्रत्वाच्च नियतो मोक्षोन्यत्तु विडम्बनम् ।

**भाष्यविवृतिः**– अधिकोच्चत्वेन प्रमितत्वं चेदोङ्कारार्थस्तर्ह्येषां भूतानामित्यादिपरंपरया तस्योक्तिः किमर्थेत्यतस्तस्यास्तात्पर्यमाह– **तदेतदिति**[२] ॥ तदेतत्परमत्वं यथाक्रमं तारतम्यक्रममनुसृत्योदीर्यते[३] । तथा ज्ञातस्य तस्य मोक्षाङ्गत्वादिति भावः । ननु विष्ण्वेकज्ञानित्वलक्षणमेकान्तित्वं मोक्षाङ्गमिति किमर्थं तथोक्तिरित्यतो नैतदेकान्तित्वं किं तूक्तमेवेत्याह– **देवतेति । यथाक्रमपराः** यथाक्रमज्ञाने तात्पर्यवन्तः । उक्तमेकान्तित्वमिति

१. 'उदितान्' हृपाठः ।  २. ओङ्कारस्यावयवभूतमित्यर्थः ।

३. एषां भूतानामित्यदिनेति शेषः ।

एक एवान्ते वर्तते इत्येकान्तो हरिः, एकान्त एषामस्तीत्येकान्तिनः । कुत इत्यतस्तन्निर्वचनेन दर्शयति– **अस्मादिति** ॥ तदेतत्परमत्वमित्यादेः प्रकृतोपयुक्तमभिप्रायं स्फुटमाह– **एवमिति** ॥ एक एवान्तेऽवसित इत्येकान्तो भगवान् परमयनमाश्रयो एषां ते तथोक्ताः । उच्चक्रमान्तगतत्वेन हरिं जानन्ति । हरेः पूजां सदा कुर्युर्लक्ष्म्यादेश्च क्रमशः पूजां ये कुर्युस्ते नारायणं प्रविशन्तीति सम्बन्धः ।

ननु लक्ष्म्यादेरपि पूज्यत्वे कथमेतान् पूजयेदिति क्वचिदुक्तिरित्यत उक्तम्– **ज्ञात्वेति** ॥ तदेव विशदयति– **स्वतन्त्रेति** ॥ ननु देवानामप्रधानतयाऽपि पूज्यत्वे मनून् मानवान् पूजयेन्न देवानिति कथं क्वचिदुक्तिः[१] विप्रक्षत्रियविट्शूद्रवर्णभेदेन सर्वशः मनवो मानवाश्चैव सम्पूज्यानैवदेवताः ॥ इत्यतस्तद्घटयन्नाह– **ब्रह्माद्या इति** ॥[२] ब्रह्मादीनां पूज्यत्वकारणान्याह– **पितृत्वेनेति**[३] ॥ ब्रह्मादिदेवानां मनुसंज्ञादित्वेन पूज्यत्वेन देवान्पूजयेदित्यस्य का गतिरित्यत आह– **अपभ्रष्टा इति** ॥ ब्रह्मादीनां दैत्यानां च ब्रह्मादिनामित्वे ब्रह्मादिभ्यः स्वाहेत्युक्तौ तेषामपि प्राप्तेः कथं कर्मप्रवृत्तिनिर्णय इत्यत आह– **यदिति** । तारतम्यज्ञानपूर्वकं विष्णोः सर्वोत्कृष्टत्वज्ञानं मोक्षसाधनमित्युक्तं तन्निरन्तरमनुवृत्तमेव मोक्षसाधनमित्याह– **यथाक्रमेति** ॥ अच्छिद्रत्वात् ।

---

१. विप्रक्षत्रियविट्शूद्रवर्णभेदेन सर्वशः । मनवो मानवाश्चैव सम्पूज्यानैवदेवताः ॥

२. उक्तञ्च- मनवो बोधवैशेष्याद् देवा ब्रह्मादयः स्मृताः ।
विप्रादि वर्णभेदेन चत्वारो बहवोऽपि ते ।
मरीच्याद्यास्तु तत्पुत्रा मानवा नामतः स्मृताः ॥

३. इदं कार्तयुगजनप्रवृत्तिमभिप्रेत्य । देवतात्वेन चेज्यः स ब्रह्माद्या मनुनामकाः । वक्तृत्वेन पितृत्वेन कारित्वेनैव चादरात् । इज्यन्ते देवताः सर्वा नतु देवतया क्वचित् । अनन्ययाजिनस्ते तु तस्मात् कार्तयुगा जनाः ॥ इति ।

भक्तिविरक्ती अपि मोक्षसाधने

विष्णोर्भक्तिर्विशेषेण मोक्षावाप्तौ हि कारणम् ॥
तद्भक्तेषु क्रमेणैव रमाद्येषु त्वनन्तरम् ।
तृतीयमपि वैराग्यं न[१] चान्यन्मोक्षकारणम् ॥
एतत्साधनताहेतोस्तदन्यद्धि विधीयते ।
अतोऽन्यत्सर्वकृच्चापि गच्छेदेवाधरं तमः ॥
अस्मिन्सुनिष्ठितो नित्यं मोक्ष्येवान्योज्झकोऽपि सन् ।
अतस्तेषां क्रमं वक्ष्ये देवानां यः श्रुतौ श्रुतः ॥

**भाष्यविवृतिः**– उत्कृष्टत्वज्ञानं च भक्तियुक्तमेव मोक्षसाधनमित्याह **विष्णोरिति**[२] ॥ एतच्च वैराग्ययुक्तं चेत् क्षिप्रं मोक्षसाधनमित्याह– **तृतीयमपीति**[३] ॥ एतच्चेन्मोक्षसाधनं तर्हि मुमुक्षोस्तीर्थाटनादिविधानं व्यर्थमित्यत आह– **एतदिति** ॥ अन्यद्धिडम्बनमित्यन्यन्मोक्षसाधनं नेत्युक्तम् । न केवलं न मोक्षकारणमिति किंत्वनर्थहेतुश्चेत्याह– **अत इति**[४] ॥ अतस्तारतम्यपरिज्ञानानादरेण । अन्यधर्मप्रहाणायैतदापादनेऽन्यधर्महानस्य मोक्षाविरोधित्वे मोक्षो नियत इत्युक्तमयुक्तमित्यत आह **अस्मिन्निति** ॥ एवमेषां भूतानामित्यादि तात्पर्येण व्याख्याय विस्तरेण व्याचष्टे– **अत इति** ॥ तारतम्यादिज्ञानस्य मोक्षसाधनत्वादिति यावत् ।

१. 'नैवान्यत्' इ॰पाठः ।

२. वेदेशीयाभिमतः व्यासतीर्थीयाभिमतश्चायं पाठः । विष्णाविति अन्याभिमतः पाठः ।

३. ज्ञानभक्तिसमकक्ष्यतानिरासाय तृतीयमित्युक्तम् । ज्ञानं भक्तिं वा प्रति इदं साधनमिति भावः ।

४. अनेन व्यतिरेक उक्तो भवति । तस्यान्यथासिद्धिपरिहाराय सर्वकृदपीत्युक्तम् । अस्मिन्नित्यनेनान्वय उच्यते । अत्राप्यन्यथासिद्धिपरिहाराय अन्योज्झकोऽपि इत्युक्तम् । एतच्च ज्ञानयोगिषु सनकादिषु द्रष्टव्यम् ।

## देवतातारतम्यनिरूपणम्

उप.– एषां भूतानां पृथिवी रसः । पृथिव्या आपो रसः । अपामोषधयो रसः । ओपधीनां पुरुषो रसः । पुरुषस्य वाग्रसो वाच ऋग्रसः । ऋचः साम रसः । साम्न उद्गीथो रसः । स एष रसानां रसतमः परमः पराध्योऽष्टमो य उद्गीथः ॥ २ ॥

भा.– पृथिवी सर्वभूतेभ्यः सदा सर्वगुणैर्वरा ।
रसः सारो वरश्चेति शब्दा एकार्थवाचकाः ॥

पृथिव्या वरुणः श्रेष्ठस्तस्मादोषधिदेवता ।
सोमस्तस्मात्तु पुरुषो रुद्रो यत्पौंस्यदेवता ॥

तस्मात् सरस्वती वाग्घि श्रेष्ठाऽस्या ऋक्स्वरूपिणी ।
सैव श्रेष्ठा ततो वायुर्वरिष्ठस्सामगायकः ॥

समत्वात् सर्वभूतेषु साम साम्नां च देवता ।
ततः श्रेष्ठतमो विष्णुः श्रेष्ठश्रेष्ठतमः[१] सदा ॥

श्रेष्ठाच्छ्रेष्ठतमाच्चापि परमात्परमो विभुः ।
परमर्धियुतत्वाच्च पराध्य इति कीर्तितः ॥ इति सारनिर्णये ।

अतिशयेन परमर्धिगुणः परमः पराध्यः । उत्तमेभ्योऽप्यतिपरमोत्तमोत्तमो रसानां रसतमः परमः पराध्यः । रसानां सकाशादपि परमपराध्यरसतम[२] इत्यर्थः । प्राणादीनां भूतादिभ्यः श्रेष्ठत्ववदस्य श्रेष्ठत्वं न भवति । किन्तु महान् विशेष इति ज्ञापयितुं रसानां रसतम इत्यादि-

१. 'श्रेष्ठः श्रेष्ठतमः' प्र पाठान्तरम् ।

२. 'परमः परमर्द्धरसतमः' हृपाठः ।

**बहुविशेषणम् । भूतेभ्यः पृथिव्या रसत्वं तेभ्यो वरुणस्य रसतरत्वं सोमस्य रसतमत्वं रुद्रस्य परमरसतमत्वं वाचः परमर्द्धरसतमत्वं प्राणस्य परमपरार्धरसतमत्वम् । अयं तु भगवान् प्राणादपि परमपरार्द्धरसतम-मात्रो न भवति । किन्तु प्राणस्यापि रसभूताया रमाया अपि परम-परार्ध्यरसतमः । अस्मादप्यतिशयेन परमित्यसङ्ख्यागोचरत्वेन परार्धेन ज्ञेयं हि परार्ध्यम् ।**

**भाष्यविवृतिः**– रसशब्दस्य वरेति व्याख्यानं कुत इत्यत उक्तं– **रस इति ॥ पुरुषो रुद्र इति ॥** कुत इत्यतः पुंस्त्वलक्षणशिश्नदेवतात्वादित्याह **यदिति ॥ ऋक्स्वरूपिणी** ऋगभिमानिनी । **सैव** वाक्[१] । केवलाया अस्याः[२] श्रेष्ठा । प्राणादेर्वागादिभ्य उत्तमत्वमिव न विष्णोः प्राणा-दुत्तमत्वमित्याह– **स एष रसानां रसतमः परमः पराद्धर्योऽष्टमो य उद्गीथ इति ॥** तत्र पदार्थानाह– **श्रेष्ठश्रेष्ठतम इत्यदिना ॥** परम इति स्वतन्त्रविशेषणमिति प्रतीयते अतः पराद्धर्यत्वलक्षणगुणविशेषणमित्याह– **अतिशयेनेति ॥** एवं पदार्थानुक्त्वा वाक्यार्थमाह– **उत्तमेभ्य इति ॥** उत्तमेभ्य इति रसानामिति षष्ठीव्याख्यानं कथमित्याशङ्का रसानां सकाशा-दित्युक्ते उत्तमेभ्य इति पञ्चमी लभ्यत इति परिहरन् परमत्वस्य परर्द्धित्वविशेषणत्वे योजनां दर्शयति– **रसानामिति ॥**

एवं पदार्थवाक्यार्थानुक्त्वा बहुविशेषणप्रतिपादनं किमर्थमित्यतः प्रयोजनमाह– **प्राणादीनामिति ॥** एवं सामनाम्नः प्राणादुत्तमत्वमुद्गीथ-स्योक्तम् । न केवलं प्राणादुत्तमत्वमुद्गीथस्यापितु श्रियोऽपीति वा भावेन प्राप्तमेषां भूतानां पृथिवीरस इत्यादेः सङ्ग्रहरूपं स एष रसानां रसतम इत्यादि । सङ्ग्रहेण कथं श्रियोऽप्युत्तमत्वमुद्गीथस्य लब्धमित्यतो वर्णशो

१. वाक् सर्ववेदाभिमानिनी ।

२. वागभिमानिन्या इत्यर्थः ।

विविच्य दर्शयति – **भूतेभ्य इत्यादिना** ॥ प्राणस्य परमपरर्धरसतमत्वे भगवतः परमपरार्धरसतमत्वं भवतीत्यादावुपस्कृत्यायं तु भगवानित्यादि योज्यम् । परार्ध इत्यत्र श्रियो निवेशः । परार्धपराध्र्ययोरेकार्थत्वे कथं भगवतः श्रियोऽपि रसत्वं सिध्यतीत्यत आह– **अस्मादिति** ॥ योजनातु परार्धेन ज्ञेयं हि पराद्ध्र्यं । ज्ञेयत्वं चास्माच्छ्याख्यवस्तुनोऽप्यतिशयेनेति हि । अतिशयत्वमेव विशदयितुमुक्तम् – **असङ्ख्यागोचरत्वेनेति** ॥

**भा.– ऋग्रूपाया वाचः पृथक् परत्वाङ्गीकारेऽपि भूतेभ्यः प्राणस्य परमपरार्धरसतमत्वमेव । न तु परमपरार्धिरसतमत्वम् । परस्मादप्या समन्ताद्दद्धं हि परार्धम् । तेनासङ्ख्यागोचरत्वेन ज्ञेयं पराध्र्यम् । परार्धोत्तमं परार्धि । तेनासङ्ख्यागोचरत्वेन ज्ञेयं पराध्र्यमित्यतः परार्धित्वं श्रियो भवति । श्रियोऽपि पराध्र्यो भगवान् । अतो रसानां रसतमः परमः पराध्र्यः ।**

**भाष्यविवृतिः–** नन्वेवं व्याख्यानेऽपि भगवतः श्रियोऽपि रसत्वं न सिध्यति । वाच ऋग्रस इति वागुत्तमत्वेनोक्ताया ऋचः परमपरार्धरसतमत्वात् प्राणस्य परार्धरसतमत्वादिति चेन्न । वागृचोरैक्यस्योक्तत्वात् । ऋचो वाचः पृथक्त्वाङ्गीकारे तत्सिद्धिप्रकारमाह– **ऋगूपाया इति** ॥

ननु परार्धित्वं प्राणस्येत्युक्तं तत्कथमित्यतः परार्धपरार्धिपराध्र्यशब्दा-न्निर्वक्ति – **परस्मादित्यादिना** ॥ तेन परार्धेनोत्तमत्वेन ज्ञेयं परार्धि तेन च परार्धिना असङ्ख्यागेचरत्वेनापि पराध्र्यमिति योज्यम् । तथा च स्पष्टसिद्धः प्राणस्य परार्धित्वाभाव इत्याह– **परार्द्धेति** ॥ निर्वचनलब्ध-मर्थमाह– **तेनेत्यादिना** ॥ तेन परार्धेनोत्तमत्वेनेयते ज्ञायते इति परार्धोत्तमं परार्द्धि । तेन च परार्धिना ज्ञेयं पराध्यं । तेन परार्धिना ज्ञेयत्वमेव विशदयितुमुक्तम्– **असङ्ख्यागोचरत्वेनेति** । तथा च श्रियोऽपि पराद्ध्र्यो

भगवान् । भगवतः श्रियोऽपि परार्ध्यत्वे पृथिव्याद्यपेक्षया भगवानेवमभिधेयवान् जात इत्याह– **अत इति ॥ अतः**[१] अनेन, पृथिव्या रसत्वमित्यादिव्याख्यानेन ।

## ऋक्सामोद्गीथपदानामर्थकथनम्

**उप.– कतमा कतमर्क्, कतमत् कतमत् साम, कतमः कतम उद्गीथ इति विमृष्टं भवति । वागेवर्क्, प्राणः सामोमित्येतदक्षरमुद्गीथः ॥३॥**

**भा.– पृथिव्याः सोमवरुणयोश्चौषध्यब्देवतात्वेन रुद्रस्य च लिङ्गदेवतात्वेन प्रसिद्धेः ऋगादीनामेव विमर्शः क्रियते कतमा कतमर्गित्यादिना । तज्ज्ञानस्य विशिष्टफलत्वाच्च । वाचश्च सरस्वतीत्वेन प्रसिद्धेर्वागृचोरैक्याच्च न विमर्शः कृतः ।**

**विशेषात् प्राणसंयुक्ता वागृगित्यभिधीयते ।**
**ऋ गताविति धातोर्हि ऋत्त्वं सर्गाभिमानिनी ॥**

**विशेषसंयोगहीना यदा सैव सरस्वती ।**
**तदा तस्यावरा सैव[२] प्राणसंयोगिनी मता ॥**

**प्राणयोगवियोगाभ्यां सैषैकाऽपि विभिद्यते ।**
**वागेवार्क्तच्छ्रुतौ प्रोक्ता प्राणः सामेति कीर्तितः ॥**

---

१. अत्रायं विवेकः । वक्ष्यमाणरीत्या यदि वागृचोरैक्यविवक्षा तदा भूतेभ्यः पृथिव्या रसत्वं, तेभ्यो वरुणस्य रसतरत्वं, सोमस्य रसतमत्वं, रुद्रस्य परमरसतमत्वं, वाचः परमपररसतमत्वं, साम्नः परमपरर्द्धरसतमत्वं, रमायाः परमपरार्द्धरसतमत्वं, उद्गीथस्य परमपरार्द्ध्यरसतमत्वम् । यदि च ऋग्रूपायाः वाचः पृथक्परत्वविवक्षा तदा ऋचः परमपरर्द्धरसतमत्वं, साम्नः परमपरार्द्धरसतमत्वं, रमायाः परमपरार्द्धिरसतमत्वं, उद्गीथस्य परमपरार्ध्यरसतमत्वमिति ॥

२. "सावै" इत्यपि पाठः

**अक्षयाद्रतिरूपत्वादक्षेषु रमणादपि ।**
**अक्षरं भगवान् विष्णुरोमित्युच्चत्वहेतुतः ॥**

**इतिशब्दोऽन्यथाभावनिवृत्त्यर्थ उदाहृतः ।**
**एवमत्युच्च एवासौ सर्वदैतद्धृदि स्थितः ॥**
**उद्गीयमान उद्गीथो भगवान् पुरुषोत्तमः ।**

**भाष्यविवृतिः–** निरूपितेषु पृथिव्यादिरसेषु ऋगादिस्वरूपं जिज्ञासुः पृच्छति**कतमेति** ॥ कतमा कतमेत्यादिका द्विरुक्तिः ऋगादिज्ञानापेक्षा-कुतूहलत्वनिमित्ता । पृथिव्यादि विहाय ऋगादिस्वरूपप्रश्ने कारणमाह– **पृथिव्या इति** ॥ कारणान्तरमाह– **तद्ज्ञानस्येति** ॥ वाग्ज्ञानस्याप्यधिक-फलत्वात् कस्मात्तस्या अपि न विमर्शः कृत इत्यतः कारणद्वयमाह– **वाच इति** ॥ पृष्टं ऋगादिस्वरूपं निरूपयति– **वागेवर्गित्यादिना** ॥ वागेवर्गित्युत्तरं नोपपद्यते वाच ऋग्रस इति ऋचो वाग्रसत्वेनोक्त-त्वादित्यतोऽवस्थाभेदादेकत्वेऽपि स्वप्रतियोगिकश्रैष्ट्यं युक्तमित्याह– **विशेषादिति** ॥ विशेषेण संयुक्तत्वं कथं ऋक्छब्दलब्धमित्यतस्तद्दर्शयति– **ऋगताविति** ॥ विशेषेण संयुक्ताया ऋगभिमानित्वाच्च ऋचो वाग्रसत्वं युक्तमित्याह– **सर्गभिमानिनीति** ॥ विशेषादित्युक्तं विशदमाह– **विशेषेति**[१] ॥

---

१. तथा चावस्थाविशेषमादायैकस्या एव तस्याः स्वापेक्षया रसत्वोक्तिरुपपन्नेति भावः । अत एवोरस्थलाश्रितयज्ञनाम्न्या लक्ष्म्या भगवद्रतियोगस्था दक्षिणाऽपि सैव विशिष्टेत्युच्यते ।

यज्ञाख्या सैव विष्णोस्तु या तूरस्थलमाश्रिता ।
हरिणा रतियोगस्था दक्षिणाख्याऽपि सैव तु ।
उत्तरोत्तरतः साऽपि विशिष्टा दक्षिणा सुखे ॥ इत्यादौ ॥

एवं प्राणविशेषयोगभावाभावाभ्यां एकस्या एव सरस्वत्याः स्वप्रतियोगिकोत्तमत्वमधमत्वं चोपपाद्य निगमयति– **प्राणेति** ॥ योजनातु यस्मात्सैषैकाऽपि सरस्वती प्राणविशेषयोगवियोगाभ्यां भिद्यते तत्तस्माच्छ्रुतौ वाच ऋग्रस इति भेदेन वागेवर्गित्यभेदेन च प्रोक्तेति । अक्षयाद्रतिरूपत्वादित्येकं व्याख्यनम् । इत्यर्थस्योमित्यस्यार्थेनान्वयं दर्शयति– **एवमिति** ॥ पूर्वमुच्चत्वादित्यादिना वर्णार्थकथनेनोद्गीथशब्दार्थ उक्तः । इदानीमखण्डमर्थान्तरमाह– **उद्गीयमान इति** ॥

## विष्णुः सरस्वतीचतुर्मुखब्रह्माभ्यामुत्तमः

**उप.– तद्वा एतन्मिथुनं यद्वाक्च प्राणश्च ऋक् च साम च । तदेतन्मिथुनमोमित्येतस्मिन्नक्षरे संसृज्यते ॥ ४ ॥**

**यदा वै मिथुनौ समागच्छत आपयतो वै तावन्योन्यस्य काममापयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ॥ ५ ॥**

## ओङ्कारार्थपूर्णो हरिः

**तद्वा एतदनुज्ञाक्षरम् । यद्धि किञ्चानुजानात्योमित्येव तदा हैप उ एव समृद्धिर्यदनुज्ञा समर्धयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ॥ ६ ॥**

भा.– तस्मादोमित्यनुज्ञानं कुर्वन्त्येते जनाः सदा ॥

त्वदुक्तं तत्तथा कुर्याद्भगवानेव केशवः ।
इत्यभिप्रायतः शब्दः प्रवृत्तः स पुरातनैः ॥

तदेतदज्ञैस्तु जनैः स्वानुज्ञेति प्रदीयते ।
ओमित्ययं पूर्णवाची समृद्धिर्ह्योमितीरिता ॥

समृद्धस्ते हि कामोऽयमित्यनुज्ञाऽथवा भवेत् ।
अतस्समृद्धिवाची स्याद्धरेरोंशब्द ईरितः ॥

इति वा दीयतेऽनुज्ञा हरिस्तव समृद्धिदः ।
वाक्प्राणौ दम्पती चापि संसृज्येते जनार्दने ॥

मुक्तौ तु तत्प्रसादेन संसृज्यन्ते ततः परे ।
तत्प्रसादेन[१] साक्षात्तु[२] प्राणः संसृज्यते हरौ ॥

**भाष्यविवृतिः**– पूर्वं भगवतः प्रणवाभिधेयत्वं ओमिति ह्युद्गायतीति समर्थितं इदानीं प्रकारान्तरेण भगवतस्तदभिधेयत्वं समर्थयते – **तद्वा एतदनुज्ञाक्षरमिति** । अस्य योजना तदेतदोमित्यनुज्ञाक्षरमनुज्ञाप्रदमक्षरं वै, अतश्चोमिति भगवन्नामेति । व्याख्येयवाक्यव्यवहितमपि तत्पूर्वत्र सङ्गतमिति द्योतयन् भगवतः प्रणवाभिधेयत्वप्रतिपादकत्वाप्रतीतेस्तद्व्याचष्टे **तस्मादिति** ॥ **तस्मात्** ओंनाम्नो भगवद्वाचकत्वात् जनाः ओमित्यनुजानन्तीत्यर्थः । उक्तमोमित्यनुज्ञानमेवाभिप्रायोक्त्या विशदयति– **त्वदुक्तमिति** ॥ तस्मादोंशब्दो भगवद्वाचक इति वाक्यशेषः । तर्ह्यधुनातनैरेवमभिसन्धिना न प्रयुज्यत इत्यत आह – **तदेतदिति** । ओमित्यस्यानुज्ञाप्रदो भगवानर्थ इति समर्थितमिदानीं भगवतः पूर्णत्वं चोंकारार्थ इत्याह– **यद्धि किञ्चेति** । योजनातु । ओमिति यत्किञ्चानुजानाति ओमित्येव हि तदाह समृद्धिरस्त्वित्येवहि तदाह । कथं ओमिति तावदनुज्ञायानुज्ञा एषा उ एव एषैव समृद्धिरिति । तद्वाक्यं तथाऽप्रतीतेर्व्याचष्टे– **ओमित्यादिना** ॥ योजनातु । अथवा प्रणवस्यार्थान्तरमुच्यते । ओमित्ययं पूर्णवाची । कुतः? समृद्धिस्तावदोमितीरिता । तदपि कुतः ।

---

१. व्यासतीर्थीयाभिमतः पाठः तत्प्रसादेनेति । पाठान्तरं च तद्द्वारेणैवेति ।

२. साक्षादेव भगवदन्याधिकारप्रसादमन्यद्वारं चानपेक्ष्येत्यर्थः ।

ओमित्यनुज्ञा तावत् । अनुज्ञाचायं ते कामः समृद्धो भवेदित्येवंरूपा । अतः समृद्धिवाची । हरेरपीरितः प्रयुक्त ओंशब्दः पूर्णत्ववाची स्यादिति । भगवतः समृद्धत्वलक्षणं प्रणवार्थं वेत्तुः फलमाह– **समर्धयितेति** ॥

उद्गीथस्य ऋक्सामाभ्यां रसत्वमुक्तं तत्कथं तयोरतिमहत्वादित्यतो मुक्तौ तदायतनत्वादित्याह– **तद्वा इति** ॥ स्पष्टं तथाऽप्रतिभासात्तद्व्याचष्टे– **वागिति** ॥ शेषादयोऽपि जनार्दने संयुज्यन्ते । तेभ्यस्तयोर्महत्वे किं कारणमित्यत आह– **तत्प्रसादेनेति** ॥ तद्वरेण तं प्रविश्येति यावत् ।

मुक्तौ वाक्प्राणयोरुद्गीथसंसरणानन्तरं भाव्यतिशयमाह– ॥ **यदेति** ॥ **यदा मिथुनौ** वाक्प्राणावुद्गीथं समागच्छतस्तदा तावन्योन्यस्य काममभीष्टमापयतः प्राप्नुवन्तः । वागादेरुद्गीथप्रवेशादिवेत्तुः फलमाह– **आपयिता गन्तेति** ।

**उप.– तेनेयं त्रयी विद्या वर्तते । ओमित्याश्रावयत्योमिति शꣳसत्योमित्युद्गायत्येतस्यैवाक्षरस्यापचित्यै । महिम्ना रसेन तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद ॥ ७ ॥**

**नाना तु विद्या चाविद्या च । यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति । इति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति । अथ[1] ह य एवायं मुख्यः[2] प्राणस्तमुद्गीथमुपासीत । तस्येतरैः प्राणैरुपव्याख्यानं भवति ॥ ८-१ ॥**

---

१. 'अथ' इत्यारभ्य 'प्राणैरुपव्याख्यानं भवति' इत्यन्तो भागः हृषीकेशीयपाठे नोपलभ्यते वेदेशीये तु व्याख्यातः । वेदेशतीर्थानां मूलेयं व्यासतीर्थटीका । तेन अत्राप्ययं भागः स्यादिति भाति । श्रीराघवेन्द्रतीर्थाः स्वीयखण्डार्थे भागमिमं न व्याचख्युः ।

२. 'मुख्यप्राणः' इति क्वचित् ।

भा.– तेनैव विष्णुनेयं च त्रयीविद्या प्रवर्तते ।
ओमित्युक्त्वा हि तद्व्याख्या सर्वैर्मन्त्रैः प्रवर्तते ॥

ओंनामकस्य पूजार्थं विष्णोरेव सदैव हि ।
महिम्ना सारभूतेन विष्णुना ज्ञोऽज्ञ एव च ॥

कुरुतः कर्म नाज्ञस्य मुक्तिर्ज्ञस्य भवेत्तु सा ।
स्वयोग्यं तु परिज्ञानं यत्तस्योपनिषत्स्मृतम् ॥

अक्षरं भगवान् विष्णुस्तस्योपप्रणवः स्मृतः ।
उपव्याख्या तु तद्व्याख्येत्येवमाह श्रुतिः परा ॥

इति तार्तीये ।

परर्धं परमादुच्चं परार्धं तु ततोऽधिकम् ।
ततोऽधिकं परार्धिः स्यात् परार्ध्यमिति तत्परम् ॥

परतः परमाच्चैव परार्धो वायुरीरितः ।
परार्धिनी श्रीरुद्दिष्टा परार्ध्यो भगवान् हरिः ॥

इति शब्दनिर्णये ॥ १ ॥

भाष्यविवृतिः– प्रणवस्य सर्ववेदार्थोऽप्यर्थ इति भावेनाह– **तेनेति । तेन** ओंनामकेन । स्वप्रतिपाद्येन सतेयं त्रयी विद्या प्रवर्तत इति तद्व्याचष्टे– **तेनेति ॥** अस्तु प्रणवस्य सर्ववेदार्थवत्वम् । तथापि विष्णोः सर्ववेदार्थत्वं कुत इत्यत आह– **ओमित्याश्रावयतीति ।** एतस्यैवाक्षरस्य विष्णोरपचित्यै पूजार्थं वेद ओमित्युक्त्वा तदर्थमाश्रावयति व्याख्यातीत्यादि योज्यं । विष्णोर्वेदार्थत्वाभावे तदयोगादित्यर्थः । तथाऽप्रतीतेस्तद्व्याचष्टे– **ओमित्युक्त्वेति ॥** भगवतः सर्वोत्तमत्वं समृद्धत्वं सर्ववेदार्थत्वं चोक्तं प्रणवार्थं महिम्ना रसेनेत्यनूद्य तेनोभावित्यादिना सर्वप्रवर्तकत्वं चार्थमाह । उभौ कावित्यप्रतीतेस्तद्व्याचष्टे । **महिम्नेति ॥ ७ ॥**

तेन सर्वोऽपि जनः कर्म कुरुत इत्यनुत्का ज्ञान्यज्ञानीति विभागोक्तयोक्तौ किं कारणमित्यतो विद्याविद्ययोर्नानात्वाद्विलक्षणत्वादित्याह– **नानात्विति** ॥ तद्वैलक्षण्यं च फलकृतमित्याह **यदेवेति** ॥ तद्व्याचष्टे– **नाज्ञस्येति** ॥ विद्याया उपनिषज्जातत्वात् कथं श्रद्धया युक्तयोपनिषदा विद्ययेति सामानाधिकरण्यमित्यत उपनिषीदतीत्युपनिषत् स्वयोग्यं ज्ञानं, एवं सति समानाधिकरण्यमुपपन्नमित्याह– **स्वयोग्यमिति** ॥ उपनिषदिति स्मृतम् । तस्य ज्ञानिनः तस्योपव्याख्यानमित्युपक्रम्य कृतं प्रणवार्थ-व्याख्यानमुपसंहरति **इति खल्विति** । तत्प्रणवाक्षरव्याख्योपसंहारः क्रियत इत्यन्यथाप्रतीतिं निवारयन् व्याचष्टे – **अक्षरमिति** ॥ परार्द्ध इति चतस्रः कक्ष्याः तासामृगादयो वाच्या इति व्याख्यातं तत्प्रमाणेन द्रढयति– **परर्द्धमिति** । वायुरेवेत्येवशब्दसम्बन्धः ॥ **इति प्रथमः खण्डः** ॥

## अथ द्वितीयः खण्डः

## प्राणप्रतीके देवकृताध्यात्मभगवदुपासना

**उप.– देवासुरा ह वै यत्र संयेतिर उभये प्राजापत्यास्तद्ध देवा उद्गीथमाजह्रुः । अनेनैनानभिभविष्याम इति ॥ १ ॥**

**ते ह नासिक्यं प्राणमुद्गीथमुपासाञ्चक्रिरे तꣳहासुराः पाप्मना विविधुस्तस्मात् तेनोभयं जिघ्रति सुरभि च दुर्गन्धि च पाप्मना ह्येष विद्धः ॥२॥**

**अथ ह वाचमुद्गीथमुपासाञ्चक्रिरे ताꣳ हासुराः पाप्मना विविधुस्तस्मात् तेनोभयं वदति सत्यं चानृतं च पाप्मना ह्येषा विद्धा ॥ ३ ॥**

**अथ ह चक्षुरुद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात् तेनोभयं पश्यति दर्शनीयं चादर्शनीयं च पाप्मना ह्येतत् विद्धम् ॥ ४ ॥**

अथ ह श्रोत्रमुद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात् तेनोभय२ँ शृणोति श्रवणीयं चाश्रवणीयं च पाप्मना ह्येतत् विद्धम् ॥ ५ ॥

अथ ह मन उद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात् तेनोभयं सङ्कल्पयते सङ्कल्पनीयं चासङ्कल्पनीयं च पाप्मना ह्येतत् विद्धम् ॥ ६ ॥

अथ ह य एवायं मुख्यप्राणस्तमुद्गीथमुपासाञ्चक्रिरे त२ँ हासुराः ऋत्वा विदध्व२ँसुर्यथाऽश्मानमाखणमृत्वा विध्व२ँसेतैवम् ॥ ७ ॥

## प्राणज्ञानस्य फलम्

स यथाऽश्मानमाखणमृत्वा विध्व२ँसत एव२ँ हैव स विध्व२ँसते य एवं विदि पापं कामयते यश्चैनमभिदासति स एषोऽश्माऽऽखणः ॥८॥

## मुख्यप्राणस्य महिमा

नैवैतेन सुरभि न दुर्गन्धि विजानात्यपहतपाप्मा ह्येषः । तेन यदश्नाति यत्पिबति तेनेतरान् प्राणानवत्येतमु एवान्ततो वित्त्वोत्क्रामति व्याददात्येवान्तत इति ॥ ९ ॥

## देवर्षिभिः मुख्यप्राणे कृताया भगवदुपासनायाः फलनिरूपणम्

त२ँ हाङ्गिरा उद्गीथमुपासाञ्चक्रे एतमु एवाङ्गिरसं मन्यन्तेऽङ्गानां यद्रस-स्तेन ॥ १० ॥

त२ँ ह बृहस्पतिरुद्गीथमुपासाञ्चक्र एतमु एव बृहस्पतिं मन्यन्ते । वाग्घि बृहती तस्या एष पतिस्तेन ॥ ११ ॥

त१९ हायास्य उद्गीथमुपासाञ्चक्र एतमु एवायास्यं मन्यन्त आस्याद्यदयते तेन ॥ १२ ॥

तेन तं ह बको दाल्भ्यो विदाञ्चकार स ह नैमिशीयानामुद्गाता बभूव स ह स्मैभ्यः कामानागायति ॥ १३ ॥

आगता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्त इत्यध्यात्मम् ॥ १४ ॥

भा.– उद्गीथाख्यस्य विष्णोर्विशिष्टप्रतिमा वायुरेव । अतस्तस्य सर्वोत्तमत्वज्ञानपूर्वकं तस्मिंस्ततोऽप्युत्तमत्वेनोपासित एव भगवान् सम्यक् फलं ददातीति दर्शयति । 'वायौ मुख्यधिया' इति च इति भगवद्वचनम्[1] ।

यस्माद्वायौ स्मृतो विष्णुर्वायोर्मुख्यतयाऽखिलात् ।
स्वस्य मुख्यतया तस्मात् परां तुष्टिं गमिष्यति ॥

अतो विचार्य सकलैर्देवैः प्राणे जनार्दनः ।
उपासितो दैत्यजयकारणात् पापवर्जिते ॥

वायुपुत्रं च नासिक्यमग्निं वागात्मकं तथा ।
सोमं श्रोत्रात्मकं चैव सूर्यं चक्षुःस्वरूपिणम् ॥

रुद्रं मनःस्वरूपं च शेषं चाहंस्वरूपिणम् ।
चित्तात्मकं च गरुडं पापेन विविधुः सुरान् ॥

असुरास्तैर्यतो विद्धास्तस्मात् ते दोपयोगिनः ।
मुख्यवायौ यदा देवाः शरीरस्थे च सूर्यगे ॥

१. ''वायौ मुख्यधिया'' इति च भगवद्वचनम् हृपाठः ।

विष्णुमुद्गीथनामानं तदा तं च विदध्वसुः ।
यदा विदध्वसुः प्राणं विध्वास्तास्ते तदाऽसुराः ॥

अखन्याश्मानमेवाप्य लोष्टो विध्वंसते यथा ।
प्रतिमां प्रेयसीं प्राप्य विष्णोः प्राणं तथाऽसुराः ॥

तस्मादादित्यसंस्थे वा शरीरस्थेऽपि वाऽनिले[१] ।
बलज्ञानात्मके दिव्याकृतिमत्युज्ज्वलात्मनि ॥

सर्वदेवोत्तमे[२] विष्णुमुपासीत ततोऽधिकम् ।
अस्योपासनया देवास्सर्वे नामानि भेजिरे ॥

इन्द्रो बृहस्पतिः शम्भुरित्याद्याः प्राणगा यतः ।
प्राणस्य नामशब्दाश्च मुख्यतो विष्णुसंस्थिताः ॥

इति प्रध्याने ।

उद्गीथाख्यं परं विष्णुमुपास्त्याऽजहुरञ्जसा ।
तथापि प्राण एवासौ प्रीतिमागादुपासितः ॥ इति च ।

प्राणं प्राप्यैव विध्वस्ता यथा सर्वेऽसुरास्तथा ।
तदुपासकस्य यश्चापि प्रतीपं दातुमिच्छति ॥ इति च ।

एवं विदित्वा[३] संसारान्मुक्तिमेष्यत्यसंशयम् ।
विष्णुमप्यन्ततो वेत्ति प्राणवेत्ता यतः स्फुटम् ॥

---

१. 'चानिले' इति प्रभपाठः । २. ''सर्वदेवोत्तमम्'' प्रपाठः ।
३. 'एतं विदित्वा'' हृपाठः ।

**वीति विष्णुः समुद्दिष्टो विशिष्टत्वात्तु सर्वतः ।**
**आददात्येव तं प्राणवेत्ताऽन्ते तत्प्रसादतः ॥**

**प्राणात् परं तु ये विष्णुं जीवांश्चैवावरांस्ततः ।**
**ये विदुस्ते विदुः प्राणं नान्यथा तु कथञ्चन ॥ इति च ।**

**प्राण उद्गीथ इत्याद्या नाम ब्रह्मादिकास्तथा ।**
**सप्तम्यर्थाः समुद्दिष्टाः सप्तसु प्रथमा यतः ॥**
**प्राणमुद्गीथमित्याद्याः द्वितीया सप्तमी मता ॥ इति च ॥२॥**

**भाष्यविवृतिः–** एवमुद्गीथैकदेशप्रणवनिष्ठोपास्तिरुक्ता साम्प्रतमध्यात्मं समग्रोद्गीथनिष्ठोपास्तिमाख्यायिकयाऽऽह– **देवासुरा इत्यादिना** ॥ ननु देवा ज्ञानिनोऽतो मुख्यप्राणं पापावेध्यमुद्गीथोपास्तौ मुख्यप्रतिमां जानन्त्येव अतः किमर्थं स्वशत्रुजयाय पापवेध्यनासिक्यप्राणादावुद्गीथमुपास्य तत्रानुपपत्तावन्ततो मुख्यप्राणे उद्गीथमुपासितवन्तः । किमर्थं च केवलमुद्गीथमेव नोपासितवन्तः इत्यतस्तद्वाक्यजातं तात्पर्यार्थोक्त्या व्याचष्टे– **उद्गीताख्यस्येत्यादिना** ॥ मुख्यवायोर्भगवन्मुख्यप्रतिमात्वं कुत इत्यतस्तत्समर्थयते– **वायौ मुख्यधिया मुख्यप्रतिमात्वधियेति**[१] ॥

---

१. वायोः सर्वोत्तमत्वज्ञानेन मां यजेतेति पूर्वेणान्वयः ।
सूर्योऽग्निर्ब्राह्मणो गावो वैष्णवः खं मरुज्जलम् ।
भूरात्मा सर्वभूतानि भद्र पूजापदानि मे ॥
इति विष्णोः विशिष्टप्रतिमा वायुरित्युक्तं भागवते एकादशस्कन्धे । तथा वायोः सर्वदेवोत्तमत्वं च भागवततात्पर्ये उक्तम् -
सर्वदेवोत्तमो वायुरिति ज्ञानान्न चापरम् ।
प्रियमस्ति हरेः किञ्चित् तथा वायोर्हरेर्विदः ॥ इति ।

उक्तं तात्पर्यार्थं प्रमाणेन समर्थयते– **यस्मादिति** ।। **यत्र** यदा **संयेतिरे** योद्धुं सन्नद्धा अभूवन् । योद्धुं सन्नद्धत्वे दायादत्वं कारणमाह– **उभये प्राजापत्याः कश्यपप्रजापतिपुत्रा इति** । तद्ध तदाह– उद्गीथमुपास्याजह्नुरभीष्टदं चक्रुः ।।

उद्गीथं कुत्र कुत्रोपास्याजह्नुरिति जिज्ञासायामुपास्तिस्थानान्याह– **तेह नासिक्यमित्यादिना** ।। नासिक्यं[१] नासापतिं । ऋत्वा प्राप्य **विदध्वसुः** विध्वस्ता अभवन् । **अखणं** दारयितुमशक्यम् । **आ ऋत्वा** सम्यक् प्राप्य । विध्वंसेत लोष्ट इति ग्राह्यम् । प्राणप्राप्तासुरविध्वंसवेत्तुः फलमाह– **स यथा वक्ष्यमाणो दृष्टान्तो यथेत्यादिना** । विध्वंसेत लोष्टः । **अभिदासति** हिंसितुमिच्छति । स एषः एवं ज्ञानी । तथा वेत्तुः फलान्तरं चाह– **नैवैतेनेति** ।। **एतेन** प्राणस्यैवं ज्ञानेन । प्राणस्य महत्वे पापाविद्धत्वं हेतुरुक्तः अशनादिनेतरप्राणावनं च तत्र हेतुमाह– **यदश्नातीति** । प्राणस्य महत्त्वे तथाज्ञातस्य तस्य ज्ञानिनो मुक्तिप्रदत्वं च हेतुमाह– **एतमु इति** ।। **अन्ततः** उत्तमत्वेन । ननु विष्णोरुत्तमत्वज्ञानादेव हि मुक्तिरतः कथं तद्ज्ञानान्मुक्तिरित्यत आह– **व्याददातीति** ।। वि, विशिष्टं विष्णुं मुख्यत्वेनाददाति सम्यगवगच्छति ।

तेह नासिक्यं प्राणमुद्गीथमुपासाञ्चक्रिर इत्यादिवाक्यजातं नासिक्यादिस्वरूपं ज्ञापयन् व्याचष्टे – **वायुपुत्रमित्यादिना** ।। मनसोपलक्षितावाह– **शेपमित्यादिना** । तेनोभयं जिघ्रतीत्यादेरर्थः तैरिति । सूर्यग इत्युत्तरखण्डार्थः प्रसङ्गादुक्तः । यथाऽश्मानमित्यादि व्याचष्टे– **अखन्येति** ।। तथाऽसुरा विध्वस्ता इति सम्बन्धः । तस्माद्वायोः पापावेधनविशिष्टप्रतिमात्वादन्योऽपि शत्रुजयार्थी शरीरस्थे आदित्यस्थे वाऽनिले ततोऽ-

१. द्वितीया सप्तम्यर्थे नासिक्ये इत्यर्थः ।

प्यधिकत्वेन विष्णुमुपासीत । न केवलं देवा एव स्वकार्यसिद्धये प्राणस्थमुद्गीथमुपासितवन्तः अपि तर्हि ऋषयोऽपीत्याह– **तं हाङ्गिरा इत्यादिना** ॥ तत्राध्याहार्यं देवादिभिरुद्गीथोपास्त्या लब्धं फलान्तरमाह– **अस्येति** । ऋषयश्चास्योपासनया नामानि भेजिर इति ग्राह्यम् ॥

नन्विन्द्रादीनामङ्गिरप्रभृतीनामपि तत्तन्नामाभिधेयत्त्वात्कथमस्योपासनया नामानि भेजिर इत्युक्तिरित्यत आह– **एतमु एवाङ्गीरसं मन्यन्त इत्यादिना** ॥ तद्व्याचष्टे– **इन्द्रो ब्रहस्पतिरित्यादिना** ॥ **नामशब्दाः** नामधेयशब्दाः । ननु नासिक्यप्राण एवोपास्त्योद्गीथाहरणलाभात्तावताऽपि कार्यसिद्धिसम्भवात् । पुनर्मुख्यप्राणे उपास्तिर्व्यर्थेति शङ्कां प्रयोजनोक्त्या परिहरति – **उद्गीथाख्यमिति** ॥ स यथेत्यादि प्राणस्य महत्ववेत्तुः फलकथनकवाक्यं व्याचष्टे – **प्राणमिति** ॥ यस्तदुपासकस्य पापं कामयते प्रतीपं च दातुमिच्छति सोऽपि तथा विध्वंसत इति योज्यम् । एतमु एवान्ततो विदित्वेत्यादि व्याचष्टे– **एतं विदित्वेति** ॥ प्राणवेत्ता विष्णुमप्यन्ततो वेत्तीत्युक्तं तत्र कीदृशं प्राणज्ञानमिति जिज्ञासायामाह– **प्राणादिति** ॥ ततश्च प्राणादपि जीवानवरान् ये विदुस्त एव प्राणं विदुरिति सम्बन्धः । विष्णोरवरत्वेन रुद्रादिनीचेभ्य उत्तमत्वेन ज्ञानं प्राणज्ञानमित्यर्थः । तेह नासिक्यं प्राणमित्यादिनासिक्यप्राणसंस्थितमित्यादिना सप्तम्यर्थतया व्याख्यातम् । कथं तर्हि नासिक्यं प्राणमुद्गीथमित्यादिसामानाधिकरण्यमिति चेन्न । सामानाधिकरण्यं तु उद्गीथस्य पापवेधायोगात् । नासिक्यं प्राणमित्यादिद्वितीयायाः सप्तम्यर्थत्वे नियामकमित्याह– **प्राणमिति** ॥ नासिक्यं प्राणमुद्गीथमुपासीतेत्यादौ नासिक्यं प्राणमित्यादिद्वितीया सप्तमी मतेति योज्यम् । प्राण उद्गीथ इत्यादौ प्राणाद्या नाम ब्रह्मेत्यादौ नामाद्या च सप्तम्यर्थेति प्रसङ्गाद्व्याख्यातम् ॥

**इति द्वितीयः खण्डः ॥**

## अथ तृतीयः खण्डः

## अधिदैवं मुख्यप्राणे भगवदुपासना

**उप.– अथाधिदैवतं य एवासौ तपति तमुद्गीथमुपासीत । उद्यन् वा एष प्रजाभ्य उद्गायत्युद्यंस्तमो भयमपहन्त्यपहन्ता ह वै भयस्य तमसो भवति य एवं वेद ॥ १ ॥**

**भा.– आदित्यसंस्थितो नित्यं प्राणस्तपति नापरः ।**
**प्रकाशनं च तपनं काष्ठवत्सूर्यगं भवेत् ॥**

**सूर्यमण्डलगो वायुरुदयास्तमयोज्झितः ।**
**अपि प्रजाभ्य उद्यंश्चैवोद्गायति जनार्दनम् ॥**

**भाष्यविवृतिः**– अधिदैवतमुद्गीथोपास्तिमाह– **अथाधिदैवतमिति** ॥ दैवतान्यधिकृत्य वर्तमानमधिदैवतम् । य एवासौ तपति तमुद्गीथमुपासीतेत्ये- तच्छरीरस्थेच सूर्यग इति सूर्यस्थितवायुगतविष्णूपास्तिपरत्वेन व्याख्यातम् । तदयुक्तं य एवासौ तपतीत्यादित्यस्य तापकत्वधर्मोक्तेरित्यतो नासौ तद्धर्मः किं तु आदित्यस्थितवायुगतविष्णुधर्म इति प्रमाणेन समर्थयते– **आदि- त्येति** ॥ काष्टवत् काष्टगतप्रकाशनं तपनमिव । नन्वथापि नैवं व्याख्यान- मुचितम् ॥ प्रजाभ्य उद्यन्निति प्रतीतिलक्षणस्य वायुविष्ण्वोरप्रतीत्या तत्रायुक्तस्य सूर्ये युक्तस्य धर्मस्योक्तेरित्यतः प्रतीतेर्मण्डलधर्मत्वेन विरोधा- भावादित्याह– **सूर्येति** ॥ १ ॥

## शरीरस्थप्राणे सूर्यमण्डलस्थप्राणे च भगवदुपासना

**उप.– समान उ एवायं चासौ चोष्णोऽयमुष्णोऽसौ स्वर इतीममाचक्षते स्वर इति प्रत्यास्वर इत्यमुं तस्माद्वा एतमिमममुं चोद्गीथमुपासीत ॥२॥**

**भा.– आदित्यमण्डलस्थश्च सर्वप्राणिगतस्तथा ।**
**वायुस्समान एवायमुष्णोऽसावपि च स्फुटम् ।।**

**तस्मादस्मिन्नमुष्मिन् वाऽप्युद्गीथाख्यं जनार्दनम् ।**
**उपासीत विमोक्षाय सर्वकामाप्तये तथा ।। इति च ।**

**केशवः स्वः स्वतन्त्रत्वात् तद्गतेर्मारुतः स्वरः ।**
**शरीरस्थश्च सूर्यस्थः प्रतिप्रत्या समन्ततः ।।**
**मां प्रतीत्यत एवासौ प्रत्यास्वर उदाहृतः ।**

**भाष्यविवृतिः**– शरीरे आदित्येच स्थिते वायावुद्गीथोपास्तावुभयोरुष्णत्वेन समत्वं च हेतुमाह– **समान इति** ।। तत्तथा स्पष्टाप्रतीतेः प्रयोजनस्य चानुक्तत्वाद्व्यचष्टे – **आदित्येति** ।। असावपि स्फुटमुष्णः । वायोः स्वरत्वाच्छरीरे सूर्ये च स्थितस्य प्रत्यास्वरत्वात्तस्मिन्नुद्गीथमुपासीतेति तस्मिन्नुद्गीथोपास्तौ हेत्वन्तरमाह– **स्वर इत्यादिना** ।। तस्माद्वै मारुतस्य स्वरत्वाच्छरीरे सूर्ये च स्थितस्य तस्य तस्य प्रत्यास्वरत्वाद्वै एतं मारुतमिमं शरीरस्थममुं सूर्यस्थं चोद्गीथमुपासीत । तदप्रतीतेर्व्याचष्टे– **केशव इति** ।। शरीरस्थः । सूर्यस्थश्चासौ आसंमततः प्रति प्रतीत्युक्तत्वात् प्रत्यास्वर उदाहृत इति सम्बन्धः । प्रति प्रत्यासमन्तत इत्युक्तं हेतुमेव विवरितुमुक्तं– **मां प्रतीत्यत इति** ।। मां प्रति मां प्रतीति । अतः सर्वैरुक्तत्वादित्यर्थः । तथा च आसमन्तात् प्रति चासौ स्वरश्चेति प्रत्यास्वर इत्युक्तं भवति ।। २ ।।

## व्याननामके वायौ भगवदुपासना

**उप.– अथ खलु व्यानमेवोद्गीथमुपासीत यद्वै प्राणिति स प्राणो यदपानिति सोऽपानोऽथ यः प्राणापानयोः सन्धिः स व्यानो यो व्यानः**

सा वाक् तस्मादप्राणन्ननपानन् वाचमभिव्याहरति या वाक् सा ऋक् तस्मात् अप्राणन्ननपानन् ऋचमभिव्याहरति या ऋक् तत्साम तस्माद-प्राणन्ननपानन् साम गायति यत्साम स उद्गीथस्तस्मादप्राणन्ननपानन् उद्गायति ॥ ३ ॥

उप.– अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानन् तानि करोत्येतस्य हेतोर्व्या-नमेवोद्गीथमुपासीत ॥ ४ ॥

## त्रिविधप्राणादिपञ्चकनिरूपणम्

भा.– प्राणाद्यास्त्रिविधाः पञ्चप्रधानो वायुरेव च ॥

मुख्यपञ्चकरूपस्सन् गरुडो मध्यपञ्चकः ।
अवमः पञ्चकस्त्वन्ये प्राणाद्यास्तस्य सूनवः ॥

इति त्रेधा विभागोऽयं विभागोऽन्यश्चतुर्थकः ।
प्राणापानौ शेषवीन्द्रौ तथोदानसमानकौ ॥

रुद्रेन्द्रौ तत्परः श्रेष्ठो वायुर्व्यान उदाहृतः ।
तस्मिन्नुद्गीथनामानमुपासीत हरिं परम् ॥

योऽसौ व्यानगतो विष्णुः स वागृक्सामगः सदा ।
उद्गीथे च स एवैकस्तस्माद् व्यानाद्धि तत्क्रियाः ॥

उद्गीथनामा भगवान् स्थितो व्यानादिपञ्चके ।
वीर्यवत्कर्मकृत् तस्माद्व्यान एव ह्युदाहृतः ॥

**तस्माद् व्यानगतं विष्णुमुपासीतैव नित्यशः ।**
**यद्यप्येको हि भगवान् सर्वदा सर्ववस्तुगः ॥**

**अनूनोद्रिक्तमहिमो निर्विशेषस्सदैव च ।**
**तथापि तत्क्रियाभेदान्नामरूपादिकं पृथक् ॥**

**उच्यते ह्यपृथक्त्वेऽपि पूर्णैश्वर्यैकहेतुतः ।**
**अविशेषोऽपि भगवान् सर्वशक्तित्वहेतुतः ॥**
**विशेषहेतुकं सर्वं करोत्यविकृतः सदा ।**

**भाष्यविवृतिः–** व्याननिष्ठतयोद्गीथोपास्तिमाह– **अथ खल्विति** ॥ व्याने कोऽतिशयः येन तन्निष्ठतयोद्गीथोपास्तिः कार्येत्यतस्तस्य प्राणापानसन्धि-प्रवर्तकत्वेनातिबलत्वादित्याह– **अथ यः प्राणापानयोः सन्धिरिति** ॥ कौ प्राणापानौ नाम, यत्सन्धिप्रवर्तकत्वं व्यानस्येत्यतस्तौ तल्लक्षणोक्त्याह– **यद्वै इत्यादिना** । यत्प्राणिति । यः ऊर्ध्वं प्राणनं करोति स प्राणः । यदपानिति यः अधोनयनं करोति सोऽपान इत्यर्थः । व्याने उद्गीथोपास्तौ तस्य वागादिप्रवर्तकत्वं च हेतुमाह– **यो व्यानः सा वागित्यादिना** ॥ तस्य वागादिप्रवर्तकत्वं कुत इत्यतस्तदनुभवारूढं करोति– **तस्मादप्राणन्ननपान-न्नित्यादिना** ॥ प्राणापानौ निरुध्येति यावत् । अतो व्यानो वागादिप्रवर्तक इति शेषः । व्याने उद्गीथोपास्तौ हेत्वन्तरमाह– **यानीत्यादिना** ॥ एतस्य **हेतोः** उक्तादेव हेतोः इति । ननु व्याने उद्गीथोपास्तिरुच्यते । व्यानानां पञ्चकभेदेन बहुत्वात् कोऽयमुद्गीथोपास्त्यधिकरणभूतो व्यान इत्यतो विवेच-यन्नाह– **प्राणाद्या इति** ॥ सन् अस्ति[१] । व्यानस्यैव वागाद्यनुगत्या तत्प्रवर्त-कत्वं प्रतीयतेऽतस्तां[२] निवारयन्नाह– **य इति** ॥ उद्गीथोनाम सामभेदः ।

१. मुख्यपञ्चकरूप एव सन्नस्तीत्यर्थः ।

२. 'तां प्रतीतिं' गपाठः ।

व्यानस्यैव वागाद्यनुगत्या तत्प्रवर्तकत्वप्रतिपादकं तस्मादप्राणन्नित्यादि व्याचष्टे– **तस्मादिति** ॥ उद्गीथाप्रविष्टस्य व्यानस्यैव वीर्यवत्कर्मकर्तृत्वं तेन प्रविष्टस्य वागादिप्रवर्तकत्वं प्रतीयतेऽतस्तां निवारयति– **उद्गीथेति** ॥ व्यानवागृक्सामोद्गीथलक्षणपञ्चके तस्मादेवेति चैवशब्दसम्बन्धः। अनेकरूपः सन् प्राणव्यानादिगतस्तन्नामा तत्तत्क्रियास्तैः कारयतीत्युक्तम्। तत्र रूपाणां भेदोवा(ऽभेदो वा) भेदेपीन्द्रार्जुनादिवद्गुणवैषम्यं वाऽस्ति किमित्याशङ्कायां नेत्याह– **यद्यपीति** ॥ रूपाणां भेदो न चेद्विशेषोऽपि न चेत्कथं नाम-भेदादिकमित्यतस्तद्धटकेन घटयते– **अपृथक्त्वेऽपीति** ॥ अपृथक्त्वेऽपि विशेषराहित्येऽपि भगवान् पूर्णैश्वर्यैकहेतुतः विशेषहेतुकं सर्वं कुरुत इति योज्यम्॥ करोति चेदकुर्वतोरूपाद्विशेषो विकारित्वं च स्यादित्यतस्तद्धट-कोक्त्या वारयति– **अविशेषोऽपीति** ॥ जीवानां विशेषः हेतुकम्। अविकृतः कर्तृत्वनिमित्तसुखदुःखानुभवविकाररहितः ॥ ४ ॥

## उद्गीथाक्षरोपासना

**उप.– अथ खलूद्गीथाक्षराण्युपासीतोद् गीथ इति प्राण एवोत्प्राणेन ह्युत्तिष्ठति वाग्गीर्वाचो हि गिर इत्याचक्षतेऽन्नं थमन्ने हीदं सर्वं स्थितं द्यौरेवोदन्तरिक्षं गीः पृथिवी थमादित्य एवोद्वायुर्गीरग्निस्थं सामवेद एवोद्यजुर्वेदो गीर्ऋग्वेदस्थं दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतान्येवं विद्वानुद्गीथाक्षराण्युपास्त उद्गीथ इति ॥ ५ ॥**

## काम्यसाधकवस्तुषु भगवदुपासना

**उप.– अथ खल्वाशीः समृद्धिरुपसरणानीत्युपासीत येन साम्ना स्तोष्यन् स्यात् तत्सामोपधावेद्यस्यामृचि तामृचं यदार्षेयं तमृषिं यां देवतामभिष्टोष्यन् स्यात् तां देवतामुपधावेद्येन च्छन्दसा स्तोष्यन् स्यात्**

**तच्छन्द उपधावेद्येन स्तोमेन स्तोष्यमाणः स्यात् तꣳ स्तोममुपधावेद्यां दिशमभिष्टोष्यन् स्यात् तां दिशमुपधावेदात्मानमन्तत उपसृत्य स्तुवीत कामं ध्यायन्नप्रमत्तोऽभ्याशो ह यदस्मै स कामः समृध्येत यत्कामः स्तुवीतेति यत्कामः स्तुवीतेति ॥ ६ ॥ ३ ॥**

**भा.– उद्गीथाक्षरगं चैव प्राणादिषु च संस्थितम् ॥**

**आशीःसमृद्धिहेतुष्वप्यखिलेषु व्यवस्थितम् ।**
**एकमेव हरिं वेद यः स सर्वेष्टमाप्नुयात् ॥ इति च ।**

**उच्छब्दवाच्याः प्राणाद्याः वागाद्या गीरितीरिताः ।**
**अन्नाद्यास्थमिति प्रोक्तास्तेषूद्गीथो हरिः स्थितः ॥ इति च ।**

**आत्मानं परमात्मानमन्ततः सर्वोत्तमत्वेन सर्वत्रोपसृत्य ॥ ३ ॥**

**भाष्यविवृतिः–** उद्गीथाक्षरप्रतिपाद्यप्राणादिस्थितभगवदुपास्तिमाह– **अथ खलूद्गीथाक्षराण्युपासीतेत्यादिना ॥** त्रीण्यप्युद्गीथाक्षराणि निर्दिशति– **उद्गीथ इति ॥** वाचोहि गिरो भवन्ति ॥ ५ ॥

आशीःसमृध्यर्थं तत्कारणस्थितभगवदुपास्तिमाह– **अथ खल्वाशीरित्यादिना ॥ आशीःसमृद्धिः** आशीःसमृद्धिकारणान्युच्यन्त इत्यर्थः । उपसारयन्तीष्टमित्युपसरणानि सामादीनि । **उपधावेत्** आददीत । स्तोमोनाम गानविशेषः । उद्गीथाक्षरप्रतिपाद्यप्राणाद्युपास्तिरुच्यते । आशीः समृद्धिकारणान्युच्यन्त इत्यन्यथाप्रतीयते तां प्रतीतिं निवारयंस्तद्वाक्यजातं व्याचष्टे– **उद्गीथाक्षरगमिति ॥** ननुद्गीथाख्यभगवतः प्राणादिविभिन्नत्वात् कथमुद्गीथाक्षरप्रतिपाद्यस्य भगवतस्तदैक्योक्तिरित्यतः प्राणादिस्थितत्वेन तदुक्तिं घटयन्नाह– **उच्छब्देति ॥** व्यानमेवोद्गीथमुपासीतेत्यादावुद्गीथाख्यस्य भगवतो व्यानाद्यात्मकत्वेनोपास्तिरुच्यते इति प्रतीतिं स्वयमेव

निवारयति वेदपुरुषः– **आत्मानमिति ॥** तत्तथाऽप्रतीतेरनूद्य व्याचष्टे– **आत्मानमिति ॥** परमात्मानं हरिं सर्वासूपास्तिष्वंततः सर्वोत्तमत्वेनोपसृत्य ज्ञात्वा स्तुवीतेत्यर्थः । यत्कामः स्तुवीतेति द्विरुक्तिः समाप्त्यर्था[१] ॥ यत्कामः स्तुवीत स कामः अभ्याशः अस्ति समीपस्थः[२] ॥ इति तृतीयखण्डः ॥

## अथ चतुर्थः खण्डः

## प्रणवोपासना तत्फलं च

**उप.– ओमित्येतदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायति तस्योपव्याख्यानम् । देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशꣳस्ते छन्दोभिराच्छादयन्यदेभिराच्छादयꣳस्तच्छन्दसां छन्दस्त्वं तान् उ तत्र मृत्युर्यथा मत्स्यमुदके परिपश्येदेवं पर्यपश्यदृचि साम्नि यजुषि तेऽनुविक्त्वोर्ध्वा ऋचः साम्नो यजुषः स्वरमेव प्राविशन् ॥ १ ॥**

**यदा वा ऋचमाप्नोत्योमित्येवातिस्वर[३]त्येवꣳ सामैवं यजुरेष उ स्वरो यदेतदक्षरमेतदमृतमभयं तत्प्रविश्य देवा अमृता अभया अभवन् स य एतदेवं विद्वानक्षरं प्रणौत्येतदेवाक्षरꣳ स्वरममृतमभयं प्रविशति तत्प्रविश्य यदमृता देवास्तदमृतो भवति ॥ २ ॥ ४ ॥**

**भा.– स्वरतेस्तु स्वरो विष्णुस्तद्रतेर्वायुरुच्यते ।**
**वायुस्वरे स्वरं विष्णुमोमाख्यं समुपासिरे ॥**

---

१. द्विरुक्तिस्तु पूर्वोक्तविद्यावधारणार्था । उक्तञ्च-
अध्यायान्ते द्विरुक्तिः स्याद्वेदे वा वैदिकेऽपि वा ।
विचारो यत्र सज्ज्येत पूर्वोक्तस्यावधारणे ॥ इति ।

२. अतिसमीपस्थः हृपाठोऽयम् ।

३. ''अभिस्वरति'' इति क्वचित् पाठः ।

**देवास्तेनामृतं प्राप्ता मुक्त्याख्यं मृत्युवर्जिताः ।**
**मारणान्मृत्युरित्युक्ता दुर्गा तद्भयतः सुराः ॥**
**ओमित्युपास्य तं विष्णुं परमामृतमापिरे ॥ इति सन्ध्याने ।**[1]

**ऊर्ध्वा उत्तमाः ॥ ४ ॥**

**भाष्यविवृतिः–** उद्गीथैकदेश[2] प्रणवोपास्तेः फलानुक्तेस्तामनुवदन् संसारनिवृत्तिलक्षणं फलमाख्यायिकयाऽऽह– **ओमित्यादिना ॥ छन्दस्त्वं** छन्दःशब्दप्रवृत्तिनिमित्तमिति । देवैश्छंदोभिरात्माच्छादनं कृतमित्यत्र ज्ञापकमाह । तत्र ऋचि साम्नि यजुषि स्थितांस्तान्मृत्युः पर्यपश्यत् । तेऽनुवित्वा विदित्वा केवलाया ऋचः साम्नो यजुषः[3] [4]परित्यज्य स्वरमेव[5] प्राविशन्[6] ॥ १ ॥

ऋगादिपरित्यागेन स्वरप्रवेशो देवैः कृत इत्यत्र ज्ञापकमाह– **यदावा इति ॥** केवलं ऋगादीनां रक्षणेऽशक्तत्वात् । खल्विदानीमपि प्रणवपूर्वं ऋगादि जपतीत्यर्थः । स्वरवाच्यः क इति जिज्ञासायां तं महिमोक्त्याह– **एष उ स्वर इत्यादिना ॥** न केवलं देवानामेव प्रणवोपास्तिरमृतत्व-प्रदाऽपि तर्ह्यद्यतनस्यापि तद्योग्यस्येत्याह– **स य इत्यादिना ॥ प्रणौति** प्रणवेन स्तौति ।

तं खण्डं तात्पर्यतो व्याचष्टे– **स्वरतेरिति ॥** तद्गतेर्वायुरपि स्वर उच्यत इत्यर्थः । मृत्युर्यम इति प्रतीतिं निवारयन् अत्र विवक्षितं मृत्युमाह–

---

१. "सद्ध्याने" इति हृपाठः ।
२. उद्गीथादेश खपाठः, नायं पाठः साधुः ।
३. ल्यब्लोपनिमित्ता पञ्चमी ।
४. निर्गत्य खपाठः ।
५. स्वयमेवेति खपाठः । नायं पाठः साधुः ।
६. ऋगादिदेवतां परित्यज्य स्वरमेव प्राविशन्नित्यर्थः ।

मारणादिति ॥ ननु मारको मृत्युः अतः कथं दुर्गा मृत्युरित्यतः सैव मुख्यतो मारिकेत्युक्तं मारणादिति । ऊर्ध्वाः प्रांशव इति प्रतीतिं निवारयंस्तदर्थमाह– ऊर्ध्वा इति[1] ॥ इति चतुर्थः खण्डः ॥

## अथ पञ्चमः खण्डः

### उद्गीथः प्रणवश्चैक एव

उप.– अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इत्यसौ वाऽऽदित्य उद्गीथ एष प्रणव ओमिति ह्येष स्वरन्नेति ॥ १ ॥

### सूर्यकिरणगतवायौ भगवदुपासनाफलम्

एतमु एवाहमभ्यागासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच रश्मीꣳस्त्वं पर्यावर्तयताद् बहवो वै ते भविष्यन्तीत्यधिदैवतम् ॥ २ ॥

### इन्द्रियगतवायौ भगवदुपासनाफलम्

अथाध्यात्मं य एवायं मुख्यप्राणस्तमुद्गीथमुपासीतोमिति ह्येष स्वरन्नेति ॥

एतमु एवाहमभ्यागासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच प्राणांस्त्वं भूमानमभिगायताद् बहवो वै ते भविष्यन्तीति ॥ ४ ॥

### अग्निस्थभगवदुपासनया सामगानदोषस्य प्रायश्चित्तनिरूपणम्

अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथः इति होतृपदनाद्धैवापि दुरुद्गीतमनुसमाहरतीत्यनुसमाहरतीति ॥ ५ ॥ ५ ॥

---

१. मत्स्यः स्वामारकं न जानाति देवास्तु ज्ञातवन्तः इत्यत्र हेतुतयोत्तमत्वस्यैव वक्तव्यत्वादिति भावः ।

भा.– आदित्यसंस्थितो वायुः प्रणवस्तद्गतो हरिः ।
प्रकृष्टत्वाच्च नेतृत्वाद्गतित्वादखिलस्य च ॥

उद्गीथ उच्चैर्गीयत्वात् स एव पुरुषोत्तमः ।
स एव प्राणगो देहे ओमित्येव सदा जपन् ॥

एत्येष भगवान् विष्णुर्ध्यायन्नेकं तमक्षरम् ।
एकपुत्रो मुक्तिमेति ध्यायन् प्राणेषु रश्मिषु ॥
बहुपुत्रो विमुक्तः स्यात् तस्माद्ध्यायेत् तथा परम् ॥
इति च ।

**प्राणस्थं भूमानमभिगाय दुरुद्गीतमनुसमाहरति । अनुरूपमेव करोति । होतृसदनस्थमग्निस्थं भगवन्तं ध्यात्वा ।**

**अन्यथागानजं दोषमग्नौ ध्यात्वा हरिं परम् ।**
**अपाकरोति तस्मात् तं ध्यायेदेवाग्निगं सदा ॥ इति त्रैविद्ये ॥ ५ ॥**

**भाष्यविवृतिः–** उद्गीथोपासकस्यैतमु एवान्ततो विदित्वोत्क्रामतीति मोक्षलक्षणं फलमुक्तम् । इदानीं बहुपुत्रानन्दाधिक्यफलान्तनिष्ठामुपास्तिमाख्यायिकयाऽऽह– **अथ खलु य उद्गीथ इत्यादिकया** ॥ पुनर्यः प्रणवः स उद्गीथ इत्यभेदोपचारनिवृत्यर्थः । पुनरथ खलु य उद्गीथः स प्रणव इति उक्तविद्यासमाप्त्यर्था ।

केवलं बहुपुत्रफलत्वप्रतीतिं निवारयंस्तद् व्याचष्टे– **आदित्येत्यादिना** ॥ विमुक्त इत्युपसर्गेणानन्दाधिक्यमाह । प्राणान् भूमानमिति सामानाधिकरण्यप्रतीतिं निवारयति– **प्राणस्थमिति** ।

दुरुक्ति[1] हेतुकपापनिवृत्यर्थमुपास्तिमाह **दुरुद्गीतमिति** ॥ तदप्रतीतेरनूद्य व्याचष्टे **दुरुद्गीतमिति** ॥ **अनुरूपं** इष्टहेतुं । कुत्र उद्गीथं ध्यात्वा दुरुद्गीतमनुरूपं करोतीत्यत उक्तं **होतृसदनादिति** ॥ तदप्रतीतेर्व्याचष्टे **होत्रिति** ॥ होतृसदनस्थाग्निं ध्यात्वेत्येव कस्मान्न व्याख्यायते इत्यतोऽस्यैव प्रामाणिकत्वादित्युक्तमर्थं प्रमाणेन समर्थयते **अन्यथेति** ॥ विद्यासमाप्तौ द्विरुक्तिः ॥ ५ ॥ **इति पञ्चमः खण्डः** ॥

## अथ षष्ठः खण्डः

## सरस्वतीवाय्वोरुपासना

**उप.– इयमेवर्गग्निः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते इयमेव साग्निरमस्तत्साम ॥ १ ॥**

**अन्तरिक्षमेवर्ग्वायुः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयतेऽन्तरिक्षमेव सा वायुरमस्तत् साम ॥ २ ॥**

**द्यौरेवर्गादित्यः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते द्यौरेव सादित्योऽमस्तत् साम ॥ ३ ॥**

**नक्षत्राण्येवर्क् चन्द्रमाः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते नक्षत्राण्येव सा चन्द्रमा अमस्तत् साम ॥ ४ ॥**

**अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत् साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयतेऽथ यदेवैतदादित्यस्य शुक्लं भाः सैव साम यन्नीलं परः कृष्णं तदमस्तत् साम ॥ ५ ॥**

---

१. दुरुक्त्यादि

## सूर्यान्तर्गतप्राणस्थभगवन्महिमा

उप.– अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषः दृश्यते हिरण्यश्मश्रु-र्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः ॥ ६ ॥

तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति । नाम स एषः सर्वेभ्यः पाप्मभ्यः उदितः उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद ॥ ७ ॥

तस्यर्क्च साम च गेष्णौ तस्मादुद्गीथस्तस्मात् त्वेवोद्गातैतस्य हि गाता स एष ये चामुष्मात् पराञ्चो लोकास्तेषां चेष्टे देवकामानां चेत्यधि-दैवतम् ॥ ८ ॥ ६ ॥

भा.– अग्नीरसूर्यनीलेषु वायुस्थः[१] सामदेवता ।
उर्वीवियद्द्युशुक्लेषु ऋग्देवीस्था[२] सरस्वती ॥

सेति भार्या हि वाग्देवी प्राणोऽमः पतिरीरितः ।
एवं तौ सामनामानावुभावेवाप्युदाहृतौ[३] ॥

अतो हि सामवेदोयं ऋक्सामात्मक ईरितः ।
वागादिष्वेवमेवैतौ वाक्प्राणौ सर्वदा स्थितौ ॥

तयोरन्तःस्थितो विष्णुर्गायको तस्य तावुभौ ।
ऋक्सामाभ्यां स उन्नामा पापोद्गश्चोच्च एव च ॥

इत्यादि सत्तत्त्वे ।

---

१. 'वायुः स्थः' इति हृपाठः ।

२. 'ऋग्देवी स्था' इति हृपाठः ।

३. ''उभावेतावुदाहृतौ'' प्रपाठः ।

**कप्यासरक्तपद्माक्षः सूर्यगश्चाक्षिगश्च सः ।**
**गायकस्तस्य विष्णोर्यः स स्वर्ग्यांश्च नृलोकगान् ॥**

**कामान् दद्यान्नरश्चेत् स्यात् सुराणां च नृणामपि ।**
**मोक्षदो यदि वायुः स्यान्मुख्योद्गाता ततोऽनिलः ॥ इति च ।**

**'तस्मादुद्गीथ उच्चोऽसौ गीयते च' इति ।**

**भाष्यविवृतिः–** वाच ऋग्रसः ऋचः साम रस इति प्रकृतऋक्साम्नो-रीश्वरवर्गत्वादधिभूतमध्यात्मं च तदुपास्तिपूर्वं तत्परिवृतोद्गीथोपास्तिमाह– **इयमेवेत्यादिना** ॥ तत्रेयमेवर्गग्निः सामेत्यादीनि पञ्चापि वाक्यानि भूरादीनामेव ऋगादित्वप्रतीतिं निवारयन् व्याचष्टे [१]**अग्नीत्यादिना** ॥ सूर्येति[२] परं चन्द्रेति ग्राह्यम् । तथा द्यु इति परं नक्षत्रेत्यपि ग्राह्यम् । तत्र सरस्वती वायुश्चेत्येतद्वस्तुद्वयमेकशरीरं सामनामकं वर्तत इत्यर्थप्रतिपादकानि इयमेवग्निरमस्तत् सामत्वादीनि[३] पञ्चापि वाक्यानि तथाऽप्रतीतेर्व्याचष्टे– **सेतीति**[४] ॥ तदेतत्साम वायुरेतस्याम् ऋचि सरस्वत्यामध्यूढं सम्बद्धो वर्तत इत्युक्तम् । तत्साधयितुमुक्तम् – **तस्मादिति** ॥ **तस्मात्** तयोः सम्बद्धत्वादेव वाह्यमपि साम ऋच्यध्यूढं गीयत इति । तत्तथाऽप्रतीते-र्व्याचष्टे– **अतो हीति** ॥ उक्तव्याख्यानातिदेशेनाध्यात्मिकखण्डमपि तात्पर्यार्थोक्त्या व्याचष्टे – **वागादिष्विति**[५] ॥ ऋक्सामनामानौ वाक्-प्राणावेव किं प्रधानपूज्यावित्यतो य एषोऽन्तरादित्ये य एषोऽन्तरक्षिणीति

---

१. 'अग्नीरे' खपाठः । २. सूर्येत्यतः परं इत्यर्थः ।

३. सामेत्यादीनि इति खपाठः ।

४. एवं तावुभावपि मिलित्वा सामनामानावुदाहृतौ इत्यनेनेदमर्धनारीनरात्मकवायुरूप-कथनपरमिति ज्ञायते । उक्तश्च - अर्धनारीनरवपुर्वायुः कुत्रचिदीरितः । इति ।

५. आदिपदेन प्राणचक्षुरात्मश्रोत्रमनःशुक्लनीलानां ग्रहणम् ।

तत्पूज्यमुक्त्वा तस्य तत्पूज्यत्वं स्पष्टीकृतम् । तस्य ऋक्सामच गेष्णाविति तद्व्याचष्टे– **गायकाविति** ॥ तस्मादत्युत्तमऋक्सामनामवाणीप्राणाभ्यां गीयमानत्वाद्यः कोऽप्युद्गाता एतस्यैवोद्गता भवेत् । उन्नामकः कस्मादित्यतः सर्वपापस्पृष्टिरहितत्वादित्युक्तम् – **स एष सर्वेभ्य इति** ॥ तत्पूर्वमर्थान्तरं चाह– **ऋक्सामभ्यां स उन्नामेति** । कपेर्वानरस्यासनं पृष्टं यथा पुण्डरीकं यथावेति भिन्नोपमत्वप्रतीतिं निवारयन् समानाधिकरणतया व्याचष्टे– **कप्यासेति** । कं पिबन्नालसम्बन्धीति[६] नलिनायतलोचने इत्यर्थः। हिरण्मयहिरण्यसुवर्णशब्दाः सुखार्थाः[७] ॥ ६ ॥ **इति षष्ठः खण्डः** ॥

## अथ सप्तमः खण्डः

## देहगतऋक्साम्नोरुपासना

**उप.– अथाध्यात्मं वागेवर्क् प्राणः साम तदेतदेस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते वागेव सा प्राणोऽमस्तत् साम ॥ १ ॥**

**चक्षुरेवर्गात्मा साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते चक्षुरेव साप्राणोऽमस्तत् साम ॥ २ ॥**

६. पुण्डरीकशब्दो रक्तपद्मवाची । कं पिबन्नालसम्बन्धीति योगेन रक्तपद्मविशेषणमित्यर्थः । एवञ्च कप्यासशब्देनाम्लानत्वं लभ्यत इति तात्पर्यम् ।

७. हिरुक् बाह्यविलक्षणं सुखं हिरण्यं स्यात् । मयडाधिक्यार्थे स्वरूपार्थे च । इतरविलक्षणपूर्णानन्दस्वरूपः । पूर्णौ हि हितौ निहितौ रश्च णश्चेति रणौ रत्यानन्दौ यस्मिन् स हिरण्मयो वा सुवर्णवर्णो वा, पुरुषो दृश्यते ज्ञानदृष्ट्या इति शेषः । उक्तञ्च-

........स एवच हिरण्मयः ।

हिरुक् सुखं हिरण्यं स्याद् बाह्यानन्दात् पृथग् यतः ।

आधिक्यार्थे मयड् यस्मादधिकानन्दरूपकः । इति ।

रत्यानन्दौ पूर्णनित्यौ हितौ तेन हिरण्मयः ।

स्वर्णवर्णतया वाऽपि वासुदेवो हिरण्मयः ॥ इति च ।

श्रोत्रमेवर्ङ्मनः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते श्रोत्रमेव सा मनोऽमस्तत् साम ॥ ३ ॥

अथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत् साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयतेऽथ यदेवैतदक्ष्णः शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत् साम ॥ ४ ॥

## अक्षिस्थोद्गीथमहिमा

अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क् तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावदमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम ॥ ५ ॥

स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चेति तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात् ते धनसनयः ॥ ६ ॥

अथ य देतदेवं विद्वान् साम गायत्युभौ साम गायति सोऽमुनैव स एष ये चामुष्मात् पराञ्चो लोकास्ताꣳश्चाप्नोति देवकामास्ताꣳश्च ॥ ७ ॥

अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्ताꣳश्चाप्नोति मनुष्यकामाꣳश्च तस्मादु हैवंविदुद्गाता ब्रूयात् ॥ ८ ॥

कं ते काममागायानीत्येष ह्येष कामगानस्येष्टे य एवं विद्वान् साम गायति साम गायति ॥ ९ ॥ ७ ॥

भा.– आत्मा जीवः ।

सरस्वती हि चक्षुःस्था जीवस्थो वायुरीरितः[१] ।
विदित्वा तावुभौ देवी तद्रूं ध्यायेद्धरिं सदा ॥ इति मानसे ।

१. वायुरीश्वरः इति हृपाठः ।

**दृश्यते ज्ञानदृष्ट्या यः सूर्ये चक्षुषि चैकराट् ।**
**ऋङ्नामा ज्ञानरूपत्वात् साम नित्यसमत्वतः ॥**
**उक्थमुत्थापकत्वाच्च यजुर्याज्यस्वरूपतः ।**
**ब्रह्मासौ पूर्णरूपत्वादेवं सर्वाभिधानवान् ॥ इति च ॥**[1]

**यथा बदरिकानाथो द्वारकानाथ इत्यपि ।**
**अर्वाङ्नाथः पराङ्नाथ इति तद्वदिहोच्यते ॥**
**सर्वनाथोऽपि भगवान् सन्निधानविशेषतः ॥ इति च ॥ ६-९**
**॥ ७ ॥**

**भाष्यविवृतिः**– न केवलं तस्य वाक्प्राणावेव गायकौ किं नाम सर्वेऽपि गायकास्तद्गायका इत्याह– **तद्य इति** ॥ गायन्ति राजादिपुरतः । **तस्मात्** –गायकात् । **धनसनयः**–धनप्राप्तिमन्तः । राजादेर्धनदाने स्वातन्त्र्याभावात् ॥ ६ ॥

उक्तं जानतः सामगायकस्य सामर्थ्यमाह– **अथय इति** ॥ **उभौ** सूर्य-चक्षुस्थितौ । पुनश्च तस्येष्टप्राप्तिलक्षणं सामर्थ्यान्तरमाह– **सोऽमुनैवे-त्यादिना** ॥ तस्य पराग्लोकादिप्राप्तिः किं स्वसामर्थ्येन? नेत्युक्तम्– **सोऽमुनैवेति** । तस्मादुहैवं च हरेरागायक[2]स्यातिसमर्थत्वादेव हि । एष ह्येव कामसागानस्येष्टे इत्युक्तं सर्वकामगानशक्तत्वं सर्वस्योद्गातुः प्रतीयते तद्युक्तमतो व्यवस्थमाह– **गायक इति** ॥ तस्मादुद्गीथ इति प्रकृतं हेतू-कृत्योद्गीथत्वमुच्यते । बहूनां प्रकृतत्वात् किं परामृश्योद्गीथत्वमुच्यत इति न ज्ञायतेऽतोऽनूद्य व्याचष्टे– **तस्मादिति** ॥

---

१. 'गुणपूर्णत्वात्' इति प्रचलित पाठः ।

२. गायकेति खपाठः ।

चक्षुरेवर्गात्मा साम इत्युक्ते आत्मा क इति न ज्ञायतेऽत आह– **आत्मा जीव इति ॥** बह्वर्थत्वादात्मशब्दस्य कुतोऽयं निश्चय इत्यतस्तत्र प्रमाणं पठति– **सरस्वतीति ॥** मण्डलचक्षुषोरेव दृश्यमानत्वादादित्ये पुरुषो दृश्यते अक्षिणि पुरुषो दृश्यत इत्युक्तिः कथमित्यतस्तद्घटयन्नाह– **दृश्यत इति ।** चक्षुषि[१] भगवति। सूर्यगतेच सर्वगतेच सर्वनामाभिधेयत्व-महिमानमुपलक्षणत्वेनाह– **सैवर्गित्यादिना ॥** न ते ऋगादिशब्दाः डित्थादिशब्दवत् साङ्केतिकाः प्रयुक्ता इति भावेन तान्निर्वक्ति– **ऋङ्-नामेति ॥**[२] सर्वलोकनाथस्य भगवतः कथं ये चामुष्मादित्यादिना कतिपयलोकाधिपत्योक्तिरित्यतस्तद्दृष्टान्तोक्त्या घटयन्नाह– **यथेति ॥**
**इति सप्तमः खण्डः ॥**

## अथ अष्टमः खण्डः

## उद्गीथनामकभगवद्विषये कथा

**उप.– त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यः चैकितायनो दाल्भ्यः प्रवाहणो जैबिलिरिति । ते होचुरुद्गीथे ये कुशलाः स्मो हन्तोद्गीथे कथां वदाम इति ॥ १ ॥**

**तथेति ह समुपविविशुः स ह प्रवाहणो जैबिलिरुवाच भगवन्तावग्रे वदतां ब्राह्मणयोर्वदतोर्वाचꣳ श्रोष्यामीति स ह शिलकः शालावत्य-**

---

१. 'चाक्षुषे' इति पाठः, न साधुः विभाष्यत्वात् ।

२. एतेन जीवाख्यचाक्षुषपुरुषपरमित्येतदपि परास्तम् । किञ्च यदीदं प्रकरणं जीवपरं स्यात् तदा ''स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे'' इति पातालादि-लोकाधिपत्यकथनमयुक्तं स्यात् । न च जीवस्यार्वाग्लोकाधिपत्यमस्ति । सर्वेषां तदनुपलम्भेऽपि कस्यचित् स्यादिति चेन्न । सर्वस्यापि भगवद्भिक्षुकत्वेन कस्याप्यसम्भवात् । उक्तं चैतरेयभाष्ये– ''नहि कश्चिद् भिक्षुकः पातालाद्यधिपति-रित्यत्र किञ्चिन्मानम्'' इति ।

श्चैकितायनं दाल्भ्यमुवाच हन्त त्वा पृच्छानीति पृच्छेति होवाच का साम्नो गतिरिति ॥ २ ॥

## शिलककृतप्रश्नानां दाल्भ्याभिहितोत्तराणि

स्वर इति होवाच स्वरस्य का गतिरिति प्राण इति होवाच प्राणस्य का गतिरित्यन्नमिति होवाचान्नस्य का गतिरित्याप इति होवाचापां का गतिरित्यसौ लोक इति होवाचामुष्य लोकस्य का गतिरिति ॥३॥

न स्वर्गं लोकमतिनयेदिति होवाच स्वर्गं वयं लोकं सामाभिसंस्थापयामः स्वर्गसंस्तावं हि सामेति । तं ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यं उवाचाप्रतिष्ठितं वै किल ते दाल्भ्य साम यस्त्वेतर्हि ब्रूयान् मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति ॥ ४ ॥

## दाल्भ्यकृतप्रश्नानां शिलकाभिहितोत्तराणि

हन्ताहमेतद्भगवतो वेदानीति विद्धीति होवाचामुष्य लोकस्य का गतिरित्ययं लोक इति होवाचास्य लोकस्य का गतिरिति न प्रतिष्ठां लोकमतिनयेदिति होवाच प्रतिष्ठां वयं लोकं सामाभिसंस्थापयामः प्रतिष्ठासंस्तावं हि सामेति ।

## प्रवाहणस्याशयः

तं ह प्रवाहणो जैबिलिरुवाचान्तवद्वै किल ते शालावत्य साम यत्स्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति हन्ताहमेतद्भगवतो वेदानीति विद्धीति होवाच ॥ ५ ॥ ८ ॥

भा.– अग्निः सामाभिमानी स्याद् वरुणस्तु स्वरात्मकः ।
प्राणावराभिमानी तु सूर्य एव प्रकीर्तितः ॥

अन्नाभिमानी दक्षश्च शक्रस्त्वबभिमानवान् ।
द्यात्मकश्च[1] शिवः प्रोक्तः क्रमेणैवोत्तरोत्तराः ।
क्रमेण मोक्षे प्राप्याश्च पूर्वेषामुत्तरोत्तराः ॥ इति निवृत्ते ।

अग्नेर्वागात्मकत्वात् । उदकात्मकत्वात् स्वरस्य । 'आदित्य एव प्राणोऽन्नं वै प्रजापतिः' इति श्रुतेः । 'आप एवेन्द्रो द्यौर्वाव रुद्रः' इत्यादेश्च ।

## कथाया उद्देशः

विशेषज्ञानसंप्राप्त्यै जानन्तोऽपि परं हरिम् ।
ब्रूयुर्देवाश्च ऋषयस्तदन्यस्य परात्मताम् ॥ इति ब्रह्मतर्के ।

स्वर्गाभिमानिरुद्रं[2] प्रति सामाभिसंस्थापयामः । तत्स्तावकं हि साम । मूर्धा ते विपतेदिति यः कश्चिद् ब्रूयाच्चेत् विपतिष्यति ।

ब्रह्मैव हि पृथिव्यात्मा विष्णुराकाशनामकः ।
आदीप्तत्वाद्धरीयांश्च परमो हरिरेव हि ॥ इति सत्तत्त्वे ।

भाष्यविवृतिः– उद्गीथाख्यो भगवान् सर्वोत्तम इत्युक्तम् । तन्मीमांसा-रूपाख्यायिकया समर्थयते । त्रय इत्यादिकया ॥ शिलको नामतः । शालावत्यां भवः शालावत्यः । दालभ्योनामतः । चेकितान[3]स्यापत्यं चैकितानः[4] । प्रवाहणो नामतः । जिबलस्यापत्यं जैबलिः । वीतराग-कथालथक्षणां वादकथां वदामः । अप्रतिष्ठितम् अपर्यवसितम् ॥

१. 'द्युवात्मकश्च' इति ह्पाठः ।

२. 'स्वर्गाभिमानिनं रुद्रं' इति प्रचलितपाठान्तरम् ।

३. चिकितायनस्य इति खपाठः ।

४. चैकितायनः इति खपाठः ।

श्चैकितायनं दाल्भ्यमुवाच हन्त त्वा पृच्छानीति पृच्छेति होवाच का साम्नो गतिरिति ॥ २ ॥

## शिलककृतप्रश्नानां दाल्भ्याभिहितोत्तराणि

स्वर इति होवाच स्वरस्य का गतिरिति प्राण इति होवाच प्राणस्य का गतिरित्यन्नमिति होवाचान्नस्य का गतिरित्याप इति होवाचापां का गतिरित्यसौ लोक इति होवाचामुष्य लोकस्य का गतिरिति ॥३॥

न स्वर्गं लोकमतिनयेदिति होवाच स्वर्गं वयं लोकं सामाभिसंस्थापयामः स्वर्गसंस्तावं हि सामेति । तं ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यं उवाचाप्रतिष्ठितं वै किल ते दाल्भ्य साम यस्त्वेतर्हि ब्रूयान् मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति ॥ ४ ॥

## दाल्भ्यकृतप्रश्नानां शिलकाभिहितोत्तराणि

हन्ताहमेतद्भगवतो वेदानीति विद्धीति होवाचामुष्य लोकस्य का गतिरित्ययं लोक इति होवाचास्य लोकस्य का गतिरिति न प्रतिष्ठां लोकमतिनयेदिति होवाच प्रतिष्ठां वयं लोकं सामाभिसंस्थापयामः प्रतिष्ठासंस्तावं हि सामेति ।

## प्रवाहणस्याशयः

तं ह प्रवाहणो जैबिलिरुवाचान्तवद्वै किल ते शालावत्य साम यत्स्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति हन्ताहमेतद्भगवतो वेदानीति विद्धीति होवाच ॥ ५ ॥ ८ ॥

भा.– अग्निः सामाभिमानी स्याद् वरुणस्तु स्वरात्मकः ।
प्राणावराभिमानी तु सूर्य एव प्रकीर्तितः ॥

अन्नाभिमानी दक्षश्च शक्रस्त्ववभिमानवान् ।
द्व्यात्मकश्च[१] शिवः प्रोक्तः क्रमेणैवोत्तरोत्तराः ।
क्रमेण मोक्षे प्राप्याश्च पूर्वेषामुत्तरोत्तराः ॥ इति निवृत्ते ।

अग्नेर्वागात्मकत्वात् । उदकात्मकत्वात् स्वरस्य । 'आदित्य एव प्राणोऽन्नं वै प्रजापतिः' इति श्रुतेः । 'आप एवेन्द्रो द्यौर्वाव रुद्रः' इत्यादेश्च ।

## कथाया उद्देशः

विशेषज्ञानसंप्राप्त्यै जानन्तोऽपि परं हरिम् ।
ब्रूयुर्देवाश्च ऋषयस्तदन्यस्य परात्मताम् ॥ इति ब्रह्मतर्के ।

स्वर्गाभिमानिरुद्रं[२] प्रति सामाभिसंस्थापयामः । तत्स्तावकं हि साम । मूर्धा ते विपतेदिति यः कश्चिद् ब्रूयाच्चेत् विपतिष्यति ।

ब्रह्मैव हि पृथिव्यात्मा विष्णुराकाशनामकः ।
आदीप्तत्वाद्वरीयांश्च परमो हरिरेव हि ॥ इति सत्तत्त्वे ।

भाष्यविवृतिः– उद्गीथाख्यो भगवान् सर्वोत्तम इत्युक्तम् । तन्मीमांसा-रूपाख्यायिकया समर्थयते । त्रय इत्यादिकया ॥ शिलको नामतः । शलावत्यां भवः शालावत्यः । दालभ्योनामतः । चेकितान[३]स्यापत्यं चैकितानः[४] । प्रवाहणो नामतः । जिबलस्यापत्यं जैबलिः । वीतराग-कथालथक्षणां वादकथां वदामः । अप्रतिष्ठितम् अपर्यवसितम् ॥

१. 'द्युवात्मकश्च' इति ह्पाठः ।

२. 'स्वर्गाभिमानिनं रुद्रं' इति प्रचलितपाठान्तरम् ।

३. चिकितायनस्य इति खपाठः ।

४. चैकितायनः इति खपाठः ।

का साम्नो गतिरित्यादि[1]पृष्टे स्वरादिरुक्तस्तत्र सामस्वरादयः के इति न ज्ञायतेऽतस्तानाह– **अग्निरित्यादिना** ।। प्राण उच्छ्वासनिश्वासरूपः । गत्यर्थत्वप्रतीतिं निवारयन् का गतिरित्येतद्व्याचष्टे । **क्रमेण मोक्ष** इति । अग्न्यादेः सामत्वं कुत इत्यतस्तद्युक्तिश्रुतिभ्यां समर्थयते । **अग्नेरित्यादिना**। अग्नेर्वागभिमानित्वात् साम्नश्च वागधीनाभिव्यक्तित्वादग्नेः सामत्वम् । स्वरस्य वर्णव्यञ्जकध्वनेरुदकात्मकत्वात्ताल्वादिस्थितोदकाधीनजनित्वाद्वरुणस्योदकाभिमानित्वात् स्वरो वरुणः । ननु न दैवं केशवात्परमिति लोके पामरोऽपि जानाति तत्कथं न स्वर्गं लोकमति अतिक्रम्यान्यमुत्तमत्वेन नयेदित्यृषेरुक्तिरित्यतस्तद्घटयन्नाह ।। **विशेषेति** । कस्मात् स्वर्गं लोकं नातिनयेदित्यतः स्वर्गं लोकं[2] वयं लोकमित्युक्त्वा तद्विवृतं स्वर्गसंस्तावं हि सामेति । तत्रान्वयस्य हेतुहेतुमद्भावस्य चाप्रतीतेस्तावाह– **स्वर्गेति** ।। यस्त्वेतर्हीत्यस्यान्वयाप्रतीतेरपेक्षितं निक्षिप्य तद्दर्शयति– **मूर्धेति** । इदमाकाशशब्दयोः पृथिव्याकाशार्थत्वप्रतीतिं निवारयन्नर्थावाह– **ब्रह्मेति** । इति **अष्टमः खण्डः** ।

## अथ नवमः खण्डः

## उद्गीथनामकभगवानेव सर्वोत्तमः

**उप.– अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणं स एष परोवरीयानुद्गीथः स एषोऽनन्तः ।। १ ।।**

१. दौ खपाठः

२. लोकं इति खपाठे नास्ति ।

## हरिसर्वोत्तमत्वज्ञानफलम्

परोवरीयो हास्य भवति परोवरीयसो ह लोकाञ्जयति य एतमेवं विद्वान् परोवरीयां समुद्गीथमुपास्ते । तं हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच यावत्त एनं प्रयाजमुद्गीथं वेदिष्यन्ते परोवरीयो हैभ्यस्तावदस्मिꣳल्लोके जीवनं भविष्यति तथामुष्मिꣳल्लोक इति स य एतमेवं विद्वानुपास्ते परोवरीय एव हास्यास्मिꣳल्लोके जीवनं भवति तथामुष्मिꣳल्लोके लोक इति लोके लोक इति ॥ २ ॥ ९ ॥

भा.– शुभाशुभानां दाहादौ साम्यात् सामाग्निरीरितः ।
स्वो विष्णुः सागरे रन्ता वरुणोऽतः स्वरः स्मृतः ॥

उदयाज्जगत्प्रणेतृत्वात् सूर्यः प्राण उदाहृतः ।
अत्ता रुद्रस्तद्विरोधाद् दक्षः स्यादन्ननामकः ॥

स्वो विष्णुस्तद्रतिर्वायुस्तद्वो मुक्तौ सदाशिवः ।
अतः स्वर्गोसुसंस्थत्वादसाविति च कीर्तितः ॥

सर्वदेवान्तरत्वात् तु ब्रह्मायं समुदाहृतः ।
लोको ज्ञानस्वरूपत्वादेतेषां परमो हरिः ॥ इति ब्रह्मतर्के ।

आपालनादाप इन्द्रः । अधिकं वरीयान् परोवरीयान् । तत्परोवरीयोऽस्य रक्षकं भवति । यावत्तः द्वापरादिपर्यन्तम् ॥ ८ ॥ ९ ॥

भाष्यविवृतिः– सामादिष्वेव सामादिशब्दप्रसिद्धेरग्न्यादेः कथं सामादिशब्दाभिधेयत्वमित्यतो निरुच्य योगवृत्या तद्दर्शयति । **शुभेत्यादिना** । स्वो विष्णुः सागरे रमत इति वरुणः स्वरः स्मृत इत्यर्थः । उदयेन जगत्प्रणयनात् प्राणः सूर्य इत्यर्थः । दक्षः अद्यत इत्यन्ननामकः स्यात् ।

अत्ता क इत्यत उक्तम् । **अत्ता रुद्र इति** ॥ तथापि दक्षस्य तदद्यत्वं कथमित्यत उक्तं– **तद्विरोधादिति** । असौ लोक इत्येतत् द्व्यात्मकश्च शिवः प्रोक्त इति व्याख्यातम् । तत्र स्वर्गासौलोकशब्दाः प्रयुक्ताः । अयं लोक इत्येतद्ब्रह्मैवहि पृथिव्यात्मेति च व्याख्यातम् । तत्रायं लोक इति शब्दौ प्रयुक्तौ । तांस्तथा निर्वचनेन घटयते ॥ **स्वो विष्णुरित्यादिना** । एतेषां ब्रह्मादिदेवानां प्रमाणेनापृशब्दानिरुक्तेः स्वयं तन्निर्वक्ति ॥ **आपालनादिति** । परोवरीयानित्यत्र वरीयान् शब्दः परमो हरिरिति व्याख्यातः । परो इत्युर्वरितमर्थाप्रतीतेर्व्याचष्टे ॥ **अधिकमिति**[१] ॥ उक्त्वा फलमुवाच । फलमेवाह । **यावत्त इति** । ये प्रजायां योग्याः । जीवसमूहे एनमुद्गीथं वेदिष्यन्ते तेषामेभ्यः परोवरीयोऽस्मिल्लोके जीवनं भविष्यतीत्युक्तम् । तत्किं जीवनं निर्मर्यादम् ? न । यावत्तः प्रमाणेन यावत्कालपर्यन्तमुक्तं तावदित्युक्तम्[२] ॥ कोऽसौ प्रमाणनियतः काल इत्यतस्तमाह । **यावत्त इति** । त्रेतायामुद्गीथं वेदयितुर्यावत्तः यावद्द्वापरादि तावत्पर्यन्तं परोवरीयो जीवनं भवतीत्यर्थः । **इति नवमः खण्डः** ॥

## अथ दशमः खण्डः

## उषस्तेर्वृत्तान्तः

**उप.– मटचीहतेषु कुरुष्वाटक्या सह जाययोपस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास स हेभ्यं कुल्माषान् खादन्तं विभिक्षे ॥ १ ॥**

१. वरीयसः परः परोवरीयान् इति व्याख्यानं न समीचीनम् । तथा सति परवरीयानित्येव प्रयोगापातात् । एतेन परश्च वरीयांश्च परोवरीयान् इत्यपि अपास्तम् । परत्वस्य पृथग्विशेषणत्वे पुनरुक्त्यापाताच्चेति ।

२. यावत्त एनं प्रजायामुद्गीथं वेदिष्यन्ते इत्यत्र यावत्ते तव प्रजायामुद्गीथं वेदिष्यन्त इति व्याख्यानमसत् । प्रजाशब्दस्यैव अधिकारिप्रजामात्रपरत्वसम्भवे ते तवेति विशिष्योक्त्ययोगात् । अतो यावत्त इति तसिल्प्रत्ययान्तोऽयं शब्दः प्रमाणप्रमितयावत्कालपर्यन्तमित्यर्थमाह ।

त९ होवाच नेतोऽन्ये विद्यन्ते यच्च ये म इम उपनिहिता इत्ये-तेषां मे देहीति होवाच तानस्मै प्रददौ हन्तानुपानमित्युच्छिष्टं वै मे पीत९ स्यादिति होवाच न स्विदेतेऽप्युच्छिष्टा इति ॥ २ ॥

न वा अजीविष्यमिमान् अखादन्निति होवाच कामो म उदपानमिति स ह खादित्वातिशेषान् जायाय आजहार साग्र एव सुभिक्षा बभूव तान् प्रतिगृह्य निदधौ स ह प्रातः सञ्जिहान उवाच यद्बतान्नस्य लभेमहि लभेमहि धनमात्रां राजासौ यक्ष्यते स मा सर्वैरार्त्विज्यैर्वृणीतेति ॥ ३ ॥

तं जायोवाच हन्त पत इम एव कुल्माषा इति तान् खादित्वामुं यज्ञं विततमेयाय तत्रोद्गातॄनास्तावे स्तोष्यमाणानुपोप विवेश स ह प्रस्तोतारमुवाच प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यतीत्येवमेवोद्गातारमुवाचोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीत्येवमेव प्रतिहर्तारमुवाच प्रतिहर्तर्या प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति ते ह समारतास्तूष्णीमासाञ्चक्रिरे ॥ ४ ॥ १० ॥

भा.– उपला इष्टकाः स्थूला मटचीति प्रकीर्तिताः । इति शब्दनिर्णये ।

आसन्नयौवना योषिदाटकीत्यभिधीयते । इति च ।

प्रद्रवन्नन्नपानार्थं प्रद्राणक इतीरितः । इति च ॥ १० ॥

भाष्यविवृतिः– सामैकदेशप्रस्तावप्रतिहारोद्गीथनिष्ठां भवगदुपास्तिं वक्तुं काञ्चनाख्यायिकामाह– **मटचीत्यादिना**[१] ॥ उषस्तिर्नामतः । चक्रमयनं

१. कुरुदेशे वसन् कुरुषु मटचीहतेषु वर्षोपलैर्नाशितेषु सत्सु अत एवातिवृष्ट्या दुर्भिक्षे पतिते आटक्या आसन्नयौवनया जायया सह धनिकग्रामे प्रद्राणकोऽन्नपानार्थं प्राद्रवन्नुवासेत्यथः ।

अत्ता क इत्यत उक्तम् । **अत्ता रुद्र इति** ॥ तथापि दक्षस्य तदद्यत्वं कथमित्यत उक्तं– **तद्विरोधादिति** । असौ लोक इत्येतत् द्व्यात्मकश्च शिवः प्रोक्त इति व्याख्यातम् । तत्र स्वर्गासौलोकशब्दाः प्रयुक्ताः । अयं लोक इत्येतद्ब्रह्मैवहि पृथिव्यात्मेति च व्याख्यातम् । तत्रायं लोक इति शब्दौ प्रयुक्तौ । तांस्तथा निर्वचनेन घटयते ॥ **स्वो विष्णुरित्यादिना** । एतेषां ब्रह्मादिदेवानां प्रमाणेनापृशब्दानिरुक्तेः स्वयं तन्निर्वक्ति ॥ **आपालनादिति** । परोवरीयानित्यत्र वरीयान् शब्दः परमो हरिरिति व्याख्यातः । परो इत्युर्वरितमर्थाप्रतीतेर्व्याचष्टे ॥ **अधिकमिति**[१] ॥ उक्त्वा फलमुवाच । फलमेवाह । **यावत्त इति** । ये प्रजायां योग्याः । जीवसमूहे एनमुद्गीथं वेदिष्यन्ते तेषामेभ्यः परोवरीयोऽस्मिंल्लोके जीवनं भविष्यतीत्युक्तम् । तत्किं जीवनं निर्मर्यादम् ? न । यावत्तः प्रमाणेन यावत्कालपर्यन्तमुक्तं तावदित्युक्तम्[२] ॥ कोऽसौ प्रमाणनियतः काल इत्यतस्तमाह । **यावत्त इति** । त्रेतायामुद्गीथं वेदयितुर्यावत्तः यावद्द्वापरादि तावत्पर्यन्तं परोवरीयो जीवनं भवतीत्यर्थः । **इति नवमः खण्डः** ॥

## अथ दशमः खण्डः

## उषस्तेर्वृत्तान्तः

**उप.– मटचीहतेषु कुरुष्वाटक्या सह जाययोपस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास स हेभ्यं कुल्माषान् खादन्तं बिभिक्षे ॥ १ ॥**

१. वरीयसः परः परोवरीयान् इति व्याख्यानं न समीचीनम् । तथा सति परवरीयानित्येव प्रयोगापातात् । एतेन परश्च वरीयांश्च परोवरीयान् इत्यपि अपास्तम् । परत्वस्य पृथग्विशेषणत्वे पुनरुक्त्यापाताच्चेति ।

२. यावत्त एनं प्रजायामुद्गीथं वेदिष्यन्ते इत्यत्र यावत्ते तव प्रजायामुद्गीथं वेदिष्यन्त इति व्याख्यानमसत् । प्रजाशब्दस्यैव अधिकारिप्रजामात्रपरत्वसम्भवे ते तवेति विशिष्योक्त्ययोगात् । अतो यावत्त इति तसिल्प्रत्ययान्तोऽयं शब्दः प्रमाणप्रमितयावत्कालपर्यन्तमित्यर्थमाह ।

तꣳ होवाच नेतोऽन्ये विद्यन्ते यच्च ये म इम उपनिहिता इत्ये-तेषां मे देहीति होवाच तानस्मै प्रददौ हन्तानुपानमित्युच्छिष्टं वै मे पीतꣳ स्यादिति होवाच न स्विदेतेऽप्युच्छिष्टा इति ॥ २ ॥

न वा अजीविष्यमिमान् अखादन्निति होवाच कामो म उदपानमिति स ह खादित्वातिशेषान् जायाय आजहार साग्र एव सुभिक्षा बभूव तान् प्रतिगृह्य निदधौ स ह प्रातः सञ्जिहान उवाच यद्बतान्नस्य लभेमहि लभेमहि धनमात्रां राजासौ यक्ष्यते स मा सर्वैरार्त्विज्यैर्वृणीतेति ॥ ३ ॥

तं जायोवाच हन्त पत इम एव कुल्माषा इति तान् खादित्वामुं यज्ञं विततमेयाय तत्रोद्गातॄनास्तावे स्तोष्यमाणानुपोप विवेश स ह प्रस्तो-तारमुवाच प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यतीत्येवमेवोद्गातारमुवाचोद्गातर्या देवतो-द्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीत्येवमेव प्रतिहर्तारमुवाच प्रतिहर्तर्या प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रति-हरिष्यसि मूर्धा ते विपतिष्यतीति ते ह समारतास्तूष्णीमासाञ्चक्रिरे ॥ ४ ॥ १० ॥

भा.– उपला इष्टकाः स्थूला मटचीति प्रकीर्तिताः । इति शब्द-निर्णये ।

आसन्नयौवना योषिदाटकीत्यभिधीयते । इति च ।

प्रद्रवन्नन्नपानार्थं प्रद्राणक इतीरितः । इति च ॥ १० ॥

भाष्यविवृतिः– सामैकदेशप्रस्तावप्रतिहारोद्गीथनिष्ठां भवगदुपास्तिं वक्तुं काञ्चनाख्यायिकामाह– मटचीत्यादिना[१] ॥ उषस्तिर्नामतः । चक्रमयनं

१. कुरुदेशे वसन् कुरुषु मटचीहतेषु वर्षोपलैर्नाशितेषु सत्सु अत एवातिवृष्ट्या दुर्भिक्षे पतिते आटक्या आसन्नयौवनया जायया सह धनिकग्रामे प्रद्राणकोऽन्नपानार्थं प्राद्रवन्नुवासेत्यथः ।

यस्यासौ चाक्रायणः । रथचक्रसमीपे प्रायस्तिष्ठति । इभ्यग्रामे धनिकग्राम इति श्रुतोऽर्थः । इभाधिपतिग्राम इति केचित् । कुल्माषानरण्यमाषान् । बिभिक्षे याचितवान् ॥ १ ॥

ये इमे म उपनिहिताः कुल्माषा इतोऽन्ये न विद्यन्ते यद्यस्मात्तस्मात् कुल्माषा न सन्ति दातुमिति । तं होवाचेति सम्बन्धः । एषां मध्ये कांश्चन मे देहि । **अनुपानं**[१] करपत्रिका करस्थितोदपानं च कुर्वित्युवाच ॥ २ ॥

अन्नालाभात् आपदि उच्छिष्टत्वविचारो न कार्य इत्याह । **न वा अजीविष्यमिति**[२] । उदपानन्तु मे कामम् मत्कामानुसारि[३] ॥ सर्वत्रोदकसौलभ्यात् । सुभिक्षायाचनेन क्षुन्निवृत्तिमती । संजिहानः उत्तिष्ठन् । अन्नस्य मात्रां लभेमहि[४] । धनमात्रां धनभारम् । आर्त्विज्यै ऋत्विक्कर्मभिः[५] ॥ ३ ॥

**विततं** विस्तृतम् । **आस्तावे** आस्तावाख्यकर्मणि । स्तोष्यमाणांस्तोतृन् अन्वायत्ता सम्बद्धा[६] । **समारताः** स्वव्यापारान्निवृत्ताः[७] ॥ ४ ॥

१. करभस्त्रि खपाठः ।

२. तत्र मुनिरूवाच । इमान् कुल्माषानखादन् अभक्षयन्नैवाजीविष्यम् न जीविष्यामि । अत प्राणात्यये दोषाभावात् ते भक्षिताः ।

३. उदपानं जलपानं तु मे कामः ममेच्छाधीनमिदानीं वर्तते । वृथोच्छिष्टस्वीकारे दोषप्राप्तेर्न तत् पिबामीति । उक्तं च सूत्रकृता - ओं सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् (ब्र.सू.३-४-८) इति ।

४. अन्नं लभेमहि इति वा ।

५. अतस्तत्र गमनाय पाथेयं किमप्यस्तीत्युवाचेति सम्बन्धः ।

६. प्रस्तावप्रतिपाद्येत्यर्थः ।

७. तूष्णीमासांचक्रिरे इति भावः ।

अप्रतीतेर्मटचीशब्दार्थमाह– **उपला इति** ॥ उपला वर्षोपलाः । नामत्व-प्रतीतिं निवारयन्नाटकाशब्दार्थमाह– **आसन्नेति** । अप्रतीतेः प्रद्राणक-शब्दार्थमाह– **प्रद्रवन्निति** ॥ **इति दशमः खण्डः** ॥

## अथ एकादश खण्डः

**उप.– अथ हैनं यजमान उवाच भगवन्तं वा अहं विविदिषाणीत्युष-स्तिरस्मि चाक्रायण इति होवाच स होवाच भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्यैशिषं भगवतो वा अहमवित्त्याऽन्यानवृषि भगवां-स्त्वेव मे सर्वैरार्त्विज्यैरिति ॥ १ ॥**

**तथेत्यथ तर्ह्येत एव मदतिसृष्टास्तुवन्तां यावत्तेभ्यो धनं दद्यास्तावन्मम दद्या इति तथेति ह यजमान उवाच ॥ २ ॥**

**अथ हैनं प्रस्तोतोपससाद प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेति ॥ ३ ॥**

**प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभि-संविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता तां चेद-विद्वान् प्रस्तोष्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मयेति ॥ ४ ॥**

**अथ हैनमुद्गातोपससादोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वान् उद्गास्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेत्यादित्य इति होवाच सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति सैषा देवतोद्गीथमन्वायत्ता तां चेदविद्वानुदगास्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मयेत्यथ हैनं प्रतिहर्तोपससाद प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेत्यन्नमिति होवाच ॥ ५ ॥**

**सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मयेति तथोक्तस्य मयेति ॥ ६ ॥ ११ ॥**

**भा.– प्राणस्थविष्णुना सर्वे प्रसूयन्ते यतस्ततः ।**
**प्रस्तावदेवता स स्यात् प्रस्तावस्तु जनिर्यतः ॥**

**आदित्यसंस्थितो विष्णुर्यत्सदा सर्वगीतभुक् ।**
**राजादौ गीतमप्यङ्गैर्भुङ्क्ते गानस्य देवता ॥**

**उद्गीथदेवता तस्मात् स एव पुरुषोत्तमः ।**
**अन्नस्थेनैव जीवन्ति भूतान्येतानि विष्णुना ॥**
**प्रतिहारदेवताऽतः स प्रतिहारो हि भोजनम् ॥ इति च ।**

**उच्चैः सन्तमुत्तमं सन्तम् ॥ ११ ॥**

**भाष्यविवृतिः**– यदर्थमेषाऽऽख्यायिकोक्ता तामिदानीमुपास्तिमाह– **अथ हैनमित्यादिना** ॥ विविदिषाणि वेत्तुमिच्छामि। भगवन्नामधेयं किमित्यर्थः । आर्त्विज्यै वृणीतुं पर्यैशिषं विचारितवानस्मि । भगवतो गतेरवित्याऽज्ञानेन । भगवांस्त्वेव मे सर्वैरार्त्विज्यैः वृतः ॥ १ ॥

तथेति तथाऽस्त्वित्युवाच । **मदति**[१]**सृष्टाः** मदनुज्ञाताः । स्तुवंतां स्तुवन्तु ॥ २ ॥

प्राणस्य प्रस्तावदेवतात्वं प्रस्तावशब्दार्थव्युत्पादनेन समर्थयते । सर्वाणीत्यादिना । प्राणमभ्युज्जिहते प्राणं त्यजन्ति । प्राणान्निस्सरन्तीत्यर्थः[२] । मया तथोक्तस्य ते ॥ ४ ॥

१. 'समति' इति पाठभेदः ।

२. अनेन प्रसूयन्तेऽनेनेति प्रस्ताव इति प्रसवकर्तृत्वं प्रस्तावशब्दार्थः इति भावः ।

तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते व्यपतिष्यतीत्युक्तस्यादित्यस्यो-द्गीथदेवतात्वं उद्गीथशब्दार्थोक्त्या समर्थयते– **सर्वाणीत्यादिना**[१] ॥ ५ ॥

अन्नस्य प्रतिहारदेवतात्वं प्रतिहारशब्दार्थव्युत्पादनेन समर्थयते– **सर्वाणि हेत्यादिना** । पुनस्तथोक्तस्य मयेत्युक्तिः पूर्वसमाप्त्यर्था ॥ ६ ॥

ननु सर्वभूतजन्मादिहेतुत्वादि ब्रह्मणो लक्षणमतः कथं प्राणादौ प्रस्तावदेवतात्वसमर्थनार्थं ऋषिणा भूतजन्मादिहेतुत्वादि प्रयुक्तमित्यतो ऋषिणाऽपि प्राणादिस्थं ब्रह्मैव प्रस्तावादिदेवतात्वेनोक्तमिति तद्व्याचष्टे– **प्राणस्थेत्यादिना** ॥ **सर्वगीतभुक्** सर्वगीतानुभविता । राजादौ स्थित्वा गीतभुगिति गीथशब्दार्थ उक्तः । साम्प्रतमुर्वरितमुच्छब्दार्थमाह– **उच्चैरिति**[२] । प्रस्तावयति जनयतीति प्रस्तावः । उच्चासौ गीथश्चेत्युद्गीथः । प्रतिहार्यते भुज्यते उपजीव्यते भूतैरिति भगवान् प्रतिहार इत्यर्थः । **इति एकादशः खण्डः ।**

## अथ द्वादश खण्डः

## शौवोद्गीथोपासना

**उप.– अथातः शौव उद्गीथस्तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः स्वाध्यायमुद्वव्राज तस्मै श्वा श्वेतः प्रादुर्बभूव तमन्ये श्वान उपसमेत्योचुरन्नं नो भगवानागायत्वशनायाम वा इति ॥ १ ॥**

**तान् होवाचेहैव सा प्रातरुपसमीयातेति तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः प्रतिपालयाञ्चकार ते ह यथैवेदं बहिष्पवमानेन स्तोष्यमाणाः**

---

१. अनेनादित्यस्य सर्वगीतभुक्त्वात् गानदेवतात्वमित्युक्तं भवति ।

२. उच्चैरित्यव्ययत्वात् उत्तममिति व्याख्यानम् । अर्थान्तरं तु प्रत्यक्षादिसिद्धमिति न वक्तव्यम् ।

स॰ंरब्धाः सर्पन्तीत्येवमाससृपुस्ते ह समुपविश्य हिञ्चक्रुरो३मदा३-मोंपिबा३मों देवो वरुणः प्रजापतिः सविता३न्नमिहा३हरदन्नपते३न्न-मिहा३हरा॒हरोमिति ॥ २ ॥ १२ ॥

भा.– दल्भपुत्रो बको मित्रया पुत्रार्थे स्वीकृतो ग्लाववत्[१] तूर्णीं स्थितत्वात् तया ग्लावेत्युक्तो ग्लावनामको जातः । अत उभयथाऽस्य निर्देशो भवतीत्यर्थः ।

प्रसादार्थं बकस्यापि वायुनोक्तः श्वरूपिणा ।
शौवोद्गीथ इति प्रोक्तो रुद्रादीनां श्वरूपिणाम् ॥

उपासितः पौर्णमास्यां शौवोद्गीथेन केशवः ।
सर्वाभीष्टं ददातीति प्रातरित्याह मारुतः ॥

ओमदामादिकं मन्त्रं वायुनोक्तं तु देवताः ।
वायुस्थविष्णुमुद्दिश्य हिङ्कृत्य प्रापुरीप्सितम् ॥

देवौ विष्णुश्च वायुश्च सर्वज्ञत्वात् क्रमेण तु ।
वरुणौ वरणीयत्वात् सवितारौ प्रसूतितः ॥
प्रजानां च पती तद्वत् क्रमादेव प्रकीर्तितौ ॥ इति च ॥१२॥

भाष्यविवृतिः– उद्गीथोपासकस्य पापाविद्धत्वं मुक्तावानन्दातिशयो बहुपुत्रवत्वोपलक्षितेष्टान्नपानादि च फलान्युक्तानि । तत्रोद्गीथमुपास्य स्वाभीष्टं प्राप्ताः सन्ति चेदुद्गीथोपास्तौ निःशङ्का प्रवृत्तिः स्यादिति शङ्का-मर्थवादरूपाख्यायिकया परिहरति[२] अथातः शौव इत्यादिकया । एवं

१. ''ग्राववत्'' हृपाठः । २. अथशब्दः प्रकरणान्तरद्योतकः ।

शङ्का प्राप्ता यतः अतः शुनोक्तः श्वभिरनुष्ठितः शौवः उद्गीथ उच्यते। स्वाध्यायमुद्दिश्योद्वव्राज। अशनायाम असाम[1] ॥ १ ॥

ते ह श्वानो निर्दिष्टं स्थलं संरब्धाः संरभवन्तस्त्वरिता आससृपुः। तत्र निदर्शनमाह। यथैवेदं निदर्शनम्। बहिष्पवमानेन स्तोत्रेण स्तोष्यमाणाः संरब्धाः सर्पन्तीति।

बको दाल्भ्य इत्येकः। ग्लावो वा मैत्रेय इत्यपर इति प्रतीतिनिरासायाह– **दल्भपुत्र इति**। दल्भपुत्रो दाल्भ्यः। बको नामतः। मित्रया पुत्रार्थं स्वीकृतोऽतो मैत्रेयः। आह्वानेऽपि ग्लाववत्तूष्णीं स्थितत्वात् तया ग्लावेत्युक्तो ग्लावनामको जात इत्यर्थः। कस्य बलादेवं व्याख्यानं सिद्धमित्यतो वाशब्दबलादित्याह। **अत इति**। अत एवं व्याख्यानात् खलूभयथाऽस्य निर्देशो निर्देशद्योतको वाशब्दो भवत इत्युपद्यत इत्यर्थः। प्रतिपालयाञ्चकारेत्येकवचनाच्च। के ते श्वानः? उद्गीथस्य शौवत्वं च कथमित्यतस्तदाह ॥ **प्रसादार्थमिति**। श्वरूपिणां रुद्रादीनां बकस्यापि प्रसादार्थं श्वरूपिणा वायुनोक्तः। शौव उद्गीथ इति[2] प्रोक्त इति योजना[3]। अन्नयाचनावसरे उद्गीथमनुक्त्वा इहैव मा प्रातरुपसमीयातेति किमभिप्रेत्योक्तमित्यतस्तमभिप्रायमाह– **उपासित इति**। ओमदामेत्यादिवाक्यस्यान्वयाप्रतीतेस्तं दर्शयति– **ओमदादिकमिति**[4] ॥ *देवता हिंकृत्य*

---

१. अशनायमाजगाम इति खपाठः। कपाठस्तु असामेति। परम् अशनायामेत्यस्य अशितुमिच्छामेत्यर्थः(?)।

२. यद्यपि स्वसम्बन्धित्वमेव शौवशब्दार्थः। तथापि श्वरूपवायुनोक्तत्वमेव शौवशब्दप्रवृत्तिनिमित्तम्, न तु श्वभिर्दृष्टत्वम्। श्वरूपदेवानां वायूक्तमन्त्रश्रोत्रत्वेन तद्दृष्टत्वाभावादिति भावः।

३. श्वरूपिणा वायुनोक्तः उद्गीथः शौवोद्गीथः इति प्रोक्त इति योजनेत्यर्थः।

४. परिपूर्ण वायो तत्स्थभगवंश्च। वयमन्नमदाम ओं पिबाम। ओं अतो गुणपरिपूर्णत्वादो-

सꣳरब्धाः सर्पन्तीत्येवमाससृपुस्ते ह समुपविश्य हिङ्चक्रुरो३मदा३-मोंपिबा३मों देवो वरुणः प्रजापतिः सविता३न्नमिहा३हरदन्नपते३न्न-मिहा३हरा२हरोमिति ॥ २ ॥ १२ ॥

भा.– दल्भपुत्रो बको मित्रया पुत्रार्थे स्वीकृतो ग्लाववत्[१] तूष्णीं स्थितत्वात् तया ग्लावेत्युक्तो ग्लावनामको जातः । अत उभयथाऽस्य निर्देशो भवतीत्यर्थः ।

प्रसादार्थं बकस्यापि वायुनोक्तः श्वरूपिणा ।
शौवोद्गीथ इति प्रोक्तो रुद्रादीनां श्वरूपिणाम् ॥

उपासितः पौर्णमास्यां शौवोद्गीथेन केशवः ।
सर्वाभीष्टं ददातीति प्रातरित्याह मारुतः ॥

ओमदामादिकं मन्त्रं वायुनोक्तं तु देवताः ।
वायुस्थविष्णुमुद्दिश्य हिङ्कृत्य प्रापुरीप्सितम् ॥

देवौ विष्णुश्च वायुश्च सर्वज्ञत्वात् क्रमेण तु ।
वरुणौ वरणीयत्वात् सवितारौ प्रसूतितः ॥
प्रजानां च पती तद्वत् क्रमादेव प्रकीर्तितौ ॥ इति च ॥१२॥

भाष्यविवृतिः– उद्गीथोपासकस्य पापाविद्धत्वं मुक्तावानन्दातिशयो बहुपुत्रवत्त्वोपलक्षितेष्टान्नपानादि च फलान्युक्तानि । तत्रोद्गीथमुपास्य स्वाभीष्टं प्राप्ताः सन्ति चेदुद्गीथोपास्तौ निःशङ्का प्रवृत्तिः स्यादिति शङ्का-मर्थवादरूपाख्यायिकया परिहरति[२] अथातः शौव इत्यादिकया । एवं

१. "ग्राववत्" ह्पाठः । २. अथशब्दः प्रकरणान्तरद्योतकः ।

शङ्का प्राप्ता यतः अतः शुनोक्तः श्वभिरनुष्ठितः शौवः उद्गीथ उच्यते। स्वाध्यायमुद्दिश्योद्व्राज। अशनायाम असाम[१] ॥ १ ॥

ते ह श्वानो निर्दिष्टं स्थलं संरब्धाः संरभवन्तस्त्वरिता आससृपुः। तत्र निदर्शनमाह। यथैवेदं निदर्शनम्। बहिष्पवमानेन स्तोत्रेण स्तोष्यमाणाः संरब्धाः सर्पन्तीति।

बको दाल्भ्य इत्येकः। ग्लावो वा मैत्रेय इत्यपर इति प्रतीतिनिरासायाह– **दल्भपुत्र इति**। दल्भपुत्रो दाल्भ्यः। बको नामतः। मित्रया पुत्रार्थं स्वीकृतोऽतो मैत्रेयः। आह्वानेऽपि ग्लाववत्तूष्णीं स्थितत्वात् तया ग्लावेत्युक्तो ग्लावनामको जात इत्यर्थः। कस्य बलादेवं व्याख्यानं सिद्धमित्यतो वाशब्दबलादित्याह। **अत इति**। अत एवं व्याख्यानात् खलूभयथाऽस्य निर्देशो निर्देशद्योतको वाशब्दो भवत इत्युपद्यत इत्यर्थः। प्रतिपालयाञ्चकारेत्येकवचनाच्च। के ते श्वानः? उद्गीथस्य शौवत्वं च कथमित्यतस्तदाह ॥ **प्रसादार्थमिति**। श्वरूपिणां रुद्रादीनां बकस्यापि प्रसादार्थं श्वरूपिणा वायुनोक्तः। शौव उद्गीथ इति[२] प्रोक्त इति योजना[३]। अन्नयाचनावसरे उद्गीथमनुत्का इहैव मा प्रातरुपसमीयातेति किमभिप्रेत्योक्तमित्यतस्तमभिप्रायमाह– **उपासित इति**। ओमदामेत्यादिवाक्यस्यान्वयाप्रतीतेस्तं दर्शयति– **ओमदादिकमिति**[४] ॥ *देवता हिंकृत्य*

---

१. अशनायमाजगाम इति खपाठः। कपाठस्तु असामेति। परम् अशनायामेत्यस्य अशितुमिच्छामेत्यर्थः(?)।

२. यद्यपि स्वसम्बन्धित्वमेव शौवशब्दार्थः। तथापि श्वरूपवायुनोक्तत्वमेव शौवशब्दप्रवृत्तिनिमित्तम्, न तु श्वभिर्दृष्टत्वम्। श्वरूपदेवानां वायूक्तमन्त्रश्रोत्रत्वेन तद्दृष्टत्वाभावादिति भावः।

३. श्वरूपिणा वायुनोक्तः उद्गीथः शौवोद्गीथः इति प्रोक्त इति योजनेत्यर्थः।

४. परिपूर्ण वायो तत्स्थभगवंश्च। वयमन्नमदाम ओं पिबाम। ओं अतो गुणपरिपूर्णत्वादो-

ओमदामादिकं वायुनोक्तमन्त्रं वायुस्थं विष्णुमुद्दिश्य । जस्वेप्सितं प्रापुरिति योजना । प्रसिद्धवरुणादिप्रतीतिं निवारयन् योगवृत्या देवादिशब्दाभिधेयानाह– देवाविति । स्वतन्त्रास्वतन्त्रक्रमेण सर्वज्ञत्वात्[1] ।। १२ ।। इति द्वादशः खण्डः ।

## अथ त्रयोदशः खण्डः

## स्तोभाक्षरेषु देवतोपासना

**उप.– अयं वाव लोको हावुकारो वायुर्हायिकारश्चन्द्रमा अथकार आत्मेहकारोऽग्निरीकार आदित्य ऊकारो निहव एकारो विश्वेदेवा औहोयिकारः प्रजापतिर्हिङ्कारः प्राणः स्वरोऽन्नं याया वाग्विराडनिरुक्तस्त्रयोदशः स्तोभः सञ्चरो हुङ्कारो दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतामेवꣳ साम्नामुपनिषदं वेदोपनिषदं वेद इति ।। १ ।। १३ ।।**

।। इति श्रीमच्छान्दोग्योपनिषदि प्रथमोऽध्यायः ।।

**भा.–** हूयतेऽत्राग्निहोत्रादिर्हावुकारस्त्वियं ततः ।
हेत्याश्चर्यवदायाति हेति वा सुखकृत्त्वतः ।।

हायिकारस्ततो वायुरथेत्युक्तमनन्तरम् ।
आनन्तर्यात् प्रकाशस्य सूर्याचन्द्रस्तथेरितः ।।

---

नामकः । सर्वज्ञत्वात् देवः, वरणीयत्वात् वरुणः, प्रजानां पालनात् प्रजापतिः, प्रसवितृत्वात् सविता, वायुस्तद्गतो विष्णुश्चेहान्नमाहरत् आहरतु । एवं परोक्षतः प्रार्थयित्वाऽपरोक्षतोऽपि प्रार्थयते ।। **अन्नपते इति** ।। हे अन्नपते वायो तद्गतविष्णो इह अस्मदर्थमन्नमाहर । द्विरुक्तिः विद्यार्थावधारणार्थे । इतिशब्दो विद्यासमाप्त्यर्थं इत्युक्तम् ।

१. स्वपरगतसर्वज्ञत्वात् विष्णोः । अन्यत्रालोचने एव सर्वज्ञत्वात् वायोरित्यर्थः ।।

सर्वसामीप्यतो विष्णुरिहेति कथितः सदा ।
इन्धनादग्निरीकार ऊकारस्सूर्य उष्टितः ॥

नितरामाह्वयन्त्येनमितीन्द्रो निहवः स्मृतः ।
एतीत्येकार एवासौ औहोयीत्यखिलाः सुराः ॥

उच्चत्वाद्विष्णुरुः प्रोक्तो हूयन्तेऽस्मिन् यतोऽखिलाः ।
मुक्तावौहोयिनस्तस्मात् सर्वदेवाः[1] प्रकीर्तिताः ॥

हीति निश्चय उद्दिष्टो निश्चयज्ञानतस्सदा ।
ब्रह्मा हिङ्कार इत्युक्तो वायुः प्राणः शरीरगः ॥

स्वे विष्णौ रमयत्येनं जीवं तस्मात् स्वरः स्मृतः ।
ययिर्नित्यगतेर्वायुस्तद्भायाया सरस्वती ॥

सैवान्नदेवता प्रोक्ता यात्रा प्राणेन नीयते ।
सर्ववागात्मिका या तु श्रीर्विशेषेण राजनात् ॥

विराडुक्ता निरुक्तस्तु व्याप्तो नारायणस्तु यः ।
आहूत एव पातीति हुप्कार इति कीर्तितः ॥

हुबित्याक्रियते यस्माद् हुप्कारस्तु जनार्दनः ।[2]
अनिरुक्तस्त्ववाच्यत्वात् परमः पुरुषो हरिः ॥ इति माहात्म्ये ।

सम्यक् चरतीति स एव सञ्चरः ॥ १३ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमच्छन्दोग्योपनिषद्भाष्ये प्रथमोऽध्यायः ॥

---

१. सर्वे देवाः इति प्रपाठान्तरम् । २. 'दुप् कारस्तज्जनार्दनः' हृपाठः ।

**भाष्यविवृतिः–** सामेकदेशोपास्तेः प्रकृतत्वात्तदेकदेशहावित्यादित्रयोदशस्तोभनिष्टामुपास्तिमाह– **अयमित्यादिना** ॥ हावु इत्याक्रियते आहूयत इति हावुकार इत्यादि द्रष्टव्यम्। हूयत इति त्रयोदशस्तोभो निरुक्तः । स एव सञ्चार इति सम्बन्धः ।

पृथिव्यादयः कैर्निमित्तैर्हाव्वित्यादिस्तोभैरुक्ता इत्यतस्तद्व्याख्याय दर्शयति– **हूयत इत्यादिना । अत्र** अस्यां पृथिव्याम् । अत्र हावु इत्यादिस्तोभ एव व्याक्रियते । कारशब्दस्तूक्तार्थ आनुषङ्गिक उक्तः[१] । **हायीति स्तोभं द्वेधा व्याचष्टे– हेतीति ॥** हेति तावदाश्चर्यम् । आश्चर्यवदायातीति हायि । हेति सुखं,[२] । सुखकृत्त्वा[३]तोवा हायीति वायुः, ततस्तदुभयभावाद्धायिकार इत्यर्थः । **अथेरितः** अथेतीरितः[४] । **उष्टितः** आतपदाहात्[५] । अखिलसुराणामौहोयित्वं व्युत्पाद्य दर्शयति । **उच्चत्वादिति ।** अस्मिन् औ[६] ।

प्राणः स्वर इति सम्बन्धः । प्राणस्य स्वरत्वं निर्वक्तिस्व **इति।** हायीति वायोरुक्तत्वात् पुनः प्राणः स्वर इति कया विवक्षयोक्तमित्यत उक्तम् । **शरीरगो वायुरिति ।** यायाशब्दं निर्वक्ति । **यात्रा नेत्रेति**[७] ।

---

१. हाव्वित्याक्रिमाणत्वात् हावुकार इत्यर्थो ज्ञेयः ।

२. तदापयति सुखकृदिति यावत् ।

३. सुखकृत्वतो

४. अथकार इतीरित इत्यर्थः ।

५. उष प्लुष दाह इति धातुः ।

६. यतोऽस्मिन्नुशब्दवाच्ये विष्णौ अखिलाः सुराः मुक्तौ हूयन्ते तस्मात् सर्वे देवाः औहोयिनः प्रकीर्तिताः इत्यन्वयः । अनेन उशब्दस्य सप्तमी औ इति । औ हूयन्ते इत्यौहोयिनः इति निरुक्तिर्दर्शितेति ज्ञातव्यम् ।

७. यात्रा नेत्रा प्राणेन नीयते इति याया ।

आत्मेहकार इत्युक्तम् । पुनः कया विवक्षया नारायण उक्त इत्यत उक्तं व्याप्त इति । आहूत एव पाति चेत्तर्हि हुप् इति नामधेयं स्यात् ॥ न तु हुप्कार इत्यत आह– **हुबिति** ॥ नाराणां दोषरहितानां मुक्तानां वेदानामाश्रयत्वान्नारायण इत्यादि निर्वचनगोचरत्वात् कथं नारायणोऽनिरुक्त इत्यत आह– **अनिरुक्त इति** ॥ यावत् स्वयं तावत्साकल्येनावाच्यत्वान्निर्वक्तुमशक्यत्वात् । भगवदन्यत्वप्रतीतिं निवारयन्निर्वचनपूर्वं सञ्चरशब्दार्थमाह– **सम्यगिति** ॥ इति त्रयोदशः खण्डः ।

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितछन्दोगोपनिषद्भाष्यटीकायां जयतीर्थपूज्यचरणशिष्यव्यासतीर्थकृतायां प्रथमोऽध्यायः ॥**

# अथ द्वितीयाऽध्यायः

## प्रथमः खण्डः

### साधुसामपदयोः समानार्थकत्वम्

उप.– ॐ समस्तस्य खलु साम्न उपासन१ँ साधु यत्खलु साधु तत्सामेत्याचक्षते यदसाधु तदसामेति ॥ १ ॥

तदुताप्याहुः साम्नैनमुपागादिति साधुनैनमुपागादित्येव तदाहुरसाम्नैनमुपागादित्यसाधुनैनमुपागादित्येव तदाहुः ॥ २ ॥

अथोताप्याहुः साम नो बतेति यत्साधु भवति साधु बतेत्येव तदाहुरसाम नो बतेति यदसाधु भवत्यसाधु बतेत्येव तदाहुः ॥ ३ ॥

स य एतदेवंविद्वान् साधु सामेत्युपास्तेऽभ्याशो ह यदेन१ँ साधवो धर्मा आ च गच्छेयुरुप च नमेयुः ॥ ४ ॥ १ ॥

भा.– समस्तस्य पूर्णस्य साधुत्वात् सामनाम्नो विष्णोरुपासनं साधु। सारत्वेन मेयं साम। सारत्वेन धार्यं साध्वित्येक एवार्थः।

साधुत्वात् सामनामानं समस्तगुणपूर्तितः।
समस्तं य उपासीत नारायणमनामयम् ॥

सर्वसाम्नां[१] देवतेति स मुक्तः साधुधर्मभाग् ॥ इति सामसंहितायाम्
॥ १ ॥

भाष्यविवृतिः– सामैकदेशोद्गीथस्तोभनिष्ठामुपास्तिमुक्त्वा पञ्चभक्तिकसप्तभक्तिकसमस्तसामनिष्ठामुपास्तिमाह– द्वितीयप्रपाठकेन ॥ साम्न उपासनं तत्प्रपठनादिमात्रं साध्वित्युच्यत इत्यन्यथाप्रतीतिं निवारयन् प्रथमवाक्यं

१. 'सर्व नाम्नां' प्रचलित पाठान्तरम्।

व्याकरोति। **समस्तस्येति**। विष्णोरित्यतः पूर्वं सामप्रतिपाद्यस्येति ग्राह्यम्। साधुत्वात् सामनामा भगवानित्युक्तम्। तत्साम्नोऽपि समानम्। तथा च कुतः साधुत्वं सामशब्दार्थ इत्यतो एवं वृद्धैर्व्याख्यातत्वादित्याह। **यत्खल्वित्यादिना**। **आचक्षते** व्याचक्षते। वृद्धैरपि कस्य बलादेवं स शब्दो व्यख्यात इत्यतो वृद्धान्तराणां साधौ सामशब्दप्रयोगदर्शनादित्याह॥ **तदुतेति**[१]॥

वृद्धान्तराणां प्रयोगान्तरं च दर्शयति— **अथोताप्याहुरित्यादिना**॥ अस्य योजना। यत्साधु भवति तत्साम नो[२]बतेत्याहुः। तत्साम बतैत्यस्यार्थमाह— **साधु बतेत्येव तदाहुरिति**[३]॥ उक्तमेव व्यतिरेकेणाह— **असाधु बतेति**॥ अस्य योजना तु पूर्ववाक्यवत्। सामशब्दस्य साधुत्वार्थं तथोपासकस्य फलोक्त्या च समर्थयते— **स य इत्यादिना**॥ उपच नमेयुरुप चञ्चलास्तिष्ठन्ति।

स्वयं च सामसाधुशब्दयोरेकार्थत्वं निरुच्य दर्शयति— **सरित्वेनेति**[४]। स्वव्याख्यानं दृढीकुर्वन् समस्तखण्डं तात्पर्यार्थोक्त्या प्रमाणेन व्याचष्टे— **साधुत्वादिति॥ इति प्रथमः खण्डः॥**

---

१. तदुत तत्रैव साधुसामब्दयोरेकार्थत्व एवान्येऽपि विद्वांस आहुः।

२. अस्माकं

३. साम नोऽस्माकं बत भवेदिति मन्त्रो यद्यस्मात् सामशब्दार्थः साधु भवति तत् तस्मात् साधु बतेत्येवाऽहेत्याहुः। ''असाम नोबत'' इति मन्त्रो यद्यस्मात् असाधु असामशब्दार्थो भवति तत् तस्मादसाधु बतेत्येवाऽहेत्याहुः। अत्रापि सामासामशब्दयोः साधुत्वासाधुत्वार्थकत्वेन व्याख्यानात् साधुसामशब्दयोः पर्यायत्वमिति भावः।

४. सेत्यस्य सारत्ववाचकत्वादित्यर्थः। अनेन यत् खलु साधु तत् सामेत्याचक्षते इति श्रुतौ यत् साधुसामशब्दयोः पर्यायत्वमुक्तं तद्विवृतं भवति।

## अथ द्वितीयः खण्डः

## लोकेषु भगवदुपासना

उप.– लोकेषु पञ्चविधꣳ सामोपासीत पृथिवी हिङ्कारोऽग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमित्यूर्ध्वेषु ॥ १ ॥

अथावृत्तेषु द्यौर्हिङ्कार आदित्यः प्रस्तावोऽन्तरिक्षमुद्गीथोऽग्निः प्रतिहारः पृथिवी निधनम् ॥ २ ॥

कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च य एतदेवं विद्वाꣳल्लोकेषु पञ्चविधꣳ सामोपास्ते ॥ ३ ॥ २ ॥

भा.– नारायणाख्य उद्गीथ उद्गेयः प्रणवेन यत् ।
उद्गच्छन्ति यतोऽस्माद्वा वासुदेवादिमूर्तयः ॥

प्रथमावताररूपत्वाद् वासुदेवः परः पुमान् ।
प्रस्तावो निधनं चापि सङ्कर्षण उदाहृतः ॥

सङ्कर्षणो हि संहर्ता प्रद्युम्नः परमेश्वरः ।
हिङ्कार इति सम्प्रोक्तो हीति सृष्टिरुदीर्यते ॥

प्रसिद्धता हि सृष्टिः स्यादनिरुद्धः परो विभुः ।
प्रतिहार इति प्रोक्तः स हि कार्येष्विदं जगत् ॥

प्रतिप्रति हरेन्नित्यं मूर्तिप्रतिहृतेस्तथा ।
ते पृथिव्यादिषु सदा तन्नामानः प्रतिष्ठिताः ॥

पृथिवीत्यादिशब्दार्थास्ते हि मुख्यत ईरिताः ।
तत्सम्वन्धात् तदर्थत्वं पृथिव्यादेरमुख्यतः ॥

**प्रथनादेव सस्यादेः पृथिवीत्वमुदाहृतम् ।**
**अग्नित्वमदनाच्चैव ह्यन्तरीक्षणयोगतः ॥**

**अभावाद्व्यवधानस्य त्वन्तरिक्षमितीर्यते ।**
**आदानादायुषश्चैव[1] स आदित्य उदीरितः ॥**
**द्यौः क्रीडाकारणत्वाच्च तत्सर्वं हि परे हरौ ॥ इति च ।**

**पञ्चात्मकं यो लोकेषु सदोपास्ते हरिं परम् ।**
**ऊर्ध्वाधःसंस्थितास्तस्य पञ्चैव दशमूर्तयः ॥**
**मोक्षादिकमभीष्टं यत्कल्पन्तेऽस्य सदैव हि ॥ इति च ॥२॥**

**भाष्यविवृतिः**– लोकेषु पञ्चभक्तिकसामप्रतिपाद्यभगवदुपास्तिमाह– **लोकेष्वित्यादिना । लोकेषु** पृथिव्यादिषु । पञ्चविधा यस्य तत्पञ्चविधम् । के ते लोकाः काश्च ता विधा इत्यतस्तद्विशदमाह । **पृथिवीत्यादिना ।** हिमिति नामको हिमिति सामभक्तिप्रतिपाद्यः पृथिवी पृथिवीनमकः पृथिव्यां तिष्ठतीत्यादि योजना सर्वत्र द्रष्टव्या ।

आवृत्तेषु प्रतिलोमेषु हिंकारादेः शब्दत्वेन पृथिवीत्वाद्यनुपपत्तेः प्रसिद्धपृथिव्यादिमात्रपरत्वप्रतीतिं निवारयंस्तच्छब्दप्रतिपाद्यदेवतास्तत्तच्छब्दप्रवृत्तिनिमित्तपूर्वमाह–[2] **नारायणाख्य इत्यादिना ॥** हीति कथं सृष्टिरुदि-

---

१. ''आदानादायुषां चैव'' इृपाठः ।

२. अत्र शाङ्करभाष्यं - लोकेष्विति या सप्तमी तां प्रथमात्वेन विपरिणमय्य पृथिवीदृष्ट्या पृथिवी हिङ्कार इत्युपासीतेति । तद्युक्तम् । लोकेषु पञ्चविधं सामोपसीत इति प्रक्रमविरोधात् । न चोत्तरवाक्यानुसारेण लोकेष्वित्यस्यापि प्रथमात्वेन विपरिणामः । पञ्चविधं साम इत्यस्य द्वितीयान्तत्वेन लोका इत्यनेन सामानाधिकरण्यायोगेनानन्वयप्रसङ्गात् । इति शब्दकल्पने चाश्रुतकल्पना प्रसङ्गात् । हिंकारादौ पृथिव्यादिदृष्टेर्मिथ्यादृष्टित्वेनानर्थहेतुत्वस्य वक्ष्यमाणत्वाच्च ।

तेत्यत आह– **प्रसिद्धता हिशब्दार्थ इति** । तथा च प्रागप्रसिद्धानां प्रसिद्धता हि सृष्टिर्नामेत्यर्थः । मूर्तिप्रतिहृतेः स्वमूर्तीनां स्वात्मन्यन्तर्भावकरणात् । हिंकारादिसामभक्तिप्रतिपाद्यस्तन्नामको भगवानस्तु, तस्य पृथिवीहिङ्कारादिनोक्तं पृथिव्याद्यात्मकत्वं कथमित्यतः पृथिव्यादिशब्दान् सप्तम्यर्थतया घटयन्नाह– **त इति** । पृथिव्यादयः पृथिव्यादिशब्दमुख्यार्था भगवन्मूर्तयस्तु पृथिव्यादिषु स्थितेस्तन्नामका इति प्रतीतिं निवारयन्नाह– **पृथिवीति** ॥ पृथिव्यादिशब्दानां कोऽर्था ये पृथिव्यादिष्वमुख्या भगवन्मूर्तिषु मुख्या इत्यतस्तान्निर्वचनेनाह– **प्रथनादित्यादिना** ॥ प्रथनाद्विस्तरणात् । अन्तरीक्षणं किं परोक्षतो नेत्याह– **अभावाद्व्यवधानस्येति** । तत्सर्वं हरौ मुख्यतोऽस्ति हीति शेषः । ऊर्ध्वाधः संस्थिताः पृथिव्यादिषु द्व्यादिषु च स्थिताः । **कल्पन्ते** कल्पयन्ति । अनेन कल्पन्ते हास्मै लोका इत्येतत् कल्पयन्तीति व्याख्यातं भवति ॥ ३ ॥ इति **द्वितीयः खण्डः** ॥

## अथ तृतीयः खण्डः

## वृष्टौ भगवदुपासना

**उप.– वृष्टौ पञ्चविधꣳ सामोपासीत । पुरो वातो हिङ्कारो मेघो** जायते **स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहारः ॥ १ ॥**

**उद्गृह्णाति तन्निधनं वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान् वृष्टौ पञ्चविधꣳ सामोपास्ते ॥ २ ॥ ३ ॥**

**भा.–** पञ्चरूपं तु यो विष्णुं पुरोवातादिषु स्थितम् ।
उपास्ते वृष्टिरस्मै स्याद्वर्षयत्यस्य मुक्तिगान् ॥
सर्वभोगांश्च भगवान् पञ्चरूपी जनार्दनः ॥ इति च ॥३॥

भाष्यविवृतिः– वृष्टौ हिमादिपञ्चभक्तिसामोपास्तिमाह– **वृष्टाविति** । तत्कथमिति जिज्ञासायां विवृणोति– **पुरोवात इत्यादिना** ॥ हिमिति सामभक्तिप्रतिपाद्यः हिंनामकः पुरोवाते तिष्ठतीत्यादि योजना द्रष्टव्या । हिमादिशब्दानां व्याख्यातत्वात् पुरोवातादिशब्दानां पुरो वाति गच्छतीत्यादिसुगमार्थत्वादभेदप्रतीतिं निवारयंस्तात्पर्यार्थोक्त्या तद्वाक्यजातं व्याचष्टे– **पञ्चरूपमिति** ॥ **इति तृतीयःखण्डः** ॥

## अथ चतुर्थः खण्डः

## अप्सु भगवदुपासना

**उप.– सर्वास्वप्सु पञ्चविधꣳ सामोपासीत । मेघो यत्संप्लवते स हिङ्कारो यद्वर्षति स प्रस्तावो याः प्राच्यः स्यन्दन्ते स उद्गीथो याः प्रतीच्यः स प्रतिहारः समुद्रो निधनम् ॥ १ ॥**

**न हाप्सु प्रैत्यप्सुमान् भवति य एतदेवंविद्वान् सर्वास्वप्सु पञ्चविधꣳ सामोपास्ते ॥ २ ॥ ४ ॥**

**भा.– अप्सु पञ्चविधोपासी यो नारायणवान् भवेत् ।**
**न चास्य मृतिरप्सु स्यादप्सुषड्भगवान् हरिः ॥ इति च ।**

**अप्सु स्थितनारायणवान् मुक्तो भवतीत्यर्थः ।**
अपः सूत इत्यप्सूर्भगवान् । दीर्घलोपेनाप्सुमानिति वा ॥ ४ ॥

भाष्यविवृतिः– सर्वाम्निष्ठपञ्चविधसामोपास्तिमाह– **सर्वास्वित्यादिना** ॥ **संप्लवते** सञ्चरति[१] । पूर्वरीत्या सुगमार्थत्वात् सर्वं तात्पर्योक्त्या व्याचष्टे–**अप्स्विति** । पञ्चविधोपासी पञ्चरूपकभगवदुपासी । अप्सुमा-

१. नानादेशस्थः एकदेशस्थो भवतीति यावत् ।

नित्येतन्नारायणवानिति व्याख्यातम् । तत्कथं शब्दलब्धमित्यत आह– **अप्सुषदिति** । यतो भगवान् हरिरप्सुषत् अप्सु स्थितस्ततोऽप्सुमान्नारायणवान् । तथाऽपि कथं शब्दतो लब्धमित्यतो मध्यमपदलोपिसमासोऽयमित्याह– **अप्सुस्थितेति** । तथाप्यम्मानिति स्यात् कथमप्सुमानिति चेत् न । अलुक्समासत्वात् ॥ नन्वन्तर्यामितया नारायणवान् सर्वोऽपि तत्कथं तदुपासकस्य तत्फलमित्यत उक्तम्– **मुक्तो भवतीत्यर्थ इति** ॥ पूर्वं मध्यमपदलोपिसमासत्वात् अप्सुमान्नारायणवानिति व्याख्यातम् । इदानीं निर्वचनेन शब्दत एव तदागतिं दर्शयति– **अप इति** ॥ तद्वानप्सुमानिति सम्बन्धः । तर्ह्यप्सूमानिति स्यादित्यत उक्तम्– **दीर्घलोपेनेति** ॥ आदौ छान्दसत्वादिति ग्राह्यम् ॥ **इति चतुर्थः खण्डः** ॥

## अथ पञ्चमः खण्डः

## ऋतुषु भगवदुपासना

**उप.– ऋतुषु पञ्चविधꣳ सामोपासीत । वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनम् ॥ १ ॥**

**कल्पन्ते हास्मा ऋतव ऋतुमान् भवति य एतदेवं विद्वानृतुषु पञ्चविधꣳ सामोपास्ते ॥ २ ॥ ५ ॥**

भा.–हेमन्तशिशिरयोरैक्येन पञ्चत्वम् ।

ऋतुनामानमृतुगमृतुत्वादृतुनामकः ।
इत्युपासीत यो विष्णुं पञ्चात्मानममुष्य हि ॥

मोक्षादीन् कल्पते चास्य ऋतुसंस्थो जनार्दनः ।
रक्ष्यत्वात् तेन तद्वांश्च सदैव स्यादुपासकः ॥ इति च ।

**वासस्य सुखकारित्वात् वसन्तः पुरुषोत्तमः ।**
**नीरादेर्गरणाद् ग्रीष्मो वर्षणाद्वर्ष उच्यते ।।**
**शं रातीति शरत्प्रोक्तो हेमन्तो हिमकारणात् ।। इति च ।।५।।**

**भाष्यविवृतिः**– ऋतुपशुप्राणनिष्ठां पञ्चविधसामोपास्तिमाह– **ऋतुष्वित्यादिना** ।। हिमिति सामभक्तिप्रतिपाद्यो हिंनामको वसन्तस्थितो वसन्तनामेत्यादियोजना द्रष्टव्या ।

सर्वेष्वृतुषूपास्तिः कर्तव्या तत्कथं शिशिरमनुक्त्वा पञ्चोक्तिरित्यत आह– **हेमन्तेति** । ऐक्येन ऐकत्वविक्षया । पूर्ववत्तात्पर्यार्थमाह– **ऋतुनामानमिति**[1] । ऋतुत्वात् सर्वशास्त्रावगतत्वात् । **अमुष्य** विष्णोः । **पञ्चात्मानं** पञ्चस्वरूपं च । **कल्पते** दातुं समर्थो भवति । ऐक्यप्रतीतिं निवारयन् भगवति वसन्तादिशब्दप्रवृत्तिं निर्वचनेन दर्शयति– **वासस्येत्यादिना**[2] ।। ५ ।। **इति पञ्चमः खण्डः ।।**

## अथ षष्ठः खण्डः

## पशुषु भगवदुपासना

**उप.– पशुषु पञ्चविधꣳ सामोपासीताजा हिङ्कारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनं भवन्ति हास्य पशवः पशुमान् भवति य एतदेवंविद्वान् पशुषु पञ्चविधꣳ सामोपास्ते ।। ६ ।।**

---

१. ऋतूनां ऋतुत्वप्रदत्वादिति वाऽर्थः ।

२. स्ववासस्य जीवसुखकारित्वादित्यर्थः । वसतेः पचाद्यच् वसतीति वसः तनोतेरौणादिको डप्रत्ययः । तनोतीति तः । ''वर्णागमो वर्णविपर्ययश्च'' इत्यादिना पूर्वपदस्य नकारागमः । शं रातीति शरत् राति ददाति रादाने डत् । हिमं तनोतीति हेमन्तः ।।

भा.– पालनात् सुखरूपत्वात्[१] पशुनामा जनार्दनः ।
मुक्तस्तद्वान् भवत्येव पशुपूपासको हरेः ॥ इति च ।

[२]यज्ञेनाश्वनहेतुत्वादजस्थो भगवानजः ।
अविस्थस्त्वविरेवोक्तो ऊर्णया शीततोऽवनात्[३] ॥

गौश्च सद्गतिहेतुत्वाद् गोस्थः स पुरुषोत्तमः ।
अश्वश्चैवाशुगन्तृत्वात् पुरुषः पूर्तिहेतुतः ॥ इति च ।

**भवन्ति हास्य पशव इति प्रसिद्धपशव एव । अजा इत्यादिबहुवचनं बहुरूपत्वाद्भगवतः ॥ ६ ॥**

**भाष्यविवृतिः–** प्रतिपुरुषं सर्वे पुरुषाः परविद्यात्वप्रकाशनायास्या भगवति पशुशब्दनिर्वचनपूर्वकं पशुमान् भवतीत्यस्य भवन्ति हास्य पशव इत्यस्मादर्थभेदं दर्शयति– **पालनादिति** ॥ अजादिशब्दानां भगवति प्रवृत्तिप्रकारं निर्वचनेन दर्शयति– **यज्ञेनेत्यादिना** ॥ गतिपूजार्थस्याश्चु-धातोश्चकारस्य स्ववर्गतृतीयत्वे अनुस्वारस्य च लोपेऽजयति प्रवर्तयति । यज्ञेन यजनेनेति[४] यज्ञेनाश्वनहेतुत्वादजस्थो भगवानज इत्यस्यार्थः । यजधातोर्यकारलोपेऽज इति भवति । तथा च यजत्यनेनेति यज्ञेनाश्वन-हेतुत्वादज इति वा । ननु भवन्ति हास्य पशव इत्यस्याप्युक्तपशुशब्दार्थत्वे पुनः पुनरुक्तिरेवेत्यतस्तदर्थमाह– **भवन्तीति** ।[५] नन्वजादिशब्दानां

१. 'सुखकारित्वात्' प्रपाठः ।

२. ''यज्ञोदजनिहेतुत्वात्'' हृपाठः ।

३. कम्बलादिना शीततोरक्षणादित्यर्थः ।

४. एतेन मुद्रितवेदेशीये लोपे च यति प्रवर्तते इति दृश्यते । परं तत् अजयति प्रवर्तयति इति भाव्यमिति भाति ।

५. एवं च भिन्नार्थकत्वान्न पुनरुक्तिरिति भावः ।

भगवद्वाचकत्त्वेऽजा इत्यादिबहुवचनं कथमित्यतस्तद्रूपबहुत्वेन घटयन्नाह– अजा इति ॥ ६ ॥ इति षष्ठः खण्डः ॥

## अथ सप्तमः खण्डः

## इन्द्रियेषु भगवदुपासना

**उप.– प्राणेषु पञ्चविधं परोवरीयः सामोपासीत प्राणो हिङ्कारः वाक्प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारो मनो निधनं परोवरीयांसि वै तानि परोवरीयो हास्य भवति परोवरीयसो ह लोकान् जयति य एतदेवं विद्वान् प्राणेषु पञ्चविधं परोवरीयः सामोपास्त इति तु पञ्चविधस्य ॥ ७ ॥**

भा.– परस्मादुत्तमं प्रोक्तं परो इति ततः परम् ।
परोवरं परं तस्मात् प्रोक्तं पारोवरीयकम्[1] ॥

परोवरीयांस्येतानि विष्णो रूपाणि सर्वशः ।
तेषां विशेषो नैवास्ति सदा तानि समानि हि ॥
अत्युत्तमोत्तमान्येतान्यन्यस्मात् सर्वतोऽपि तु ॥ इति च ।

प्राणो नेतृत्वतो विष्णुर्वाक्सर्ववचनात् सदा ।
चक्षुश्च दर्शनान्नित्यं श्रोत्रं श्रवणहेतुतः ॥
मनो मन्तृत्वतश्चास्य ह्येक एव तु पञ्चधा ॥ इति च ।

परोवरीयो ब्रह्मास्य भवति सर्वापेक्षितदातृत्वात् ॥ ७ ॥

भाष्यविवृतिः– प्राणः श्वासरूपः । एतानि प्राणादिषु स्थितानि भगवद्रूपाणि परोवरीयांसि वै । अधिकं वरीयान् परोवरीयानिति व्याख्या-

१. 'परोवरीयकम्' इ्पाठः ।

तत्वेऽपि तस्य सम्मुग्धत्वादिदानीं वर्णार्थकथनपूर्वकं स्पष्टं व्याचष्टे– **परस्मादिति**[१] ॥ **परोवरीयकं** परोवरीयः। वर्णार्थमुक्त्वा पदार्थमाह– **परोवरीयांसीति** । ननु बहूनां परोवरीयस्त्वं मुख्यं नोपपद्यतेऽत एकस्यैव तद्युक्तमिति न मन्तव्यमित्याह– **तेषामिति** । तच्छब्दतात्पर्यार्थमाह– **अत्युत्तमेति** ॥ प्राणादिशब्दानां भगवति प्रवृत्तिं निर्वचनेन दर्शयति– **प्राण इत्यादिना** ॥ **मन्तृत्वतः** ज्ञातृत्वात् । एक एव पञ्चविधा तिष्ठति । परीवरीयो हास्य भवतीत्येदप्रतीतेर्व्याचष्टे– **परोवरीय इति** ॥ सर्वेषां ब्रह्मसद्भावात्तदुपासकस्य को विशेष इत्यतो विशेषमाह– **सर्वेति**[२] ॥ ब्रह्मणस्तत्सर्वेष्टदातृत्वात् तस्य विशेष इत्यर्थः । इति पञ्चविधस्य साम्न उपास्तिरुक्तेति योज्यम् ॥ ७ ॥ **इति सप्तमः खण्डः ॥**

## अथ अष्टमः खण्डः

## वाक्येषु सप्तविधसामप्रतिपाद्यभगवदुपासना

**उप.– अथ सप्तविधस्य वाचि सप्तविधꣳ सामोपासीत यत्किञ्च वाचो हुमिति स हिङ्कारो यत्प्रेति स प्रस्तावो यदेति स आदिर्यदुदिति स उद्गीथो यत्प्रतीति स प्रतिहारो यदुपेति स उपद्रवो यन्नीति तन्निधनं दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतदेवं विद्वान् वाचि सप्तविधꣳ सामोपास्ते ॥ १ ॥ ८ ॥**

**भा.– आदिः कल्पादिहेतुत्वात् क्रोडात्मा केशवः स्वयम् ।**
**दुष्टोपद्रवकर्तृत्वान्नरसिंह उपद्रवः ॥ इति च ।**

---

१. परस्मादुत्तमं परो इति प्रोक्तम् । उकारस्योत्तमार्थत्वात् ततः परं परोवरमिति प्रोक्तम् । वरशब्दस्यापि तथात्वात् । तस्मात् परं परोवरीयकं इति प्रोक्तम् ।

२. स उपासकः परोवरीयसोऽधिकं वरीयसो लोकान् वैकुण्ठानन्तासनश्वेतद्वीपाख्यान् प्राप्नोति ।

**हुङ्कारसहिते वाक्ये प्रद्युम्नस्तु सदा स्थितः ।**
**आकारयुक्ते वाराहो वासुदेवः प्रसंयुते ॥**

**नारायणस्तथोद्युक्ते प्रतियुक्तेऽनिरुद्धकः ।**
**उपयुक्ते नृसिंहश्च [१]नीतिसङ्कर्षणस्तथा ॥**

**अभावे यावदेते स्युस्तावत् तद्दैवतं स्मृतम् ।**
**एवं सप्तविधं विष्णुं य उपास्ते परं विभुम् ॥**
**वाङ्नामा भगवांस्तस्य भवेत् सर्वार्थदोहकृत् ॥ इति च ॥८ ॥**

**भाष्यविवृतिः**– इदानीं सप्तविधस्य साम्न उपास्तिं वक्तुं प्रस्तावयति**अथ सप्तविधस्येत्यादिना** ॥ साम्नो भगवत उपास्तिरुच्यत इति योज्यम् । तत्र तावद्वाक्यनिष्ठोपास्तिमाह– **वाचीत्यादिना** ॥ यः हिंनामको हिमिति सामभक्तिप्रतिपाद्यः स यत्किञ्च वाचो हुमिति हुंनामके[२] वाक्ये हुंनाम-प्रतिपाद्य इत्यादि योजना द्रष्टव्या ।

हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनानाम् मूर्तिविशेषस्य निरूपितत्वात् यत् आ इति[३] यत् उप इति तदादिकसामभक्तिप्रतिपाद्ययोस्तन्नामकयोरनुक्त-त्वात्ते मूर्ती आह– **आदिरिति** ॥ हुमित्यादिमात्रमेव हिंनामादिरूप-प्रतिपादकमिति प्रतीतिं निवारयन्नाह– **हुङ्कारसहित इत्यादिना** ॥ हुङ्कारादिरहितं वाक्यं कस्य प्रतिपादकमिति जिज्ञासायामाह– **अभाव इति** ॥ योजना तु हुङ्कारादिष्वेकमुपक्रम्य मध्ये हुङ्कारादिष्वेकोत्त्यभावे यावदेते हुङ्कारादयः स्युस्तद्वाक्यं तद्दैवतमुपक्रान्त दैवतं स्मृतमिति । दुग्धेऽस्मै वाग्दोहमित्येतत्केवला वागेव कामदोग्ध्रीति प्रतीतिं निवारयन् व्याचष्टे– **वाङ्नामेति** ॥ ८ ॥ **इति अष्टमः खण्डः** ॥

---

१. नीतिः सङ्कर्पणः हृपाठः । २. हुमादिके ३. एतीत्यत्र आ; इति पदच्छेदः ।

तत्वेऽपि तस्य सम्मुग्धत्वादिदानीं वर्णार्थकथनपूर्वकं स्पष्टं व्याचष्टे– **परस्मादिति**[१] ॥ **परोवरीयकं** परोवरीयः। वर्णार्थमुक्त्वा पदार्थमाह– **परोवरीयांसीति** । ननु बहूनां परोवरीयस्त्वं मुख्यं नोपपद्यतेऽत एकस्यैव तद्युक्तमिति न मन्तव्यमित्याह– **तेषामिति** । तच्छब्दतात्पर्यार्थमाह– **अत्युत्तमेति** ॥ प्राणादिशब्दानां भगवति प्रवृत्तिं निर्वचनेन दर्शयति– **प्राण इत्यादिना** ॥ **मन्तृत्वतः** ज्ञातृत्वात् । एक एव पञ्चविधा तिष्ठति । परीवरीयो हास्य भवतीत्येदप्रतीतेर्व्याचष्टे– **परोवरीय इति** ॥ सर्वेषां ब्रह्मसद्भावात्तदुपासकस्य को विशेष इत्यतो विशेषमाह– **सर्वेति**[२] ॥ ब्रह्मणस्तत्सर्वेष्टदातृत्वात् तस्य विशेष इत्यर्थः । इति पञ्चविधस्य साम्न उपास्तिरुक्तेति योज्यम् ॥ ७ ॥ इति **सप्तमः खण्डः** ॥

## अथ अष्टमः खण्डः

## वाक्येषु सप्तविधसामप्रतिपाद्यभगवदुपासना

**उप.– अथ सप्तविधस्य वाचि सप्तविधꣳ सामोपासीत यत्किञ्च वाचो हुमिति स हिङ्कारो यत्प्रेति स प्रस्तावो यदेति स आदिर्यदुदिति स उद्गीथो यत्प्रतीति स प्रतिहारो यदुपेति स उपद्रवो यन्नीति तन्निधनं दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतदेवं विद्वान् वाचि सप्तविधꣳ सामोपास्ते ॥ १ ॥ ८ ॥**

**भा.– आदिः कल्पादिहेतुत्वात् क्रोडात्मा केशवः स्वयम् ।**
**दुष्टोपद्रवकर्तृत्वान्नरसिंह उपद्रवः ॥ इति च ।**

---

१. परस्मादुत्तमं परो इति प्रोक्तम् । उकारस्योत्तमार्थत्वात् ततः परं परोवरमिति प्रोक्तम् । वरशब्दस्यापि तथात्वात् । तस्मात् परं परोवरीयकं इति प्रोक्तम् ।

२. स उपासकः परोवरीयसोऽधिकं वरीयसो लोकान् वैकुण्ठानन्तासनश्वेतद्वीपाख्यान् प्राप्नोति ।

**हुङ्कारसहिते वाक्ये प्रद्युम्नस्तु सदा स्थितः ।**
**आकारयुक्ते वाराहो वासुदेवः प्रसंयुते ॥**

**नारायणस्तथोद्युक्ते प्रतियुक्तेऽनिरुद्धकः ।**
**उपयुक्ते नृसिंहश्च [1]नीतिसङ्कर्षणस्तथा ॥**

**अभावे यावदेते स्युस्तावत् तद्दैवतं स्मृतम् ।**
**एवं सप्तविधं विष्णुं य उपास्ते परं विभुम् ॥**
**वाङ्नामा भगवांस्तस्य भवेत् सर्वार्थदोहकृत् ॥ इति च ॥८ ॥**

**भाष्यविवृतिः**– इदानीं सप्तविधस्य साम्न उपास्तिं वक्तुं प्रस्तावयति**अथ सप्तविधस्येत्यादिना** ॥ साम्नो भगवत उपास्तिरुच्यत इति योज्यम् । तत्र तावद्वाक्यनिष्ठोपास्तिमाह– **वाचीत्यादिना** ॥ यः हिंनामको हिमिति सामभक्तिप्रतिपाद्यः स यत्किञ्च वाचो हुमिति हुंनामके[2] वाक्ये हुंनाम-प्रतिपाद्य इत्यादि योजना द्रष्टव्या ।

हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनानाम् मूर्तिविशेषस्य निरूपितत्वात् यत् आ इति[3] यत् उप इति तदादिकसामभक्तिप्रतिपाद्ययोस्तन्नामकयोरनुक्त-त्वात्ते मूर्ती आह– **आदिरिति** ॥ हुमित्यादिमात्रमेव हिंनामादिरूप-प्रतिपादकमिति प्रतीतिं निवारयन्नाह– **हुङ्कारसहित इत्यादिना** ॥ हुङ्कारादिरहितं वाक्यं कस्य प्रतिपादकमिति जिज्ञासायामाह– **अभाव इति** ॥ योजना तु हुङ्कारादिष्वेकमुपक्रम्य मध्ये हुङ्कारादिष्वेकोत्त्यभावे यावदेते हुङ्कारादयः स्युस्तद्वाक्यं तद्दैवतमुपक्रान्त दैवतं स्मृतमिति । दुग्धेऽस्मै वाग्दोहमित्येतत्केवला वागेव कामदोग्ध्रीति प्रतीतिं निवारयन् व्याचष्टे– **वाङ्नामेति** ॥ ८ ॥ **इति अष्टमः खण्डः** ॥

---

१. नीतिः सङ्कर्षणः हृपाठः । २. हुमादिके, ३. एतीत्यत्र आ; इति पदच्छेदः ।

## अथ नवमः खण्डः

## आदित्ये सप्तरूपिभगवदुपासना

उप.– अथ खल्वमुमादित्यꣳ सप्तविधं सामोपासीत सर्वदा समस्तेन साम मां प्रति मां प्रतीति सर्वेण समस्तेन साम ॥ १ ॥

तस्मिन्निमानि सर्वाणि भूतान्यन्वायत्तानीति विद्यात् । तस्य यत्पुरोदयात् स हिङ्कारस्तदस्य पशवोऽन्वायत्तास्तस्मात् ते हिङ्कुर्वन्ति हिङ्कारभाजिनो ह्येतस्य साम्नः ॥ २ ॥

अथ यत्प्रथमोदिते स प्रस्तावस्तदस्य मनुष्या अन्वायत्तास्तस्मात् ते प्रस्तुतिकामाः प्रशꣳसाकामाः प्रस्तावभाजिनो ह्येतस्य साम्नः ॥ ३ ॥

अथ यत्सङ्गववेलायाꣳ स आदिस्तदस्य वयाꣳस्यन्वायत्तानि तस्मात् तान्यन्तरिक्षेऽनारम्भणान्यादायात्मानं परिपतन्त्यादिभाजीनो ह्येतस्य साम्नः ॥ ४ ॥

अथ यत्सम्प्रति मध्यन्दिने स उद्गीथस्तदस्य देवा अन्वायत्तास्तस्मात् ते सत्तमाः प्राजापत्यानामुद्गीथभाजिनो ह्येतस्य साम्नः ॥ ५ ॥

अथ यदूर्ध्वं मध्यन्दिनात् प्रागपराह्णात् स प्रतिहारस्तदस्य गर्भा अन्वायत्तास्मात् ते प्रतिहृता नावपद्यन्ते प्रतिहारभाजिनो ह्येतस्य साम्नः ॥ ६ ॥

अथ यदूर्ध्वमपराह्णात् प्रागस्तमयात् स उपद्रवस्तदस्यारण्या अन्वायत्तास्तस्मात् ते पुरुषं दृष्ट्वा कक्षꣳ श्वभ्रमित्युपद्रवन्त्युपद्रवभाजिनो ह्येतस्य साम्नः ॥ ७ ॥

अथ यत्प्रथमास्तमिते तन्निधनं तदस्य पितरोऽन्वायत्तास्तस्मात् तान्निदधति निधनभाजिनो ह्येतस्य साम्न एवं खल्वमुमादित्यꣳ सप्तविधꣳ सामोपास्ते ॥ ८ ॥ ९ ॥

भा.– आदित्यस्थं परं विष्णुं ध्यायेदादित्यनामकम् ।
सप्तरूपं साम चासौ सर्वदा समरूपतः ॥

सर्वेषां मां प्रतीत्येव दृष्टिसाम्याच्च साम सः ।
दृष्टिसाम्यं मण्डलस्य विष्णुस्तस्य च कारणम् ॥

तस्मिन्निमानि भूतानि सर्वाण्येवाश्रितानि हि ।
उदयात् पूर्वमेवासौ भवेत् प्रद्युम्ननामकः ॥

पश्वाधारस्तदात्माऽसौ वासुदेवस्तथोदये ।
आश्रयश्च नृणां तत्र वराहः सङ्गवे तु सः ॥

तत्र पक्ष्याश्रयो विष्णुस्तथा नारायणाभिधः ।
मध्यन्दिने स आधारो देवानां च ततः परम् ॥

अनिरुद्धस्स आधारो गर्भस्थानां सदैव हि ।
ततः परं नृसिंहाख्यः स आरण्याश्रयो मतः ॥

अथास्तमितवेलायां स सङ्कर्षण ईरितः[१] ।
आश्रयः स पितॄणां च सप्तात्मकमुपास्य तम्[२] ॥
प्राप्नोति परमं स्थानं मुक्तः संसारसागरात् ॥ इति च ॥

---

१. 'सङ्कर्षण इतीरितः' पाठान्तरम् ।

२. 'सप्तात्मकमुदाहृतम्' पाठान्तरम् ।

हिङ्कारनामानमाश्रितत्वाद्धिङ्कुर्वन्ति । प्रस्तावाश्रयात् प्रस्तुतिकामाः प्रारम्भकामाः प्रशंसाकामाश्च । प्रारम्भावतारत्वात् प्रशंसादेवतात्वाच्च तस्य । सर्वाधारत्वाद् वराहस्य तदाधाराणां पक्षिणामनाधारेणैव गमनम् । नारायणनामार्थत्वेन सर्वगुणपूर्त्योपासनात् सर्वोत्तमा देवाः । इतरमूर्तीनामपि सर्वगुणपूर्त्योपासने[१] नारायणोपासनमेव भवति । सर्वगुणपूर्त्यर्थत्वान्नारायणशब्दस्य । अनिरुद्धाश्रयत्वाद् गर्भाणां पितुः शरीरादन्यत्र प्रतिहृता अपि न विनश्यन्ति । वर्धन्ते च तत्रैव । अन्यद्धि भुक्तं जीर्यत एव । 'धाता गर्भं दधातु ते' इति च श्रुतिः । धाता हि भगवाननिरुद्धः । विष्णुस्त्वष्टा प्रजापतिर्धाता इति च चतुर्मूर्तयो ह्युच्यन्ते ।[२]

योनिक्लृप्तिर्वासुदेवाद्रूपं सङ्कर्षणाद्भवेत् ।
आसेककर्मा प्रद्युम्नादनिरुद्धाच्च धारणम् ।। इति च ।

व्याप्तेर्विष्णुर्वासुदेवस्त्वष्टा त्वेषाद्द्वितीयकः ।
प्रजापतिः प्रजापातान्निषेकः पातनं ततः ।।

प्रजापतिस्तु प्रद्युम्नो धाता धारणकर्मतः ।
अनिरुद्ध इति प्रोक्तः कृष्णरामौ तथाश्विनौ ।। इति च ।

कक्षश्वभ्रे नृसिंहस्य सदावस्थितिकारणात् ।
द्रवन्ति कक्षश्वभ्राभ्यां तदज्ञानेऽपि रक्षणात् ।।

मृगा भीता यतस्तेषां नृसिंहस्त्वाश्रयः[३] सदा ।
पितॄणामाश्रयो यस्मात् सङ्कर्षण उदाहृतः ।।

---

१. 'सर्वगुणपूर्त्यापासनेन'' पाठान्तरम् । २. ''इति चतुर्मूतयः'' प्रपाठः ।

३. ''नृसिंहः स्वाश्रयः'' इति प्रपाठः ।

**अतस्तान् प्रति पिण्डादीन् निदधत्यज्ञका अपि ।**
**अन्यथा तन्मृतानां तु कुत एवोपतिष्ठति ॥ इति च ।**

**न रूपाणां विशेषोऽस्ति गुणतो नामतोऽपि वा ।**
**तथापि तत्प्रियं नाम नारायण इति स्म ह ॥**

**विशेषतः समस्तानां नाम्नां तस्यार्थ एव तु ।**
**विज्ञायते गुणैः पूर्तिर्नामसाम्यं तदा तथा ॥ इति च ।**

**नाम्नो नारायणाख्यस्य गुणैः पूर्तिं हि देवताः ।**
**विज्ञायार्थमुपास्यैव सर्वाधिक्यमथापिरे**[1] **॥ इति च ॥ ९ ॥**

**भाष्यविवृतिः**– आदित्यनिष्ठां सप्तविधसामनामकभगवदुपास्तिमाह– **अथ खल्वमुमादित्यमित्यादिना** ॥ सामत्वं द्वेधा निरुच्य दर्शयति– **सर्वदेत्यादिना** ॥ १ ॥

सामनामकस्यादित्यास्योपास्त्यर्थं सर्वभूताश्रयत्वं महिमानमाह– **तस्मिन्निति** । अन्वायत्तानि आश्रितानि । सर्वभूतानां तदाश्रयत्वं विशदमाह– **तस्य यदित्यादिना** । तस्यादित्यस्योदयात् । पुरा यद्रूपं स हिंकारः हिमिति सामभक्तिप्रतिपाद्यो भगवांस्तत्र तिष्ठतीत्यादि योजना द्रष्टव्या ॥२॥

**अनारम्भणानि** निराश्रयाणि ॥ ४ ॥

**प्रागपराह्णात्** अपराह्णात्प्राक् । अपराह्ण इत्यर्थः । **नावपद्यन्ते** न नश्यन्ति ॥ ६ ॥

**कक्षम्** अरण्यम् । **श्वभ्रं** विवरमिति इत्याद्युपद्रवन्ति ॥ ७ ॥

---

१. ''अवापिरे'' इप्रचलितपाठः ।

अदितिपुत्रादित्यस्यैव सर्वदा समत्वसर्वभूताश्रयत्वादिमहिमायुक्तत्वेनोपास्तिरुच्यत इत्यन्यथाप्रतीतिमप्रतीतिं च निवारयन् खण्डं प्रमाणेन व्याचष्टे– **आदित्यस्थमित्यादिना** ॥ अस्या उपास्तेः फलानुक्तेर्विवक्षितं फलमाह– **सप्तात्मकमिति** ॥ तस्मात्ते हिंकुर्वन्तीत्यादिना हिंकारादिकरणे हेतुमुक्त्वा हिङ्कारभाजिनो ह्येतस्य साम्न इत्यादिनोक्तो हेतुर्विवृतः । तन्मन्दानां हेतुविवरणत्वाप्रतीतेराचार्यः स्पष्टं विशदयति– **हिङ्कारनामानमित्यादिना** ॥ सुरभ्यादयो हिङ्कारनामानमाश्रितत्वात् हिङ्कुर्वन्ति तज्जातित्वादाधुनिका अपि पशव इत्यर्थः । अप्रतीतेः [१]प्रस्तुतिं कामा इत्यस्य प्रतिपदं दत्तं– **प्रारम्भकामा इति** ॥

प्रस्तावाश्रयत्वात् प्रस्तुतिकामत्वं प्रशंसाकामत्वं च कथमागतमित्यतस्तद्दर्शयति– **प्रारम्भेति । प्रारम्भावतारत्वात्** उपक्रमावतारत्वादिति यावत् । सर्वपक्ष्याधारत्वात् तस्मात्ते देवाः प्राजापत्यानामृषिगन्धर्वादीनां मध्ये सत्तमा इत्युक्तं हेतुमेव विवरितुमुक्तम्– **उद्गीथभाजिनो ह्येतस्य साम्न इति** ॥ तद्विशदयति– **नारायणेति** ॥ नारायणनामार्थः कः यद्युक्तत्वेनोपासनमित्यत उक्तं– **सर्वगुणपूर्त्येति** ॥ कचित्तेषां देवानामितरमूर्तीनां सर्वगुणपूर्त्युपास्त्यापि सत्तमत्वश्रवणात् कथं नारायणं नामार्थत्वेनोपासनाद्देवाः सत्तमा इत्युक्तिरित्यतस्तदपि नारायणनामार्थोपासनमेवेत्याह– **इतरेति** ॥ इतरमूर्तीनां सर्वगुणपूर्त्युपासनं कथं नारायणशब्दार्थ इत्यत आह– **सर्वेति** ॥ तस्मात्प्रतिहृता नावपद्यन्त इत्युक्तो हेतुर्विवृतः– **प्रतिहारभाजिनो ह्येतस्य साम्न इति** ॥ तद्विशदयति– **अनिरुद्धाश्रयत्वादिति** ॥ मातृशक्त्या गर्भा न नश्यन्तीति कस्मान्न स्यादित्यत आह– **अन्यदिति** ॥ मातृभुक्तं मातृप्रविष्टं[२] अनिरुद्धो गर्भं धत्त इति कुत इत्यतस्तत्र श्रुतिं पठति– **धातेति** ॥

१. प्रस्तुतिकामपदस्य इति खपाठः २. अन्यदन्नादिकं भुक्तं मातृशरीरप्रविष्टमिति यावत् । हिशब्देन सर्वानुभवं प्रमाणयति ।

श्रुतौ गर्भधारकत्वेन श्रुतो धाताऽनिरुद्ध इति कुत इत्येतत्साधयितुं[१] प्रतिजानीते– **धातेति** ॥ प्रतिज्ञातार्थां श्रुतिमर्थतः पठन् समर्थयते– **विष्णुरिति** ॥

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ।

इत्यनेन चतुर्मूर्तयो ह्युच्यन्ते । अत्र भगवतश्चतुर्मूर्त्युक्तेरित्यर्थः । श्रुतेः प्रतीतार्थ एव कस्मान्न स्यात् । न स्यात् । तथा समाख्याभावादिति तां पठति– **योनिक्लृप्तिरिति** ॥ **योनिक्लृप्तिः** योनिशुद्धिरिति[२] । समाख्याभावेऽपि प्रसिद्ध्या सन्देहे[३] निर्वचनेन त्याजयति– **व्याप्तेरिति** ॥ **त्वेषात्** दीप्तत्वात् । **द्वितीयकः** सङ्कर्षणः । ततः प्रद्युम्नान्निषेकलक्षणं पातनं भवति । अतः प्रजापतिस्तु प्रद्युम्न इति योज्यम् । गर्भं त अश्विनौ देवावाधत्तां पुष्करस्रजावित्यस्यार्थमाह– **कृष्णरामाविति** ॥ पुरुषादिकं दृष्ट्वा भीता मृगाः कक्षश्वभ्राभ्यां द्रवन्ति । किमर्थं कक्षश्वभ्रे द्रवन्ति । रक्षणं स्यादिति । कथं रक्षणं । कक्षश्वभ्रयोर्नृसिंहस्य सदावस्थितिकरणात् । मृगाणां नृसिंहज्ञानाभावात् कथं रक्षणं स्यादित्यत उक्तम्– **तदज्ञानेऽपि रक्षणादिति** ॥ तदेव विवृणोति– **यतस्तेषां इति** ॥ इति योज्यम् ॥ ७ ॥

तस्मान्निदधतीत्यादि व्याचष्टे– **पितॄणामिति** ॥ इतरमूर्तीनामित्यत्र सर्वरूपाणां सर्वगुणपूर्त्याद्यस्तीत्युक्तं तत्प्रमाणेन द्रढयति– **न रूपाणामिति** । रूपाणां गुणनामभ्यां विशेषाभावे नाम्नामपि विशेषाभाव इति प्रतीतिं निवारयन्नाह– **तथाऽपीति** । तस्य नारायणस्य नाम्नो गुणपूर्तिरर्थ

---

१. इत्यतस्तत्साधयितुं खपाठः ।

२. योनेः क्लृप्तिः पुत्रोत्पत्तिसामर्थ्यमिति वा ।

३. सन्देहं खपाठः ।

अदितिपुत्रादित्यस्यैव सर्वदा समत्वसर्वभूताश्रयत्वादिमहिमायुक्तत्वेनोपास्तिरुच्यत इत्यन्यथाप्रतीतिमप्रतीतिं च निवारयन् खण्डं प्रमाणेन व्याचष्टे– **आदित्यस्थमित्यादिना** ॥ अस्या उपास्तेः फलानुक्तेर्विवक्षितं फलमाह– **सप्तात्मकमिति** ॥ तस्मात्ते हिंकुर्वन्तीत्यादिना हिंकारादिकरणे हेतुमुक्त्वा हिङ्कारभाजिनो ह्येतस्य साम्न इत्यादिनोक्तो हेतुर्विवृतः । तन्मन्दानां हेतुविवरणत्वाप्रतीतेराचार्यः स्पष्टं विशदयति– **हिङ्कारनामानमित्यादिना** ॥ सुरभ्यादयो हिङ्कारनामानमाश्रितत्वात् हिङ्कुर्वन्ति तज्जातित्वादाधुनिका अपि पशव इत्यर्थः । अप्रतीतेः [१]प्रस्तुतिं कामा इत्यस्य प्रतिपदं दत्तं– **प्रारम्भकामा इति** ॥

प्रस्तावाश्रयत्वात् प्रस्तुतिकामत्वं प्रशंसाकामत्वं च कथमागतमित्यतस्तद्दर्शयति– **प्रारम्भेति । प्रारम्भावतारत्वात्** उपक्रमावतारत्वादिति यावत् । सर्वपक्ष्याधारत्वात् तस्मात्ते देवाः प्राजापत्यानामृषिगन्धर्वादीनां मध्ये सत्तमा इत्युक्तं हेतुमेव विवरितुमुक्तम्– **उद्गीथभाजिनो ह्येतस्य साम्न इति** ॥ तद्विशदयति– **नारायणेति** ॥ नारायणनामार्थः कः यद्युक्तत्वेनोपासनमित्यत उक्तं– **सर्वगुणपूर्त्येति** ॥ कचित्तेषां देवानामितरमूर्तीनां सर्वगुणपूर्त्युपास्त्यापि सत्तमत्वश्रवणात् कथं नारायणं नामार्थत्वेनोपासनाद्देवाः सत्तमा इत्युक्तिरित्यतस्तदपि नारायणनामार्थोपासनमेवेत्याह– **इतरेति** ॥ इतरमूर्तीनां सर्वगुणपूर्त्युपासनं कथं नारायणशब्दार्थ इत्यत आह– **सर्वेति** ॥ तस्मात्प्रतिहृता नावपद्यन्त इत्युक्तो हेतुर्विवृतः– **प्रतिहारभाजिनो ह्येतस्य साम्न इति** ॥ तद्विशदयति– **अनिरुद्धाश्रयत्वादिति** ॥ मातृशक्त्या गर्भा न नश्यन्तीति कस्मान्न स्यादित्यत आह– **अन्यदिति** ॥ मातृभुक्तं मातृप्रविष्टं[२] अनिरुद्धो गर्भं धत्त इति कुत इत्यतस्तत्र श्रुतिं पठति– **धातेति** ॥

---

१. प्रस्तुतिकामपदस्य इति खपाठः २. अन्यदन्नादिकं भुक्तं मातृशरीरप्रविष्टमिति यावत् । हिशब्देन सर्वानुभवं प्रमाणयति ।

श्रुतौ गर्भधारकत्वेन श्रुतो धाताऽनिरुद्ध इति कुत इत्येतत्साधयितुं[१] प्रतिजानीते– **धातेति** ॥ प्रतिज्ञातार्थां श्रुतिमर्थतः पठन् समर्थयते– **विष्णुरिति** ॥

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ।

इत्यनेन चतुर्मूर्तयो ह्युच्यन्ते । अत्र भगवतश्चतुर्मूर्त्युक्तेरित्यर्थः । श्रुतेः प्रतीतार्थ एव कस्मान्न स्यात् । न स्यात् । तथा समाख्याभावादिति तां पठति– **योनिक्लृप्तिरिति** ॥ **योनिक्लृप्तिः** योनिशुद्धिरिति[२] । समाख्याभावेऽपि प्रसिद्ध्या सन्देहे[३] निर्वचनेन त्याजयति– **व्याप्तेरिति** ॥ **त्वेषात्** दीप्तत्वात् । **द्वितीयकः** सङ्कर्षणः । ततः प्रद्युम्नान्निषेकलक्षणं पातनं भवति। अतः प्रजापतिस्तु प्रद्युम्न इति योज्यम् । गर्भं त अश्विनौ देवावाधत्तां पुष्करस्रजावित्यस्यार्थमाह– **कृष्णरामाविति** ॥ पुरुषादिकं दृष्ट्वा भीता मृगाः कक्षश्वभ्राभ्यां द्रवन्ति । किमर्थं कक्षश्वभ्रे द्रवन्ति । रक्षणं स्यादिति । कथं रक्षणं । कक्षश्वभ्रयोर्नृसिंहस्य सदावस्थितिकरणात् । मृगाणां नृसिंहज्ञानाभावात् कथं रक्षणं स्यादित्यत उक्तम्– **तदज्ञानेऽपि रक्षणादिति** ॥ तदेव विवृणोति– **यतस्तेषां इति** ॥ इति योज्यम् ॥ ७ ॥

तस्मान्निदधतीत्यादि व्याचष्टे– **पितॄणामिति** ॥ इतरमूर्तीनामित्यत्र सर्वरूपाणां सर्वगुणपूर्त्याद्यस्तीत्युक्तं तत्प्रमाणेन द्रढयति– **न रूपाणामिति** । रूपाणां गुणनामभ्यां विशेषाभावे नाम्नामपि विशेषाभाव इति प्रतीतिं निवारयन्नाह– **तथाऽपीति** । तस्य नारायणस्य नाम्नो गुणपूर्तिरर्थ

१. इत्यतस्तत्साधयितुं खपाठः ।

२. योनेः क्लृप्तिः पुत्रोत्पत्तिसामर्थ्यमिति वा ।

३. सन्देहं खपाठः ।

एव तु इतरसमस्तनाम्नामपि यदा महद्भिर्विज्ञायते तदाऽपि तस्य विशेषः किमित्यतो नेति पक्षान्तरमाह– **समस्तानामिति** ॥ नारायणं नामार्थव-त्वेनोद्गीथमुपास्य देवाः सर्वोत्तमा जाता इत्युक्तमर्थं प्रमाणेन द्रढयति– **नाम्न इति** ॥ ८,९ ॥ **इति नवमः खण्डः** ॥

## अथ दशमः खण्डः

## सप्तविधसामप्रतिपाद्यभगवतो रूपाणि समानि

**उप.– अथ खल्वात्मसम्मितमतिमृत्यु सप्तविधꣳ सामोपासीत हिङ्कार इति त्र्यक्षरं प्रस्ताव इति त्र्यक्षरं तत्समम् ॥ १ ॥**

**आदिरिति द्व्यक्षरं प्रतिहार इति चतुरक्षरं तत इहैकं तत्समम् ॥ २ ॥**

**उद्गीथ इति त्र्यक्षरमुपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः समं भवत्यक्षर-मतिशिष्यते त्र्यक्षरं तत्समम् ॥ ३ ॥**

**निधनमिति त्र्यक्षरं तत्सममेव भवति तानि ह वा एतानि द्वा-विꣳशतिरक्षराणि ॥ ४ ॥**

भा.– यस्यान्यः सदृशो नास्ति स्वरूपाणि समानि च ।
स आत्मसंमितो विष्णुरतिमृत्युरमृत्युतः ॥

प्रद्युम्नादिस्वरूपेण स विष्णुः सप्तधा स्थितः ।
समानि तानि सर्वाणि ज्ञानानन्दबलैस्तथा ॥

ज्ञानादित्रयवाचीनि त्र्यक्षराण्यपि सर्वशः ।
हिङ्कारादीनि नामानि सर्वेषामपि सर्वशः ॥

आदिनाम्नः प्रकारस्तु योज्यः स्यात् प्रतिहारतः ।
तेन त्र्यक्षरमेव स्यान्नामद्वयमपि प्रभोः ॥

**उपद्रवे तु वःकारो यद्यपि व्यतिरिच्यते ।**
**नाम नारायणस्यैव सोऽपि क्षीराब्धिशायिनः ॥**

**व्यञ्जनस्वरसर्गैस्तु सोऽपि ज्ञानादिवाचकः ।**
**त्रिवर्णत्वात् समः सोऽपि ज्ञानाद्यैः पुरुषोत्तमः ॥**

**भाष्यविवृतिः**– सप्तविधस्य सामनाम्नो भगवतो ज्ञानानन्दबलैर्ब्रह्माद्यसमत्वात्मरूपसमत्वनिष्ठामुपास्तिमाह**अथ खल्वात्मसंमितमित्यादिना**[1] ॥ रूपाणां ज्ञानानन्दबलैः समत्वमेव दर्शयति– **हिङ्कार इति त्र्यक्षरमित्यादिना** ॥ १ ॥

आदिरित्यस्य द्व्यक्षरत्वात् त्र्यक्षरत्वप्रकारं दर्शाति– **तत इहैकं तत्सममिति** ॥ ततः प्रतिहारनाम्नः प्र इत्येकमक्षरमिह आदिनाम्नि योज्यमिति योजना ॥ २ ॥

उपद्रव इत्यस्य चतुरक्षरत्वात् कथं सर्वनाम्नां त्र्यक्षरत्वमित्यतः समाधानप्रकारं दर्शयति**त्रिभिरिति** ॥ सर्वं नाम त्रिभिस्त्रिभिर्वर्णैः समं भवति । चतुर्थमक्षरं त्वष्टममूर्तिवाचकमवशिष्यते इति योज्यम् । व इति नाम्नस्त्र्यक्षरत्वाभावात् कथं समत्वमित्यत आह– **त्र्यक्षरं तत्सममिति** ॥ ३ ॥

आत्मसंमितमिति रूपाणां स्वसादृश्यमुक्तम् । तत्कथं भिन्नानामेव सादृश्यादित्यतः स्वसादृश्यं द्वेधा घटयन्नाह– **यस्येति**[2] ॥ अन्यस्य स्वसादृश्यस्याभावः, स्वरूपाणां समत्वं[3] वाऽत्मसम्मितत्वमतो नायुक्ति-

---

१. अयं खण्डः प्रसिद्धसामपरः इत्यसत् । शब्दरूपस्य तस्य परमात्मसम्मितत्वातिमृत्युत्वयोरभावात् । तन्नाकं तद्विशोकं इत्यस्यासम्भवाच्च ।

२. गगनं गगनाकारं इत्यादौ एतत्सदृशं अन्यन्नास्ति इत्यर्थः एवमत्रापीति भावः ।

३. स्वरूपाणां परस्परं समत्वं नाम परस्परनिष्टबहुधर्मयोगित्वमेव । न तु तद्भिन्नत्वविशेषितम् । तच्च परस्परमभेदेऽपि सम्भवतीति भावः ।

रित्यर्थः । सप्तविधं सामेत्युक्तम् । सामनाम्नो भगवतः साप्तविध्यं दर्शयति **प्रद्युम्नादीति** । प्रद्युम्नादिस्वरूपेण प्रद्युम्नवासुदेववराहनारायणानिरुद्धनृसिंह-सङ्कर्षणस्वरूपेणेत्यर्थः । भगवत्स्वरूपाणामुक्तमात्मसंमितत्वं कैरित्यतस्त-द्दर्शयति– **समानीति** ॥ हिङ्कारादिनाम्नां ज्ञानादिभिः सर्वरूपाणां समत्व-प्रतिपादनं कथमित्यतस्तद्दर्शयति– **ज्ञानादीति** ॥ हिङ्कारादीनि सर्वशो नामानि त्र्यक्षराणि तावत् । तथा च हिङ्कारादीनि सर्वशो नामानि वर्णशः सर्वेषां रूपाणां ज्ञानादित्रयवाचीनीति योजना ।

तत इहैकं तत्सममित्येतत् समत्वप्रकारकरणं दर्शयन् व्याचष्टे– **आदीति** ॥ प्रतिहारतो नाम्नः प्रकारस्तु प्र इत्येकमेवाक्षरमादिनाम्नो योज्यं स्यात्तेन त्र्यक्षरमेवैत्यादि योजना[१] । उपद्रवनाम्न्यवशिष्टवःकारवाच्य-रूपमाह– **उपद्रव इति** ॥ वःकारस्य त्र्यक्षरत्वाभावात् कथं तद्वाच्यस्य क्षीराब्धिशायिनो ज्ञानादिभिः समत्वमित्यतस्त्र्यक्षरं तत्सममित्युक्तं त्र्यक्षर-त्वेन समत्वं दर्शयंस्तद्दर्शयति– **व्यञ्जनेति** ॥ व्यञ्जनस्वरविसर्गैस्त्रिवर्णत्वात् सोऽपि वःकारो ज्ञानादिवाचकोऽतः सोऽपि तद्वाच्यः पुरुषोत्तमोऽपि ज्ञानाद्यैः सम इति योजना ॥

सप्तविधस्य भगवतः अनुषङ्गसिद्धमुपास्त्यन्तरमाह– **तानि हवा एतानि द्वाविंशतिरक्षराणीति** ॥ अस्य योजनातु सप्तविधं भगवद्रूपं प्रत्येकं त्रिविधं तथाचैकविंशतिः क्षीराब्धिशयनश्चेति द्वाविंशतिमूर्तयः ॥ तानि हिङ्कारादीन्यक्षराणि द्वाविंशतिर्वैतद्वाचकानि हेति ।

**उप.– एकविꣳशत्याऽऽदित्यमाप्नोत्येकविंशो वा इतोऽसावादित्यो द्वाविꣳशेन परमादित्याज्जयति तन्नाकं तद्विशोकम् ॥ ५ ॥**

---

१. तेन प्र आदिरिति आदिप्र इति वैकं नाम, तिहार इत्यन्यदिति प्रभोर्नामद्वयमपि त्र्यक्षरमेव स्यादित्यर्थः ।

भा.– वःकारार्थपरिज्ञानात् प्राप्योऽब्धिशयनः प्रभुः ।
एकविंशार्णविज्ञानात् प्राप्योऽसौ सूर्यमण्डले ॥

हिङ्काराद्यक्षरप्रतिपाद्यानि भगवतो द्वाविंशद्रूपाणि

स एव भगवान् विष्णुर्द्वाविंशद्रूपवान् यतः ।
तान्येव सप्तरूपाणि विभिद्यन्ते त्रिधा त्रिधा ॥

एकः पयोब्धिशयन इति द्वाविंशतिः प्रभोः ।
प्रद्युम्नाद्यास्तु चत्वारो द्विषण्मासेषु संस्थिताः ॥

त्रिशस्त्रिशः केशवाद्या वसन्तादिषु पञ्चमः ।
रूपद्वयं च[1] षष्ठस्य स्थितं मत्स्यादिपञ्चकम् ॥

तृतीयं पृथिवीसंस्थं जामदग्न्याख्यमेव तत् ।
अन्तरिक्षद्युसूर्येषु सप्तमस्य त्रिधा तनुः ॥

रामः कृष्णः कल्किरिति तज्ज्ञानात् तान्यवाप्य च ।
द्वाविंशेन पयोब्धिस्थं प्राप्यते रूपमक्षरम् ॥

एतद् द्वाविंशकं रूपं नाकं चासुखवर्जनात् ।
पूर्णानन्दस्वरूपत्वाद्विशोकं शोकनाशनात् ॥

इति सामसंहितायाम् ।

भाष्यविवृतिः– तत्रैकविंशात् द्वाविंशन्मूर्त्युपास्तेरुपलक्षणत्वेन फलमाह– एकविंशत्येति ॥ एकविंशाक्षरवाच्योपास्त्या कथमादित्यप्राप्तिरित्यत उपास्त्युपास्यसाम्यादित्याह– एकविंश इति ॥ इतः पृथिवीस्थितमूर्त्य-

१. ''रूपद्वयं तु'' पाठान्तरम् ।

पेक्षयाऽसावादित्य एकविंशो वै इति परं द्वाविंशम् । इतराक्षरोपास्त्येतर-रूपाणि प्राप्याणीति ग्राह्यम् । एकविंशत्यादिवाक्यं व्याचष्टे– **वःकारेति** ॥ व इति द्वाविंशार्णपरिगणनात् कुतोऽब्धिशायनः प्राप्य इत्यत आह– **स एवेति** ॥ सप्तरूपाणामुक्तत्वात् क्व द्वाविंशतिरूपाणीत्यत आह– **तान्येवेति** ॥ इति द्वाविंशतिरूपाणीति शेषः ।

द्वाविंशतिरूपाणि किंनामकानि कुत्र तिष्ठन्तीत्यतस्तदाह– **प्रद्युम्नेति**[१] ॥ प्रद्युम्नवासुदेव वराहनारायणाश्चत्वारः । प्रत्येकं त्रिशस्त्रिशो भूत्वा केशवाद्याः केशवादिनामानः सन्तः द्विषण्मासेषु स्थिता इति योज्यम् ॥ पञ्चमः अनिरुद्धः तस्य रूपत्रयमिति यावत् । षष्टस्य नरसिंहस्य रूपद्वयम् । मत्स्यादिनामकं पञ्चकं हेमन्तशिशिरयोरैक्येन वसन्तादिषु पञ्चसु ऋतुषु स्थितमित्यर्थः । षष्टस्य तृतीयं रूपम् । सप्तमस्य तनुस्त्रिधेति योज्यम् ॥ पूर्वमुपलक्षितं फलमाह– **तज्ज्ञानादिति** ॥ द्वाविंशेनेति प्रसङ्गादुक्तम् । तन्नाकं तद्विशोकमित्येतत् द्वाविंशतिमरूपविशेषणत्वप्रतीतिं निवारयन् व्याचष्टे– **एतदिति** ॥ अकमसुखं दुःखं[२] तद्वर्जनात् । द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति न्यायेनार्थान्तरमाह– **पूर्णानन्दस्वरूपत्वादिति** ॥ विशोकपदस्य नाकपदेनैकार्थत्वप्रतीतिं निवारयन्नाह– **विशोकमिति** ॥ भक्तशोकनाशनात् ॥ ५ ॥

**उप.– आप्नोतीहादित्यस्य जयं परो हास्यादित्यजयाज्जयो भवति य एतदेवं विद्वानात्मसम्मितमतिमृत्यु सप्तविधꣳ सामोपास्ते सामोपास्ते ॥ ६ ॥ १० ॥**

---

१. द्वादशमासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंश इति श्रुत्यन्तरानुसारेणैकविंशतिमूर्तीराह ।

२. कं सुखं अकमसुखं दुःखमिति यावत् । तद्रहितं नाकमित्युच्यते इति भावः ।

भा.– [१]प्राप्नोतीहादित्यस्य जयम् । इह पृथिव्यादिषु स्थितभगवत्प्राप्तावप्यादित्यस्थ एव प्राप्यते । ऐक्यात् । परो हास्यादित्यजयाज्जयो[२] भवति । आदित्यस्थस्यादित्यनाम्नो भगवतः प्राप्त्या परो जयः रूपान्तर प्राप्तिरपि भवति ।

स्वरूपमेकं प्राप्तस्तु विष्णोः स्यात् सर्वरूपगः ।
ऐक्यात् तथापि सम्प्राप्तिर्बहूपास्त्या सुखाधिका[३] ॥ इति च ।

जयो नाम प्राप्तिरेव । धनजिते स्वर्जिते[४] सत्राजित इत्यादिवत् । केशवदिरूपेण ललाटादिषु स्थितेरित एकविंश इत्युच्यते ।

चित्रादियोगदातृत्वान्मासनामा स्वयं हरिः ।
लोकः प्रकाशरूपत्वादादित्यश्चादनादपाम् ॥ इति च ॥ १० ॥

**भाष्यविवृतिः**– एकविंशत्येत्यत्रोपासितं तत्तद्रूपं स्वस्वप्राप्तिदात्रिति सूचितम् । तथा च क्षित्यादिस्थितस्यादित्यादिस्थितप्राप्यदातृत्वे आदित्यादिस्थितस्य क्षित्यादिस्थितप्राप्यदातृत्वेवा वैषम्यादात्मसम्मितमित्युक्तमयुक्तं स्यादित्यतः प्राप्तं– **आप्नोतीहादित्यस्य जयं परो हास्यादित्यजयाज्जयो भवतीति** ॥ तत्क्रमेणानूद्य व्याचष्टे– **प्राप्नोतीत्यादिना** ॥ उक्तमर्थं दृढीकुर्वन्नेकरूपोपास्त्या रूपान्तरप्राप्तौ रूपान्तरोपास्तिर्व्यर्थेति शङ्कां प्रयोजनोक्त्या वारयति**स्वरूपमिति** । परो जयो रूपान्तरप्राप्तिरपि भवतीति जयशब्दः प्राप्त्यर्थो व्याख्यातस्तत्कथं स्यात् । जिधातोर्जयाभिभवयोरेव प्रसिद्धेरित्यतः प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातव इति न्यायं सूचयन् प्रतिज्ञार्थं प्रयोगदर्शनेन समर्थयते – **जय इति** ॥ अत्रेत्यादौ

---

१. ''आप्नोतीह'' पाठान्तरम् । २. ''आदित्यस्य जयात्'' पाठान्तरम् ।
३. ''सुखाधिकी'' पाठान्तरम् । ४. ''धनजिते स्वर्जिते इत्यादिवत्'' हृपाठः ।

ग्राह्यम् ॥ इत्यादिवत् इत्यादिप्रयोगो यथा । एकविंशोवा इतोऽसावादित्य इति रूपाणां स्थितिक्रम उक्तः । स न युक्तः । कालात्मक ऋत्वादिषु रूपस्थित्युक्तेः कालस्य च व्याप्तत्वादित्यतो बाह्ये क्रमाभावेऽप्यध्यात्मं क्रमभावादुक्तं युक्तमित्याह– **केशवेति** ॥[1] प्रद्युम्नाद्याश्चैत्रादिमासनामानस्तेषु तिष्टंतीत्युक्तम् । ते च मासाः प्रद्युम्नादयश्च किं निमित्ततस्तन्नामान इति जिज्ञासायामाह– **चैत्रेति** ॥ चन्द्रस्य पौर्णमास्यां चित्रादियोगदातृत्वाद्धरिः स्वयं मुख्यतस्तन्नामा । मासास्तु पौर्णमास्यां चित्रादि[2] नक्षत्रयोगभावात्तत्तन्नामान इति च ग्राह्यम् ॥ लोकेषु पञ्चविधसामोपास्तौ फलत्वेनोक्तं कल्पन्ते हास्मै लोक इत्युर्वरितं लोकशब्दमिह प्रसक्तमादित्यशब्दं च केवललोकाद्यभिधातृत्वप्रतीतिं निवारयन् निर्वक्ति– **लोक** इति ॥ १० ॥ इति दशमः खण्डः ॥

## अथ एकादशः खण्डः

## गायत्रसामप्रतिपाद्यभगवदुपासना

**उप.– मनो हिङ्कारो वाक् प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारः प्राणो निधनमेतद्गायत्रं प्राणेषु प्रोत९ँ स य एवमेतद्गायत्रं प्राणेषु प्रोतं वेद प्राणी भवति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या महामनाः स्यात् तद् व्रतम् ॥ ११ ॥**

---

१. यो मासगतः केशवादिद्वादशविधो भगवान् स एवाध्यात्मं ललाटादिषु संस्थितः । ''ललाटे केशवं विद्यान्नारायणमथोदरे'' इत्यादिस्मृतेः । एवं च केशवस्याध्यात्मं ललाटेऽपि सत्त्वादिति भावः ।

२. अत्र चित्राशब्देन पूर्वोत्तरतारके अपि ग्राह्ये । आदिशब्देन विशाखादिग्रहणम् । उक्तं च-

चित्रादितारकाद्वन्द्वं यदा पूर्णेन्दुसंयुतम् ।

चैत्रादिमासा विज्ञेयाः.............॥ इति ।

भा.– प्राणसंस्थे हरौ[१] प्रोतं गायत्रं साम सर्वदा ।
तद्वाचकं नियम्यं चेत्यतः प्रोतमितीर्यते ॥

प्राणस्थविष्णोः सामीप्यात् तत्स्थमेतदितीर्यते ।
क्वचिन्निर्देशसामीप्याद्विष्णोरेतदितीर्यते ॥ इति च ।

प्राणस्थविष्णुलाल्यत्वात्[२] प्राणीत्येवाभिधीयते ।
मोक्षस्तु सर्वमायुस्तु स्यान्नित्यत्वाज्ज्योक्समस्तवित् ॥
इति च ॥ ११ ॥

**भाष्यविवृतिः**– पुनश्च हिंकारादिसामभक्तिप्रतिपाद्यस्य तदभिधेयस्य गायत्रादिसामनाम्नस्तत्प्रतिपाद्यस्य भगवतस्तन्निष्ठोपास्तिरैहिकामुष्मिकफले व्रतं चैकादशपर्वभिराह । तत्र गायत्रसामनिष्ठामुपास्तिमाह– **मन इत्यादिना** ॥ गायत्रस्य प्रसिद्धप्राणेषु प्रोतत्वप्रसिद्धिं निदर्शयन् प्रोत-शब्दार्थमाह– **प्राणेति**[३] ॥ प्रागप्रकृत्वादेतदिति कथं गायत्रस्य परामर्श इत्यतस्तद्धटन्नाह– **प्राणस्थेति** ॥ शरीरस्थतया प्राणानां प्रकृतत्वात् तत्स्थतया विष्णोश्च प्रकृतत्वात्तत्प्रतिपादकतया गायत्रस्य च बुद्धौ प्रतीतत्वात्तत्स्थमेतदितीर्यत इत्यर्थः । अभिमन्थतीत्यादौ कस्याप्यप्रकृतत्वा-त्तस्थतया विष्णोरप्यप्रकृतत्वात् कथं तत्स्थतयैतद्रथन्तरमेतद्वामदेव्यमित्यादि परामर्शः स्यादित्यत आह– **क्वचिदिति** ॥ विष्णोर्निर्देशसामीप्याद्ग्रन्थ-प्रतिपाद्यतया प्रकृतत्वात्तत्स्थं क्वचिदेतदितीर्यते । एतदिति परामृश्यत इत्यर्थः । प्राणवान् भवति[४] । पुरुषायुर्भवति[५] । प्रकाशवान् जीवतीत्ये-

१. ''प्राणसंस्थे हरौ'' हृपाठः । २. ''विष्णुलाळ्यत्वात्'' हृपाठः ।

३. अनेन प्रसिद्धप्राणेषु गायत्रं प्रोतमित्यपास्तम् ।

४. प्राणी भवतीत्यस्यायमर्थः । ५. सर्वमायुरेतीत्यस्यार्थोऽम् ।

तावन्मात्रार्थत्वप्रतीतिं निवारयंस्तानि पदानि व्याचष्टे– **प्राणस्थेति** ॥११॥ **इति एकादशः खण्डः ॥**

## अथ द्वादशः खण्डः

## रथन्तरसामप्रतिपाद्यभगवदुपासना

**उप.– अभिमन्थति स हिङ्कारो धूमो जायते स प्रस्तावो ज्वलति स उद्गीथोऽङ्गारा भवन्ति स प्रतिहार उपशाम्यति तन्निधनꣳ सꣳशाम्यति तन्निधनमेतद्रथन्तमग्नौ प्रोतम् ॥ १ ॥**

**स य एवमेतद्रथन्तरमग्नौ प्रोतं वेद ब्रह्मवर्चस्व्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या न प्रत्यङ्ङग्नि-माचामेन्न निष्ठीवेत् तद् व्रतम् ॥ २ ॥ १२ ॥**

**भा.– मन्थनादिस्थितं यस्तु[1] तन्नामानं हरिं परम् ।**
**तत्तत्क्रियैकहेतुत्वाद्योऽग्नौ ध्यायेज्जनार्दनम् ॥**
**रथन्तराश्रयं पञ्चरूपं स च विमुच्यते ॥ इति च ॥ १२ ॥**

**भाष्यविवृतिः–** रथन्तरसामनिष्ठां भगवदुपास्तिमाह **अभिमन्थती-त्यादिना ॥** हिङ्कारः यन्मन्थति यन्मथनं स इत्यादिना योजना द्रष्टव्या । खण्डं तात्पर्योक्त्या व्याचष्टे– **मन्थनादीति ॥ तत्तत्क्रियैकहेतुत्त्वात्** मन्थनधूमजननादिक्रियामुख्यकारणत्वात् ॥१२॥ **इति द्वादशः खण्डः ॥**

## अथ त्रयोदशः खण्डः

## वामदेव्यसामप्रतिपाद्यभगवदुपासना

उप.– उपमन्त्रयते स हिङ्कारो ज्ञपयते स प्रस्तावः स्त्रिया सह शेते स

१. ''यत्तु'' पाठान्तरम् ।

**उद्गीथः प्रतिस्त्री सह शेते स प्रतिहारः कालं गच्छति तन्निधनं पारं गच्छति तन्निधनमेतद्वामदेव्यं मिथुने प्रोतम् ॥ १ ॥**

**स य एवमेतद्वामदेव्यं मिथुने प्रोतं वेद मिथुनीभवति मिथुनान्मिथुनात् प्रजायते सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या न काञ्चन परिहरेत् तद् व्रतम् ॥ २ ॥ १३ ॥**

**भा.– मिथुनस्थं पञ्चरूपं ध्यात्वैव पुरुषोत्तमम् ।**
**अत्यागी च स्वभार्याणां मुच्यते नात्र संशयः ॥ इति च ।**

**मिथो नयतीति मिथुनं भगवान् ॥ १३ ॥**

**भाष्यविवृतिः–** वामदेव्यसामनिष्ठां भगवदुपास्तिमाह– **उपमन्त्रयत** इत्यादिना ॥ **उपमन्त्रयते** रन्तुं सम्भाषणं करोति । **ज्ञपयते** सुखमनुभवति । **प्रति स्त्रिया सह शेते** मैथुनं करोति । **कालं गच्छति**[१] **पारं गच्छति** रतिविरतिं करोति । कर्मवशादनेकस्त्रियः[२] स्युः तासु कांचन न परिहरेत् । **प्रजायते** प्रकृष्टो जायते[३] ।

ग्राम्यकर्मत्वेनाब्रह्मविद्यात्वप्रतीतिं निवारयन् खण्डं तात्पर्यार्थोक्त्या व्याचष्टे– **मिथुनस्थमिति** ॥ उपमन्त्रणादिमिथुनकार्यत्वात् मिथुनम् । तत्र स्थितं मिथुनस्थं मिथुननामानम् । अन्यगृहीतामपि यां काञ्चन न परिहरेदिति प्रतीतिं निवारयितुमुक्त– **मत्यागीति** ॥ बहुवारमनुवृत्तं मिथुनशब्दं स्त्रीपुंद्वन्द्वपरत्वप्रतीतिं निवारयन् भगवति निर्वक्ति– **मिथविति**[४] ॥ १३ ॥ **इति त्रयोदशः खण्डः ॥**

---

१. मैथुनसमयं प्राप्नोति । २. एकस्य

३. अमोघरेता भवतीति यावत् ।

४. ओकारस्य उकारो निर्वचनत्वात् ।

## अथ चतुर्दशः खण्डः

### बृहत्सामप्रतिपाद्यभगवदुपासना

उप.– उद्यन् हिङ्कारः उदितः प्रस्तावो मध्यन्दिन उद्गीथोऽपराह्णः प्रतिहारोऽस्तं यन्निधनमेतद्बृहदादित्ये प्रोतꣳ स य एवमेतद्बृहदादित्ये प्रोतं वेद तेजस्व्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या तपन्तं[१] न निन्देत् तद् व्रतम् ॥ १४ ॥

### वैरूपसामप्रतिपाद्यभगवदुपासनम्

अभ्राणि संप्लवन्ते[२] स हिङ्कारो मेघो जायते[३] स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहार उद्गृह्णाति[४] तन्निधनमेतद्वैरूपं पर्जन्ये प्रोतꣳ स य एवमेतद्वैरूपं पर्जन्ये प्रोतं वेद विरूपाꣳश्च सुरूपाꣳश्च पशून[५]वरुन्धे सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या वर्षन्तं[६] न निन्देत् तद् व्रतम् ॥ १५ ॥

### वैराजसामप्रतिपाद्यभगवदुपासनम्

वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनमेतत् वैराजमृतुषु प्रोतꣳ स य एवमेतद्वैराजमृतुषु प्रोतं वेद विराजति प्रजया[७] पशुभिर्ब्रह्मवर्चसेन सर्वमायुरेति ज्योग्जीवति महान् प्रजया[८] पशुभिर्भवति महान् कीर्त्या ऋतून् न निन्देत् तद्व्रतम् ॥१६॥

---

१. आदित्यमित्यर्थः । २. सञ्चरन्ते । ३. वर्षणोन्मुखो भवति ।

४. रज आदिकमिति शेषः।

५. अजाविरूपात् गवाश्वरूपांश्चावरुन्धे प्राप्नोतीत्यर्थः।

६. पर्जन्यम् । ७. ज्ञानवेदयोर्ग्रहणम् ।

८. प्रसिद्धाः प्रजापशव इति न पुनरुक्तिः ।

## शक्करीसामप्रतिपाद्यभगवदुपासनम्

पृथिवी हिङ्कारोऽन्तरिक्षं प्रस्तावो द्यौरुद्गीथो दिशः प्रतिहारः समुद्रो निधनमेताः शक्कर्यो लोकेषु प्रोताः स य एवमेताः शक्कर्यो लोकेषु प्रोता वेद लोकीभवति[1] सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या लोकान्न निन्देत् तद् व्रतम् ॥ १७ ॥

## रेवतीसामप्रतिपाद्यभगवदुपासनम्

अजा हिङ्कारोऽवयः[2] प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनमेता रेवत्यः पशुषु प्रोताः स य एवमेता रेवत्यः पशुषु प्रोता वेद पशुमान् भवति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या पशून्न निन्देत् तद् व्रतम् ॥ १८ ॥

## यज्ञायज्ञीयसामवेद्यभगवदुपासनम्

लोम हिङ्कारस्त्वक् प्रस्तावो माꣳसमुद्गीथोऽस्थि प्रतिहारो मज्जा निधनमेतद्यज्ञायज्ञीयेषु प्रोतꣳ स य एवमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतꣳ वेदाङ्गीभवति[3] नाङ्गेन विमूर्च्छति[4] सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या संवत्सरं मज्ज्ञो नाश्नीयात्[5] तद् व्रतं मज्ज्ञु नाश्नीयादिति वा ॥ १९ ॥

---

१. उत्तमलोकवान् भवतीत्यर्थः ।

२. पूर्वोक्तानुवाद एकधिकविधानार्थम् ।

३. दृढाङ्गो भवति ।

४. न कुटिलो भवति ।

५. यः संवत्सरपर्यन्तं गुरुकुलवासी सः संवत्सरपर्यन्तं मज्ञो मत्तः सन्नाश्नीयात् । विहितभक्षणमपि न मत्तः सन् कुर्यादित्यर्थः । मज्ञुमदकारि सर्वदैव नाश्नीयात् ।

## राजनसामप्रतिपाद्यभगवदुपासनम्

अग्निर्हिङ्कारो वायुः प्रस्ताव आदित्य उद्गीथो नक्षत्राणि प्रतिहारश्चन्द्रमा निधनमेतद्राजनं देवतासु प्रोतꣳ स य एवमेतद्राजनं देवतासु प्रोतं वेदैतासामेव देवतानाꣳ [1]सलोकताꣳ [2]सार्ष्टिताꣳ सायुज्यं[3] गच्छति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या ब्राह्मणान्न निन्देत्[4] तद् व्रतम् ॥ २० ॥

## इतरसर्वसामप्रतिपाद्यभगवदुपासनम्

त्रयी विद्या हिङ्कारस्त्रय इमे लोकाः स प्रस्तावोऽग्निर्वायुरादित्यः स उद्गीथो नक्षत्राणि वयाꣳसि मरीचयः स प्रतिहारः सर्पा गन्धर्वाः पितरस्तन्निधनमेतत् साम सर्वस्मिन् प्रोतꣳ स य एवमेतत्साम सर्वस्मिन् प्रोतꣳ वेद सर्वꣳ ह भवति[5] ॥ १ ॥

तदेष श्लोको यानि पञ्चधा त्रीणि त्रीणि तेभ्यो न ज्यायः परमन्यदस्ति । यस्तद्वेद स[6] वेद सर्वꣳ सर्वा दिशो बलिमस्मै हरन्ति[7] । सर्वमस्मीत्युपासीत तद् व्रतं तद् व्रतम् ॥ २ ॥ २१ ॥

भा.– आदित्यनाम्नि पञ्चात्मन्यभिध्याते जनार्दने ।
पर्जन्यनाम्नि चत्वाख्ये लोकाख्ये पशुसञ्ज्ञके ॥

---

१. समानलोकतां २. सामीप्यम् । ३. एकदेहत्वरूपम् ।

४. ब्राह्मणेषु देवता सन्निधानेन तन्निन्दनेन देवतानिन्दनस्यैव प्राप्तेरिति भावः ।

५. यादृशी उन्नतिः स्वयोग्यातां सर्वात्मना प्राप्नोतीत्यर्थः ।

६. योऽधिकारी एतद्भगवद्रूपाणामेव परमज्यायस्त्वं वेद स सर्वं वेद सर्वशास्त्रार्थज्ञो भवति । अस्यैव सर्वशास्त्रार्थत्वात् ।

७. अस्मै ज्ञानिने सर्वादिशः सर्वदिग्वर्तिनो जनाः बलिं हरन्ति । इदन्तु चतुर्मुखे मुख्यम् । ''सर्वेऽस्मै देवा बलिमावहन्ति'' इत्युक्तेः ।

अङ्गाख्ये देवताख्ये च सर्वाख्ये च प्रतिष्ठितम् ।
बृहदाद्यं च यो वेद मुच्यते नात्र संशयः ॥

समुद्रेकात् समुद्रस्तु देशनाद्दिश उच्यते ।
लोपकत्वाल्लोम च स्यात्तवोरूपस्त्वगुच्यते ॥

मादनात् साररूपत्वात् मांसोऽस्थि त्वासनात् स्थिरम् ।
मदस्य जननान्मज्जा सोऽङ्गमन्तिगतत्वतः ॥

वायुर्ज्ञानात्तथायुष्ट्वान्नक्षत्रं च स्वतन्त्रतः ।
चन्द्रमाः परमानन्दात् त्रैविद्यो ज्ञानरूपतः ॥

वयांसि व्ययनाच्चैव वीत्याकाशस्तथोच्यते ।
तत्रायनाद्वयः प्रोक्तो मरीचिर्मितरुक्त्वतः ॥

सर्पस्सर्पणहेतुत्वात् गन्धर्वो गोधरत्वतः ।
पिता स सृष्टिहेतुत्वात् सर्वं पूर्णगुणत्वतः ॥
एतैर्नामभिरुद्दिष्टो भगवान् पुरुषोत्तमः ॥ इति च ।

**भाष्यविवृतिः–** बृहद्वैरूपवैराजनशाक्करीरेवतीयज्ञायज्ञीराजनसर्वाख्य-सामनिष्ठभगवदुपास्तिविधायकाष्टपर्वाणि तात्पर्यार्थोक्त्या युगपद्व्याचष्टे– **आदित्यनाम्नीत्यादिना** ॥ **मङ्गो** मत्तः । **मङ्गु** मदकारि । ब्रह्मविद्यात्व-स्फुरणाय केवलसमुद्रादिप्रतीतिं निवारयन् तत्खण्डगतसमुद्रादिशब्दान-निरुक्तान् भगवति निर्वक्ति– **समुद्रेकादित्यादिना** ॥ **तवोरूपः** प्रकाश-रूपः । **अस्थितु** स्थिरमासनात् । अन्तिकगतत्वतः । ज्ञानात्तथाऽ-युष्ट्वादिति द्वयमपि वायुशब्दार्थः ॥ व्ययनाद्वयांसीत्युक्तमेव विवृणोति– **वीत्याकाश इति** ॥ **मितरुक्त्वतः** प्रमितप्रकाशवत्वतः । गौर्भूर्भूर्धरोवा ॥

सर्वात्मकत्वेनात्मानमुपासीतेति प्रतीतिं निवारयंस्तावत्सर्वशब्दार्थमाह– **सर्वमिति** ॥

## "सर्वं ह भवति" इति वाक्यस्यैक्यप्रतिपादकत्वाभावकथनम्

**भा.– याद्दश्येवोन्नतिर्योग्या तस्याः सर्वात्मनाऽऽयतिः ।**
**सर्वभावस्तु विज्ञेयो न तु सर्वस्वरूपता ॥ इति च ।**

**न च सर्वस्वरूपता पुरुषार्थः । नारकित्वादेरपि प्राप्तेः[१] । न चार्थान्तरकल्पना युक्ता । प्रमाणाभावात् ।**

**असनान्मितिरूपत्वादस्मीत्युक्तः परो हरिः ।**
**तं सर्व इत्युपासीत पूर्णता सर्वता स्मृता ॥ इति च ।**

**सर्वमस्मीत्युत्तमपुरुषत्वे तेभ्यो न ज्यायःपरमन्यदस्तीति ज्यायः-परशब्दौ व्यर्थौ । अन्यस्यौभावात् । अतस्ततोऽन्यदस्तीति सिद्धम् । अतस्ततोऽन्यत् परमज्याय एव नास्ति। ज्यायो लक्ष्मीर्विद्यते । परमज्यायस्तु भगवानेव ।**

**भाष्यविवृतिः–** सर्वं ह भवतीत्येतदुपासकः सर्वात्मको भवतीति प्रतीतिं निवारयन् व्याचष्टे– **याद्दशीति** ॥ **आयतिः** प्राप्तिः[२] । सर्वभाव एव कस्मान्न स्यात् न स्यात् । प्रमाणेन व्याख्यातत्वादित्याशयवान् पूर्वपक्षं युक्तिं च विवक्षुर्निषेधति– **न चेति** ॥ विवक्षितामेव युक्तिमाह– **नारकित्वादेरिति** ॥ सर्वं ह भवतीत्यनेनात्मन्यविद्यारोपितवियदादिसर्व-

---

१. 'नरकित्वादेरपि' ह्पाठः ।

२. एतेन सर्वं ह भवतीत्यस्य सर्वेश्वरो भवति । निरुपचरितसर्वोत्तमत्वेहि दिग्भ्यो बलिप्राप्त्युपपत्तिरिति व्याख्यानं परास्ताम् । उपासके निरुपचरितसर्वेश्वरत्वस्य बाधितत्वात् ।

निवृत्तिर्भवेदित्यर्थ उपलक्ष्यत अतो नोक्तदोष इत्याशङ्क्य निषेधतिन चेति ॥ कुतो न युक्तेत्यतो लक्ष्यार्थे प्रमाणाभावादित्याह– **प्रमाणाभावादिति** ॥ भगवान् पूर्णगुणत्वतः सर्वमिति व्याख्यातं तद्युक्तम् ॥ तथासत्यस्मीत्युत्तमपुरुषानुपपत्तेरित्यतस्तत्कारणमेवेत्याशयवांस्तदर्थं वदन् वाक्यार्थमाह– **असनादिति** ॥[1] सर्वं यस्मिन्नारोपितं तदधिष्ठानमस्मीत्युत्तमपुरुषत्वेन सर्वाभावोऽर्थः किं न स्यादित्यतस्तत्र बाधकमाह– **सर्वमिति** ॥ कुतो व्यर्थावित्यत आह– **अन्यस्येति** ॥ अस्मीत्यस्योत्रमपुरुषत्वेन सर्वाभावे विवक्षिते सर्वस्यैवाभावात्तेभ्योऽन्यन्नास्तीत्येव स्यान्न ज्यायःपरमित्यर्थः । बाधकान्तरमाह– **अत इति** ॥ **अतः** ज्यायःपरशब्दाभ्यामिति यावत् ॥ ततस्तेभ्योऽन्यदस्तीति सिद्धमतस्तदभावो न युक्त इत्यर्थः । कस्तर्हि तद्वाक्यार्थ इत्यपेक्षायां तमाह– **अतः ज्यायःपरशब्दयोर्वैय्यर्थ्यप्रसङ्गादिति** ॥[2] ततस्तेभ्य इत्यर्थ इति वाक्यशेषः । परत्वविशेषणव्यावर्त्यमाह– **ज्याय इति** । परमज्यायस्तु नास्तीति वाक्यशेषः । अन्यस्य परमज्यायस्त्वनिषेधे लब्धमाह– **परमेति** ॥

## "सर्वमस्मि" इति वाक्यस्यापि ऐक्यपरतानिरासः

**भा.– जीवैक्याङ्गीकारे यस्तद्वेदेति तच्छब्दोऽप्ययुक्तः । तदा स्वात्मानं वेदेत्येव स्यात् । न च प्रसिद्धभेदानुवादः[3] । श्रुतिं विना तत्स्वरूपस्यैवासिद्धेः तद्भेदस्यातिशयेनासिद्धिः । ऐक्य ईश्वरस्य स्वज्ञानमस्तीति न तद्रूपस्य जीवस्याज्ञानादिकं युज्यते । औपाधिकभेदाङ्गीकारेऽप्युपाधिरुभयोरैक्यादुभयोरप्यज्ञत्वं कुर्यात् । उपाधिनिमित्तदोषाश्चोभयोरपि स्युः । उपाधिसम्बन्धस्य समत्वात् । उपाधिसम्बन्ध-**

१. निरसनात् । मितिरूपत्वाज्ज्ञानरूपत्वादित्यर्थः ।

२. ब्रह्माद्यपेक्षया इति शेषः ।

३. प्रसिद्धभेदस्यानुवादः ह्पाठः ।

**स्यास्मिन्नन्यथा तस्मिन्नन्यथेति विशेषार्थमयमसाविति भेदस्योपाधिं विना स्वत एवापेक्षितत्वात् । अतः स्वतो भिन्नस्यैवोपाधिना विशेषो भवति ।**

**भाष्यविवृतिः–** सर्वमिथ्यात्मैक्यस्यैवाङ्गीकारे बाधकान्तरमाह– **जीवैक्येति** ॥[१] अयुक्तत्वमेव व्यनक्ति**तदेति** ॥ जीवब्रह्मभेदादिकं लोकसिद्धम् । तत् स वेद सर्वमित्यनूद्यतेऽतो नायुक्तत्वमित्याशङ्क्य निषेधति– **नचेति** ॥ कुतो न भेदस्यानुवाद इत्यत आह– **श्रुतिमिति** ॥[२] तत्स्वरूपस्येश्वरस्वरूपस्य जीवब्रह्मैक्ये बाधकान्तरमाह– **ऐक्य इति** ॥ स्वप्रकाशत्वेन स्वज्ञानमस्तीति योज्यम् ॥ ब्रह्मणो जीवस्योपाधिभेदभावादज्ञानादि युज्यत इत्यत आह– **औपाधिकेति** ॥ ऐक्यसम्बन्धस्योभयत्र समत्वाच्च न केवलमज्ञत्वमुपाधिनिमित्तम् । दुःखादयोऽन्येच दोषाः स्युरिति भावेनाह– **उपाधीति** ॥ समत्वादुभयत्रेति शेषः । उपाधिसम्बन्धस्योभयत्र समत्वेऽपि जीवभाग एव कार्यं करोति न ब्रह्मभाग इत्यतस्तस्य जीवब्रह्मणोः स्वाभाविकभेदेन विनाऽयुक्तेरित्याह– **उपाधीति** ॥ कुत उपाधेरभेदकत्वादिति वाक्यशेषः ।[३]

---

१. सर्वमस्मीत्यस्यार्थत्वेनेति शेषः । जीवस्योपासकस्य सर्वचैतन्याङ्गीकारे इत्यर्थः ।

२. इदमुक्तं भवति । भेदस्तावद्धर्मिप्रतियोगिप्रतीतिसापेक्षप्रतीतिकः । तत्रेश्वरधर्मिको जीवप्रतियोगिको वा जीवधर्मिक ईश्वरप्रतियोगिको वा भेदः प्रमाणान्तरसिद्ध इति वक्तव्यम् । तत्र यद्यपि जीवः साक्षिवेद्यः । तथाऽपीश्वरसिद्धिर्न तावच्छ्रुतिव्यतिरिक्तप्रमाणेन । स्वभावविप्रकृष्टतया प्रत्यक्षतोऽसिद्धत्वात् । विपर्ययेणाप्यनुमातुं शक्यत्वेन केवलानुमानासिद्धत्वाच्च । ततश्च श्रुतिं विनेश्वरस्वरूपस्यैवासिद्धेर्धर्मिप्रतियोगिप्रतीत्यभावे तद्भेदस्य सुतरामसिद्धिरिति कथं तद्वाक्यानामनुवादकत्वं दौर्बल्यं वा भवेदिति श्रुत्यैवेश्वरस्तद्भेदो वा सिद्ध इति ''यस्तद्वेद'' इत्यादिस्तदनुवाद इत्यङ्गीकारे तेनैव वाक्येनाभेदवाक्यस्य बाधः स्यादिति हृदयम् ।

३. अस्मिञ्जीवभागे । अन्यथा ब्रह्मभागापेक्षया स्वकार्यकारित्वमिति यावत् । तस्मिन् ब्रह्मभागे । अन्यथा जीवभागापेक्षया स्वकार्याकारित्वमिति यावत् । उपाधि-

ननु घटमठाद्युपाधेराकाशभेदकत्वदर्शनात्कथमुपाधेरभेदकत्वमित्यत आह– **अत इति ॥** अतोऽसम्बद्धस्योपाधेरभेदकत्वात् सम्बद्धस्य च भेद्यसर्वसम्बन्धिनोऽभेदकत्वात् भागे सम्बद्धस्य भेदकत्वस्य वक्तव्यत्वात् । भागस्य तदुपाधिसम्बन्धकृतत्वेऽन्योन्याश्रयप्रसङ्गादुपाध्यन्तरकृतत्वे उक्त-न्यायेनानवस्थादिप्रसङ्गादुपाधेरभेदकत्वेन स्वतोऽभिन्नस्यैव विद्यमानस्यैव भागस्य घटाद्युपाधिना विशेषो भेदज्ञानं भवतीत्यर्थः ।

भा.– **यस्तु भिन्नः स्वतः खादिस्तस्य भेदो ह्यबुद्धिनाम् ।**
**उपाधिभिर्ज्ञाप्य एव न तु भेदं स्वयं सृजेत् ॥**

**उपाधिरप्यभिन्नस्य भेदं साधयितुं क्वचित् ।**
**न क्षमः सिद्धभेदस्य ज्ञापकः स्यादबुद्धिनाम् ॥**
**आकाशा अप्यतस्त्वेते अनन्ता अप्कणादिवत् ॥**

**इति ब्रह्मतर्के ।**

**अतो न जीवेशाभेदः ।**

**न तु देवः स्वयं भूत्वा देवदेवं समर्चयेत् ।**
**समानव्यवहारे हि न पूज्यः पूजको भवेत् ॥**

**इति च परमसंहितायाम् ।**[१]

---

सम्बन्धस्योभयत्र समत्वेऽप्युपाधि जीवभाग एव स्वकार्यं करोति न ब्रह्मभाग इति वदन् प्रष्टव्यः । जीवब्रह्मणोरैक्यमुत भेद इति । नाद्यः । उक्तविशेषार्थमयमसाविति निर्देशविषयत्वेन भेदस्यैवापेक्षितत्वात् । द्वितीये स किमौपाधिकः स्वाभाविको वा । नाऽद्यः । आत्माश्रयाद्यापातेन भेदस्योपाधिं विना स्वत एवापेक्षितत्वात् । न द्वितीयः । विवादपर्यवसानापत्तेः । उपाधिसङ्कीर्तनवैफल्याच्चेति भावः । मुखप्रतिमुखयोरपि स्वाभाविकभेदस्य सत्त्वान्न दृष्टान्तः सम्प्रतिपन्न इति हृदयम् ।

१. ''इति परमसंहितायाम्'' पाठान्तरम् ।

**भाष्यविवृतिः**– उपाधिर्न भेदकः किं तु विद्यमानस्यैव भेदस्य ज्ञापक इत्यत्र वृद्धसंमतिं चाह– **य इति** ॥ अबुद्धीनामज्ञानं उपाधिर्भेदं न कुतः सृजेदित्यतोऽक्षमत्वादित्याह– **उपाधिरिति** ॥ अभिन्नस्यापीत्यपिशब्द-सम्बन्धः । औपाधिकभेदाङ्गीकार इत्यादिना सिद्धमाह– **अत इति** ॥ अत उक्तरीत्या जीवेशयोर्भेदस्योपाधिकृतत्वायोगान्न जीवस्य ईशेनाभेद इत्यर्थः । इतोऽपि न सर्वमस्मीत्यत्राभेदोऽर्थ इत्याह– **नन्विति** । **समानव्यवहारे** समत्वज्ञाने । सुतरामैक्यज्ञाने पूज्यपूजकभावानुपपत्तिरिति भावः ।

## जीवब्रह्मैक्यस्य प्रमाणविरुद्धतोपपादनम्

**'अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान् ह्यतर्क्यमणुप्रमाणात् प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ'**

**'अन्यदेव तद्विदितादथो अविदितादधि' ।**

**'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् ।**
**अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यति तद्वद ॥'**

**'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' ।**

**'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति' ।**

**'इदं ज्ञानमुपाश्रित्य[१] मम साधर्म्यमागताः' ।**

**'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता ।**
**आधिपत्यमृते चैव भोगेन विषयेण च ॥**
**आनन्दादीनृते मुक्तास्सर्वे ते ब्रह्मणस्समाः ॥' इत्यादेश्च ।**

**भाष्यविवृतिः**– जीवब्रह्मणोरभेदं दूषयित्वा तयोर्भेदः कुतः सिद्ध इत्यतस्तं प्रमाणैः समर्थयते– **अनन्य इत्यादिना** ॥ तर्काविषयत्वादतर्क्यम् ।

१. ''अपाश्रित्य'' इ॒पाठः ।

प्रमाणादणु इन्द्रियप्रमाणादणु इन्द्रियातीतत्वाच्चाणीयान् । ब्रह्मागमगम्यम् । अत्रागमे चानन्यप्रोक्तेऽद्वैतवादिना व्याख्याते गतिर्ज्ञानं नास्ति । किंतु अन्येन भेदज्ञानिना प्रोक्ता वेदादिवाक् सम्यग्ज्ञानाय भवति ॥ प्रेष्ठेति कस्यचित् सम्बुद्धिः[१] । अविदितात् अधि अधिकम्[२]– **कृताकृतात्** नित्यानित्याभ्याम् । कृतादन्यत्वम् । कृतं विशदयन्नाह– **अन्यत्रेति** ॥[३] एवं मुनेर्विजानत आत्मा भवतीति ग्राह्यम् । **भोगो** विषयानुभवः । **विषयो** लक्ष्म्यादिः ॥ दुःखादि-राहित्येन समाः ।

## सत्यपि अधिष्ठानभेदे भगवद्रूपाणां भेदाभावनिरूपणम्

**भा.– प्रद्युम्नादीनि रूपाणि त्रीणि त्रीण्येव पञ्च च ।**
**ऋगादिस्थानभेदेन नित्याभिन्नानि चेशनात् ॥**
**इति सामसंहितायाम् ।**

**भाष्यविवृतिः**– सर्वमस्मीत्यत्र जीवेशाभेदमाशङ्क्य तन्निषेधोऽयुक्तः । कुतस्त्रयीविद्येत्याद्युक्त[४] विद्यालोकादिभावस्योक्तेः इत्यतोऽस्मद्रीत्या प्राप्तत्वात् निषिध्यत इति भावेनाह– **प्रद्युम्नेति** ॥ ऋगादिस्थानभेदेन तिष्ठन्ति ।

१. नचिकेतसं प्रति यमस्य सम्बुद्धिः ।

२. विदितादविदिताच्चाधि अधिकमित्यर्थः ।

३. यथा चेदमभेदेऽपि न सावकाशं तथोक्तमन्यत्र । तद्ब्रह्म विदिताद् व्यक्तादन्यदेव । अविदितादव्यक्ताच्चान्यदेवेति सम्बन्धः । न केवलमेतावत् । किन्तु विदिताद-विदिताच्चाधि अधिकमित्यर्थः । अव्ययानामनेकार्थत्वाद् अन्यत्रेत्यस्यान्यदित्यर्थः । धर्मात् पुण्यात्मनो जीवादन्यत् । अधर्मादधर्मात्मनो जीवादन्यत् । न केवलं चेतनादेव किन्तु कृताकृतादचेतनादप्यन्यत् । न केवलं वर्तमानादेव । किन्तु भूताद् भव्याच्चान्यत् "तद्ब्रह्म यद् यथा पश्यसि तत् तथा वद" इति यमं प्रति नचिकेतसः प्रार्थनम् । "नित्यो नित्यानाम्" इति स्पष्टार्थम् ।

४. कुतस्त्रयीविद्येत्यत्र खपाठः ।

## भेदस्य मिथ्यात्वनिरासः

**भा.– दृष्टवस्तुनो मिथ्यात्वाङ्गीकारे च युक्त्यपेक्षा । न तु सत्यत्वे ।**

**दृष्टस्य सत्यतायां तु युक्तिर्वाऽयुक्तिरेव वा ।**
**भूषणं तस्य मिथ्यात्वे युक्त्यभावोऽतिदूषणम् ॥**
**युक्तिश्च दोष एव स्याद्बलवन्मानवर्जिता ॥ इति ब्रह्मतर्के ।**

**न च शून्यत्वमिथ्यात्वयोः कश्चिद्विशेषः । तत्प्रमाणाभावात् । अतः सत्य एव भेदः ।**

**भाष्यविवृतिः–** ननूदाहृतवचनानां मिथ्याभेदविषयत्वान्नाद्वैतवादिनां तद्विरोधः । अपितु भेदसत्यत्वप्रतिपादकेन । तच्च नोक्तमित्यतः प्रमाणसिद्धस्य भेदस्य युक्तिं विना मिथ्यात्वाङ्गीकारायोगादित्याशयवांस्तत्र न्यायमाह– **दृष्टेति** ॥[१] तत्रैव वृद्धसम्मतिमाह– **दृष्टस्येति** ॥[२] युक्तिर्युक्तिसद्भावः । अयुक्तिर्युक्त्यभावः । मिथ्यात्वे दृश्यत्वादियुक्तिरस्तीत्यतो न यादृशतादृशयुक्तिर्मिथ्यात्वसाधिका । किं तु व्याप्तिपक्षलिङ्गादिग्राहकबलवन्मानवती । प्रकृतातु तद्रहिता तद्विरुद्धा चेत्याह– **युक्तिश्चेति** ॥[३] भेदवचनानां मिथ्याभेदो विषय इत्युक्तं तदयुक्तं । तथात्वे शून्यविषयत्वेन व्यवहारसत्यप्रामाण्याभावः स्यात् । न स्यात् । शून्यविविक्तमिथ्याभेदस्य विद्यमानत्वादित्यत आह– **नचेति** ॥ अनिर्वचनीयं मिथ्यापि निरुपाख्यं

१. प्रमाणसिद्धवस्तुनः इत्यर्थः ।

२. दृष्टस्य सत्यतायां युक्तिः प्रमाणसद्भावश्च भूषणमेव । प्रत्यक्षसिद्धे प्रमाणान्तरसंवादे दार्ढ्यसिद्धेः अयुक्तिः प्रमाणाभावश्चेदपि भूषणमेव । न तु दूषणम् । अपवादाभावे दृष्टेरेव सत्यतायां मानत्वादिति भावः । तस्य दृष्टस्य मिथ्यात्वे युक्त्यभावः प्रमाणाभावोऽतिदूषणं प्रमाणविरोधैक-गम्यत्वात् तन्मिथ्यात्वस्येति भावः ।

३. यद्वा बलवन्मानवर्जिता तद्विरुद्धा युक्तिर्दोष एव वक्तुर्दूषणमेवेत्यर्थः ।)

शून्यमिति महान्विशेषोऽस्तीत्यत आह– **तदिति** ॥ तत्र प्रसङ्गसिद्ध-मर्थमाह– **अत इति** ॥ **अतः** भेदस्य मिथ्यात्वे भेदप्रमाणानां व्यवहार-प्रमाणत्वस्यापि दुर्लभत्वप्रसङ्गात् ।

## भेदसत्यतायाः प्रामाणिकत्वनिरूपणम्

**भा.– न च कदाचित् कस्यापि नासीदस्ति भविष्यतीति बुद्ध्यभावे व्यावहारिकसत्यमित्यत्रास्माकं विरोधः । तद्भावे च न शून्याद्विशेषः । 'सत्यमेनमनुविश्वे मदन्ति' इत्यादिश्रुतेश्च सत्यो भेदः ।**

**प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।**
**मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥**

**विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।**
**उपदेशादयं वादोऽज्ञाते द्वैतं न विद्यते ॥ इत्यादिश्रुतेश्च ।**

**प्रपञ्चो भेदः यदि विद्येत भवेत उत्पद्येत तर्हि निवर्तेत । अतो न जीवेश्वरादिभेद उत्पद्यते किन्तु नित्य एव । अतो मायया भगवत् प्रज्ञानेन मातं रतं च मात्रम् । भगवाञ्जानाति रमते चास्मिन् भेद इति। तच्च भगवद्रूपमद्वैतम् । परमार्थो भगवांस्तद्रूपेणाद्वैतम् । यदद्वैतं नामोच्यते तत्परमार्थभगवदपेक्षयेत्यर्थः । स्वगतभेदो भगवति नास्ती-त्युक्तम् । न च कल्पनामात्रो भेदः । यदि केनचित् कल्पितो विकल्प-स्तथापि निवर्तेत । तस्मादुपदेशादयमेव वादः । केनापि तत्प्रसादं विनाऽविज्ञातत्वादज्ञातो भगवांस्तद्गतो भेदो न विद्यते इति ।**

भाष्यविवृतिः– ननु व्यवहार एव सन् भेदः न तु परमार्थतोऽतः कथं भेदः सत्य एवेत्यतो विवेकेनोत्तरमाह– **न चेति** ॥ एवं प्रमाणप्रतीतभेदस्य सत्यत्वं विरुद्धयुक्त्यभावे स्वत एव सिध्यति । न पुनस्तत्सत्यत्वे प्रमाण-

मभिधेयमिति साधितम्। इदानीं भेदसत्यत्वे श्रुतिं पठति– **सत्यमिति** ॥ अत्र सत्यः सो अस्य महिमेति महिम्नः सत्यत्वश्रवणात्, तस्यैव भेदत्वादित्यर्थः[1]। तत्रैव मानान्तरं पठति– **प्रपञ्च इति** ॥ कथमेतद्वचनद्वयं भेदसत्यत्वपरमित्यपेक्षायां वचनद्वयं क्रमेण व्याख्याय दर्शयति – **प्रपञ्चो भेद इत्यादिना** ॥ विद्धातोः सत्तार्थत्वेन विद्येतेत्यस्य भवेतेति भवनार्थत्वे भवनस्य कादाचित्कत्वे विवक्षिते उत्पत्तिरर्थः। अथवोत्पत्यर्थश्च विदिधातुरिति भावेनोक्तम् **उत्पद्येतेति** ॥ **तर्हि निवर्तेतेति**। परं न च निवर्तत इति ग्राह्यम्। प्रसङ्गस्य विपर्यये पर्यवसानमाह**अत इति**। उत्पत्यभावे किमायातं भेदस्येत्यत आह– **किं त्विति** ॥ अनादिरित्यपि ग्राह्यम् ॥ एवं भेदस्य अनादिनित्यत्वपरं पूर्वार्धं व्याख्यायेदानीं मायामात्रमिदं द्वैतमिति भेदसत्यत्वप्रतिपादकपादगतस्य मायामात्रपदस्य प्रकृतं हेतूकृत्यावयवार्थपूर्वमर्थमाह– **अत इति** ॥ **मातं** विषयीकृतम्। तात्पर्यार्थमाह– **भगवानिति** ॥ रमते चास्मिन् भेदे भेदमङ्गीकरोतीत्यर्थः।[2] ननु कथं भेदस्य सत्यत्वं नेह नानास्ति किञ्चनेति निषिद्धत्वादित्यतस्तद्व्याचष्टे**तच्चेति** ॥ कथमेतच्छब्दलब्धमित्यतः पदार्थोक्त्या दर्शयति[3] **परमेति**[4]।

तद्रूपेणेति तसेरर्थः। अनेन नेह नानास्ति किञ्चनेति श्रुतेः किमुक्तं भवतीत्यतस्तात्पर्यार्थमाह– **यदद्वैतमिति** ॥ किमिदं भगवदपेक्षयाऽद्वैतत्वमित्यपेक्षायामाह– **स्वगतेति** ॥ स्वरूपावयवगुणक्रियादिभेदः स्वगतभेदः। उक्तं नेह नानेति श्रुत्येति शेषः। मायामात्रत्वेन भेदस्य सत्यत्वं प्रसाध्य बाधकाभावेन च सत्यत्वं साधयितुं प्रवृत्तं विकल्प इति

---

१. ''एनमनु विश्वे मदन्ति'' इत्येतत्सत्यमित्यनेन जीवेश्वरयोरुपजीव्योपजीवकभावः सत्य इत्युच्यते। तच्च भेदमिथ्यात्वे न युक्तमित्यर्थः।

२. यद्वाऽस्मिन् भेदे सति ब्रह्मादिभिः क्रीडते इत्यर्थः।

३. परेति खपाठः।    ४. परमार्थत इति भाष्यपाठोयम्।

वाक्यं व्याख्यातुं सङ्गतिं करोति– **न चेति** । इतश्च न भेदः कल्पनामात्रार्थो मिथ्येत्यर्थः । सङ्गतं वाक्यं व्याकरोति– **यदीति** । विकल्पो भेदो यदि केनचित् कल्पितः आरोपितः तथा तर्हि विनिवर्तेतापि बाध्येतापि ॥ न च निवर्तते तस्माच्च सत्य इति शेषः । एवं सत्यत्वेऽपि कथं नाना नास्तीत्युक्तिरित्यतोऽस्योपदेशागम्यत्वादिति प्राप्तमुपदेशादयं वाद इति तद्व्याचष्टे– **तस्मादिति** ॥ तस्माद्भेदस्य सत्यत्वादुपदेशात्[1] अयमेव सतां वाद इत्यर्थः ॥ उपदेशाद्भवन् सतां वादः क इत्यतः प्राप्तमज्ञाते द्वैतं न विद्यत इति तद्व्याचष्टे– **केनापीति** ॥[2]

भा.– **जीवेश्वरगतो जीवेष्वथ जीवजडात्मनोः ।**
**जडेशयोर्जडेष्वेवं पञ्चभेदः प्रपञ्चकः ॥**

**प्रकृष्टमोक्षहेतुत्वात् तज्ज्ञानं[3] प्रेति कथ्यते ।**
**प्रकृष्टपञ्चकत्वाद्वा प्रपञ्चोऽयं प्रकीर्तितः ॥**

**यद्ययं सादिरेव स्यान्निवर्तेत कदाचन[4] ।**
**न निवर्तते यतस्तेन नायं सादिर्भवेत् क्वचित् ॥**

**मायेति विष्णुविज्ञानं तन्मितत्वाच्च न क्वचित् ।**
**भ्रान्तत्वमस्य यद्विष्णोर्नैव भ्रान्तिः कदाचन ॥**

**रमते चात्र यद्विष्णुर्न हि भ्रान्तौ रमेद्धरिः ।**
**परमार्थे हरौ नैव भेदोऽस्ति जडजीववत् ॥**

---

१. उपदेशात् अद्वैतं बुध्यत इत्याद्युपदेशादित्यर्थः ।

२. ब्रह्मादिभिर्ज्ञातत्वात् तत्प्रसादं विनेत्युक्तम् ।

३. ''तज्ज्ञाने'' हृपाठः । ४. ''कथञ्चन'' प्रपाठः ।

**यद्ययं कल्पितो भेदः कस्मान्नैव निवर्तते ।**
**तस्माद्भूतभविष्याख्यभवदाख्यपराभिधाः ॥**

**तदन्ये चैक एवास्मिन्नोङ्काराख्ये जनार्दने ।**
**अज्ञातनामके तस्मिन्न भेदोऽस्ति कथञ्चन ॥ इति ब्रह्मतर्के ।**

**भाष्यविवृतिः–** नन्वापाततः प्रपञ्चमिथ्यात्वपरत्वप्रतीतेः कथं भेदसत्यत्वपरतया वाक्यद्वयोदाहरणं कथं च भेदः प्रपञ्च इत्यतः तत्प्रदर्शनाय समाख्याप्रमाणमाह– **जीवेश्वरगत इति** ॥ ननु यद्भूतं भवद्भविष्यदिति तत्सर्वमोङ्कार एवेति सर्वाभेदोक्तेः पूर्वत्र कथमत्र भेदसत्यत्वसमर्थनमित्यतस्तस्याभिप्रायमाह– **तस्मादिति** ॥ **तस्मात्** भेदसत्यत्वात् । भूतभवद्भविष्यदाख्यवस्तुपराः भूतं भवद्भविष्यदित्यभिधाः तदन्येच शब्दा एक एव एकस्मिन्नेवास्मिन्नोङ्काराख्ये जनार्दने वर्तन्त इति योजना ॥ एवमभिप्रायत्वात्तस्य नात्र भेदसत्यत्वसमर्थनस्यायुक्तिरिति भावः ।

**भा.– विदिः कादाचित्कस्वरूपलाभ इति च धातुः । भिद्येतेतिवद्विद्येतेतिशब्दः । परमार्थत इति विश्वतश्चक्षुरितिवत् सप्तम्यर्थे । परमार्थे द्वैतभाव एवेत्यर्थः । परमार्थः परमात्माऽद्वैत इति प्रथमार्थो वा । न हि विद्यमानं निवर्तत इति नियमः । उत्पद्यमानं हि प्रायो निवर्तते । जीवेश्वरप्रकृत्यादिकं बहुलं हि विद्यमानं न निवर्तते । न च कल्पितो विकल्प इति पक्षे कल्पितो यदीति यदिशब्दो युज्यते । न च "निवर्तेत न संशयः" विकल्पो विनिवर्तेत कल्पितो यदि इत्यादिनाऽनिष्टापादनरूपः शब्दो युज्यते । कल्पितत्वं चेच्छ्रुतेरभिप्रायः अविद्यमानोऽयं प्रपञ्चो निवर्तते कल्पितो विकल्पो विनिवर्तत इत्येव शब्दः स्यात् । न तु निवर्तेतेति । अतः सत्यताविषयमिदं वाक्यम् ।**

**असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।**
**एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ॥ इति निन्दनाच्च ।**

**'विद्यात्मनि भिदाबोधः' 'जुष्टं यदा पश्यत्यन्यमीशमस्य' इत्यादि भेदज्ञानस्य प्रशंसनाच्च । अतोऽसनान्मितत्वाच्चास्मीति भगवान्नामैवैतत् ॥ २१ ॥**

**भाष्यविवृतिः**— ननु विदिधातुः प्रसिद्धव्याकरणे सत्तालाभार्थत्वेन व्याख्यातः । अतः कथमुत्पत्यर्थो व्याख्यायत इत्यतो व्याकरणान्तरे एवं व्याख्यातत्वादिति तत्पठति ॥ **विदिरिति** ॥ इति धातोः[१] धातुव्याख्यानात् । प्रसिद्धव्याकरणे तदर्थत्वेनाव्याख्याततत्वात्तदनङ्गीकारे तत्र भिदिधातुरस्मादयं भिन्न इत्यन्योन्याभावार्थत्वेन व्याख्यात इति तदर्थोऽपि न स्वीक्रियेत स्वीक्रियते च । तद्वदिहापि स्वीक्रियतामित्याह— **भिद्येतेतिवदिति** । परमार्थत इति तसिः तद्रूपेणेति तृतीयार्थो व्याख्यातः । साम्प्रतं सप्तम्यर्थत्वेन च व्याख्याति— **परमार्थत इति** ॥ तसिः सप्तम्यर्थः क्व दृष्ट इत्यत उक्तम् ॥ विश्वस्मिन्नङ्गे चक्षुर्यस्यासौ **विश्वतश्चक्षुरितिवदिति** ॥[२] तसेः सप्तम्यर्थत्वे वाक्यस्य कोऽर्थः संपन्न इत्यत आह— **परमार्थ इति** ॥ तसेरित्थम्भूततृतीयार्थत्वेन प्रथमार्थत्वमङ्गीकृत्य वाक्यार्थमाह— **परमार्थ इति** ॥ विदिधातोरुत्पत्यर्थत्वमनङ्गीकृत्य सत्तार्थत्वाङ्गीकारे व्याप्तिभङ्गं बाधकमाह— **नहीति** ॥ नियमो व्याप्तिः । तर्ह्युत्पत्यर्थत्वे नियमः स्यात्किमित्यत आह— **उत्पद्यमानमिति** ॥ प्रध्वंसव्युदासार्थं प्राय इत्युक्तम् ॥[३] विद्यमानस्य निवृत्या नियमभङ्ग उक्तः । तमेव स्थलोक्त्या

---

१. धातुः

२. यथा विश्वत इति तसिः सप्तम्यर्थे तथा परमार्थतः इति तसिरपि सप्तम्यर्थे वर्तत इत्यर्थः ।

३. प्रायः प्रचुरं बहुलमिति भावः ।

दर्शयति– **जीवेति** ॥ वाक्यद्वयस्य भेदसत्यत्वपरत्वं प्रसाध्य भेदमिथ्यात्वपरत्वाङ्गीकारे बाधकमाह– **न चेति** ॥ बाधकान्तरमाह– **न च निवर्तेतेति** ॥ विनिवर्तेतेति शब्दः कुतो न युज्यत इत्यत उक्तम्– **अनिष्टापादनरूप इति** । अनिष्टत्वस्फोरणाय कल्पितत्वपक्षे प्रयोगप्रकारं दर्शयति– **कल्पितत्वमिति** ॥ वाक्यद्वयस्य भेदस्य कल्पितत्वपरत्व-दूषणस्योपयोगमाह– **अत इति** । अत **उक्तात् बाधकात्** ॥ भेदासत्यत्ववादिनां निन्दनाच्च न भेदासत्यत्वपरमिदं वाक्यद्वयमिति निन्दावाक्यं पठति– **असत्यमिति** ॥ भेदज्ञानस्य प्रशंसनाच्च भेदसत्यत्व-परमिदं वाक्यद्वयमित्याशयेन तद्वाक्यं पठति– **विद्येति** ॥[१] अस्मीत्यस्योत्तमपुरुषत्वाभावं प्रसाध्योपसंहरति – **अत इति** । **इति खण्डाष्टकम्** ॥ १४-२१ ॥

## अथ द्वाविंशः खण्डः

## सामगानस्य ध्वनिप्रभेदाः

**उप.– विनर्दि साम्नो वृणे पशव्यमित्यग्नेरुद्गीथोऽनिरुक्तः प्रजापतेर्निरुक्तः सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णं बलवदिन्द्रस्य क्रौञ्चं बृहस्पतेरपध्वान्तं वरुणस्य तान् सर्वानेवोपसेवेत वारुणं त्वेव वर्जयेत् ॥ १ ॥**

**भा.– सर्वदा समत्वात् साम भगवान् । तस्योद्गानप्रकारो विनर्दिवृषभस्वरवन्मेघनर्दनवद्वा । तदेव वृणे । सर्वोत्तमत्वात् ।**

**विष्णोः स्वरो वृषभवन्मेघनादवदेव वा ।**
**स्त्रीपशुस्वरवद् वह्नेर्गम्भीरोऽनुपमो विभोः ॥**

**ब्रह्मणस्त्वथ सोमस्य साक्षाद्घण्टानिनादवत् ।**
**मृदुमेघस्वरो वायोरिन्द्रस्य स्तनयित्नुवत् ॥**

---

१. आत्मनि परमात्मनि जीवादिभ्यो भेदज्ञानमेव विद्येत्यर्थः ।

**वृहस्पतेः क्रोञ्चवच्च वरुणस्य तु विस्वरः ।**
**एकस्य पादवर्षस्य स्वरो विष्णोरुदाहृतः ॥**
**वायोर्विंशतिवर्षस्य ब्रह्मणस्तु तदन्तरा ॥ इति च ।**
**गायेदेतैः स्वरैस्तस्माद्यथाशक्ति न विस्वरम् ।**

**भाष्यविवृतिः**– सामनाम्नो भगवतो व्यस्तसमस्तसाम्नोपास्तिरभिहिता । तत्र साम्न उद्गानप्रकारं सप्रभेदमाह– **विनर्दीत्यादिना** ॥ अग्नेर्गानं **पशव्यं** पशुस्वरवत् । **उद्गीथ** उद्गानम् । अनिरुक्तोऽनुपमम् । **निरुक्त** उपममिति । **क्रौञ्चं** क्रौञ्चस्वरवत् । **अपध्वान्तं** विस्वरम् ।[1] तान्सर्वानिवोपसेवेत ॥ उद्गाता तदुद्गानवदुद्गायेदित्यर्थः ॥ १ ॥

विनर्दि साम्न इति पदयोरर्थाप्रतीतेस्तावाह– **सर्वदेति** ॥ भगवद्विनर्दनमेवोपमयाऽऽह– **वृषभेति** ॥ पदार्थानुक्त्वा योजयति **तदेवेति** ॥ तद्वरणे कारणमाह– **सर्वोत्तमत्वादिति** ॥ अप्रतीतेः पर्व प्रमाणेन व्याचष्टे– **विष्णोरित्यादिना** ॥ **स्तनयित्नु** स्तीव्रगर्जनम् । मेघनादवत् गम्भीरोऽनुपमः । मृदुमेघस्वरवदिति विष्णुब्रह्मवायुगतानां गम्भीरत्वमुक्तम् । तस्यैकप्रकारत्वप्रतीतिं निवारयन् विशेषमाह– **एकस्येति** ॥ **एकस्य** एकवृषभस्य पादवर्षसहितस्य यून इति यावत् । वृषभस्य स्वर इव विष्णोः स्वर उदाहृत इत्यर्थः । **तदन्तरा** विंशतिवर्षादर्वाग्वर्षस्य । तान् सर्वानेवोपसेवेत । एतैः सर्वैर्गायेदिति देवोद्गानसदृशोद्गानं विधानमयुक्तमशक्यत्वादित्यतस्तस्याभिप्रायमाह– **तस्मादिति** ॥ विस्वरस्यानर्थहेतुत्वात् ॥

**उप.– अमृतत्वं देवेभ्य आगायानीत्यागायेत् स्वधां पितृभ्य आशां मनुष्येभ्यस्तृणोदकं पशुभ्यः स्वर्गं लोकं यजमानायान्नमात्मन आगायानीत्येतानि मनसा ध्यायन्नप्रमत्तः स्तुवीत ॥ २ ॥**

१. भिन्नकांस्यरवसममिति यावत् ।

भा.– अधिकारी सदौद्गात्रे मुख्यतः प्राण एव यत् ॥
अतो मोक्षादिदाने स देवादीनां क्षमो भवेत् ।
अन्येषां स ददातीह मद्भृदिस्थ इति स्मृतिः ॥

कार्या हि नान्यथा कुर्यादवमन्ताऽन्यथा भवेत् ।
देवानां मोक्षदानादौ न हि मानुष ईश्वरः ॥

अतः प्राणो हृदिस्थो मे ददातीति स्मृतिर्भवेत् ।
सङ्कल्पोक्त्यादिकर्ता च प्राण एव यतः सदा ॥

आगायानीति युज्येत तस्मात् तस्मिन् हि मुख्यतः ।
आत्मेति भगवान् विष्णुः प्राणस्थः पुरुषोत्तमः ॥

तस्मा अन्नं ह्यर्थतस्तु प्राणस्यान्नभुजिर्भवेत् ।
प्राणस्याप्यमृतत्वं हि मुख्यमेव फलं यतः ॥
देवान्तर्भावतो विष्णोर्नामृतत्वं क चादिमत् ।

**भाष्यविवृतिः**– देवादिविषयगानकर्त्तुराशास्यमाह– **अमृतत्वमित्यादिना** ॥ आशामाशितव्यमिष्टमिति यावत् ॥ एतानि उक्तानि वक्ष्यमाणानि च । मनसा ध्यायन् ॥ २ ॥

अमृतत्वं देवेभ्य आगायेदित्युक्तिः कथमुद्गातॄणां देवादिमोक्षादिदाने शक्त्यभावादित्यतस्तद्धटयन्नाह– **अधिकारीति** ॥ अन्येषामप्युद्गातृत्वात्तेषां तत्कथं घटत इत्यतस्तेषामपि तद्धटयन्नाह– **अन्येषाममिति** । अवमन्तृत्वमेव हेतूक्त्या विशदयन्नाह– **देवानामिति** । प्राणस्य मुख्योद्गातृत्वादमृतं देवेभ्य आगायानीत्यादिसङ्कल्पोक्तिश्च युक्तेत्याह– **सङ्कल्पेति** ॥[१]

१. सङ्कल्पो मनसा ध्यानम् । उक्तिर्वचनम् । आदिपदेनोद्गानसङ्ग्रहः ।

आत्मने स्वस्मै अन्नमागायानीत्यन्यथा प्रतीतिं निवारयंस्तद्व्याचष्टे– **आत्मेति** । तस्मा अन्नं प्रत्यागायेदिति शेषः । प्राण एव स्वस्यान्नमागायानीत्यागायतीत्यर्थः कस्मान्न स्यादित्यत आह– **ह्यर्थत** इति ॥

हि यस्मात् प्राणस्थहरेः भोजनेऽर्थतो नान्तरीयकतया प्राणस्य भुजिर्भवेत् तस्मान्नासावर्थ इत्यर्थः । प्राणस्य देवतान्तर्गतत्वादमृतत्वफलसिद्धेश्च नासावर्थ इत्याह– **प्राणस्येति** ॥ विष्णोरपि देवतान्तर्गतत्वात्तस्याप्यमृतत्वं प्रति वायुरुद्गायति किमित्यतस्तदमृतत्वस्यानादित्वान्नेत्याह– **विष्णोरिति**[१] ॥ २ ॥

## सामगानकालीनानुसन्धानकथनम्

**उप.– सर्वे स्वरा इन्द्रस्यात्मनः सर्व ऊष्मणः प्रजापतेरात्मानः सर्वे स्पर्शा मृत्योरात्मानस्तं यदि स्वरेषूपालभेतेन्द्रं शरणं प्रपन्नोऽभूवं स त्वा प्रतिवक्ष्यतीत्येनं ब्रूयात् ॥ ३ ॥**

**अथ यद्येनमूष्मसूपालभेत प्रजापतिं शरणं प्रपन्नोऽभूवं स त्वा प्रतिपेक्ष्यतीत्येनं ब्रूयादथ यद्येनꣳ स्पर्शेषूपालभेत मृत्युं शरणं प्रपन्नोऽभूवं स त्वा प्रतिवक्ष्यतीत्येनं ब्रूयात् ॥ ४ ॥**

**सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्या इन्द्रे बलं ददानीति सर्वे ऊष्माणोऽग्रस्ता अनिरस्ता विवृत्ता वक्तव्याः प्रजापतेरात्मानं परिददानीति सर्वे स्पर्शा लेशेनानभिहिता वक्तव्या मृत्योरात्मानं परिहराणीति ॥ ५ ॥ २२ ॥**

भा.– इन्द्रे बलं ददानीति स्वरान् घोषबलात्मकान् ॥

---

१. चो हेतौ । विष्णोरमृतत्वमिति वर्तते । अन्तवत्वसमुच्चये वा चशब्दः । तथाच विष्णोः अमृतत्वं आदिमत् अन्तवच्च न क्वापीति यत इति भावः ।

भा.– अधिकारी सदौद्गात्रे मुख्यतः प्राण एव यत् ॥
अतो मोक्षादिदाने स देवादीनां क्षमो भवेत् ।
अन्येषां स ददातीह मद्धृदिस्थ इति स्मृतिः ॥

कार्या हि नान्यथा कुर्यादवमन्ताऽन्यथा भवेत् ।
देवानां मोक्षदानादौ न हि मानुष ईश्वरः ॥

अतः प्राणो हृदिस्थो मे ददातीति स्मृतिर्भवेत् ।
सङ्कल्पोक्त्यादिकर्ता च प्राण एव यतः सदा ॥

आगायानीति युज्येत तस्मात् तस्मिन् हि मुख्यतः ।
आत्मेति भगवान् विष्णुः प्राणस्थः पुरुषोत्तमः ॥

तस्मा अन्नं ह्यर्थतस्तु प्राणस्यान्नभुजिर्भवेत् ।
प्राणस्याप्यमृतत्वं हि मुख्यमेव फलं यतः ॥
देवान्तर्भावतो विष्णोर्नामृतत्वं क्व चादिमत् ।

**भाष्यविवृतिः**– देवादिविषयगानकर्त्तुराशास्यमाह– **अमृतत्वमित्यादिना** ॥ आशामाशितव्यमिष्टमिति यावत् ॥ एतानि उक्तानि वक्ष्यमाणानि च । मनसा ध्यायन् ॥ २ ॥

अमृतत्वं देवेभ्य आगायेदित्युक्तिः कथमुद्गातृणां देवादिमोक्षादिदाने शक्त्यभावादित्यतस्तद्धटयन्नाह– **अधिकारीति** ॥ अन्येषामप्युद्गातृत्वात्तेषां तत्कथं घटत इत्यतस्तेषामपि तद्धटयन्नाह– **अन्येषाममिति** । अवमन्तृत्वमेव हेतूक्त्या विशदयन्नाह– **देवानामिति** । प्राणस्य मुख्योद्गातृत्वादमृतं देवेभ्य आगायानीत्यादिसङ्कल्पोक्तिश्च युक्तेत्याह– **सङ्कल्पेति** ॥[१]

१. सङ्कल्पो मनसा ध्यानम् । उक्तिर्वचनम् । आदिपदेनोद्गानसङ्ग्रहः ।

आत्मने स्वस्मै अन्नमागायानीत्यन्यथा प्रतीतिं निवारयंस्तद्व्याचष्टे– **आत्मेति** । तस्मा अन्नं प्रत्यागायेदिति शेषः । प्राण एव स्वस्यान्नमागायानीत्यागायतीत्यर्थः कस्मान्न स्यादित्यत आह– **ह्यर्थत इति** ॥

हि यस्मात् प्राणस्थहरेः भोजनेऽर्थतो नान्तरीयकतया प्राणस्य भुजिर्भवेत् तस्मान्नासावर्थ इत्यर्थः । प्राणस्य देवतान्तर्गतत्वादमृतत्वफलसिद्धेश्च नासावर्थ इत्याह– **प्राणस्येति** ॥ विष्णोरपि देवतान्तर्गतत्वात्तस्याप्यमृतत्वं प्रति वायुरुद्गायति किमित्यतस्तदमृतत्वस्यानादित्वान्नेत्याह– **विष्णोरिति**[1]

॥ २ ॥

## सामगानकालीनानुसन्धानकथनम्

**उप.– सर्वे स्वरा इन्द्रस्यात्मनः सर्व ऊष्मणः प्रजापतेरात्मानः सर्वे स्पर्शा मृत्योरात्मानस्तं यदि स्वरेषूपालभेतेन्द्रं शरणं प्रपन्नोऽभूवं स त्वा प्रतिवक्ष्यतीत्येनं ब्रूयात् ॥ ३ ॥**

**अथ यद्येनमूष्मसूपालभेत प्रजापतिं शरणं प्रपन्नोऽभूवं स त्वा प्रतिपेक्ष्यतीत्येनं ब्रूयादथ यद्येनꣳ स्पर्शेषूपालभेत मृत्युं शरणं प्रपन्नोऽभूवं स त्वा प्रतिवक्ष्यतीत्येनं ब्रूयात् ॥ ४ ॥**

**सर्वे स्वरा घोपवन्तो बलवन्तो वक्तव्या इन्द्रे वलं ददानीति सर्वे ऊष्माणोऽग्रस्ता अनिरस्ता विवृत्ता वक्तव्याः प्रजापतेरात्मानं परिददानीति सर्वे स्पर्शा लेशेनानभिहिता वक्तव्या मृत्योरात्मानं परिहराणीति ॥ ५ ॥ २२ ॥**

भा.– **इन्द्रे वलं ददानीति स्वरान् घोषबलात्मकान्** ॥

---

१. चो हेतौ । विष्णोरमृतत्वमिति वर्तते । अन्तवत्वसमुच्चये वा चशब्दः । तथाच विष्णोः अमृतत्वं आदिमत् अन्तवच्च न क्वापीति यत इति भावः ।

ब्रूयादग्रस्तान्निरस्तानूष्मणः स्पर्शानपि ।
समस्तान् वलदानार्थमिन्द्रे चैव प्रजापतेः ॥

विष्णोः स्वात्मानमेवाहमर्पये मृत्युवर्जितम् ।
मोक्षयोग्यान् करिष्यामीत्येवं स प्राण एव तु ॥

कुर्यादन्यस्तु मत्स्थस्तु प्राण एवेदृशः क्षमः ।
करोतीति स्मरेन्नित्यं नान्यथा तु कथञ्चन ॥

देवावमन्ता हि तमो यात्यसंशयतो यतः ।
अत इन्द्रं प्रजापाख्यं विष्णुं मृत्युं च सर्वदा ॥

शरणं गतोऽहमिति च[१] ध्यायेत् सर्वत्र सर्वदा ।
ऐश्वर्यादिन्द्रनामा तु वायुः स्वरपतिः सदा ॥

ऊष्माधिपस्तु भगवान् विष्णुरेव प्रजापतिः ।
मृत्युनामा तु संहाराद्रुद्रः स्पर्शाधिपः स्मृतः ॥

मानुषाणां तु शरणमितरेषां तु वायुतः ।
वायोस्तु वलदानाद्यं मोक्षदानादिकं हरेः ॥

यस्माद् वायुपदे योग्या वहवस्त्विन्द्रनामकाः ।
अत इन्द्रे ददानीति स्मृतिः प्राणस्य युज्यते ॥

इति सामसंहितायाम् ॥

सर्वोपद्रवकर्तॄणामसुराणां कुबुद्धिनाम् ।
उपालम्भे कृते युक्तं विष्णुस्त्वां प्रतिपेक्ष्यति ॥

---

१. "इतिवद्" इत्पाठः ।

**रुद्रस्त्वां धक्ष्यतीत्यादि नान्यथा तु कथञ्चन ॥ इति च ।**

**मृत्योस्सकाशादात्मानं परिहराणीति ।**
**ब्रह्मा प्रजापतिश्चेति विष्णुरन्यं प्रबोधयन् ।**
**तथेन्द्रनामा[१] वायुश्च परेषां बोधको यदा ॥ इति च ।**

**बृंहयति, प्रजाः पाति, इदं रातीति व्युत्पत्तिभिः ॥ २२ ॥**

**भाष्यविवृतिः**– अकारादयश्चतुर्दश स्वराः ।[२] उष्माणः शषसहाः । ककारादयः स्पर्शाः । अस्खलितेष्वपि स्वरादिषु धूर्तेनोपालम्भे कृते वक्तव्यमाह– **तं यदीत्यादिना** ॥ स्वराद्युच्चारणेनियममाह– **सर्वे स्वरा इत्यादिना** ॥ ३-४-५ ॥ २२ ॥

सर्वे स्वरा घोषवन्त इत्याद्यप्रतीतेर्व्याचष्टे– **इन्द्र इत्यादिना** ॥ अत्र योजना ॥ इन्द्रे बलं ददानीति स्वरान् घोषबलात्मकान् घोषोनाम ध्वनि-विशेषः । घोषबललक्षणप्रयत्नयुक्तान् ब्रूयात् । अहं स्वात्मानमेव प्रजापतिनामकस्य विष्णोरर्पये इति उष्मणोऽग्रस्तानदष्टानतिद्रुतोच्चरिता-निति यावत् । अनिरस्तानिति दूरोच्चारितान् । विवृतप्रयत्नयुक्तान् ब्रूयात् । समस्तान् स्पर्शानपि मृत्योरात्मानं परिहराणि मोक्षयोग्यान् मृत्युज्झितान् करिष्यामीति लेशेनानभिहितान् लेशतोऽप्यसंस्पृष्टान् ब्रूयादिति । किं सर्वोऽप्येवं कुर्यादित्यत आह– **एवं स प्राण एव कुर्यादिति** ॥ प्राणा-दन्यस्तर्हि स्वरादिविषये न किमपि कुर्यात् किमित्यतस्तस्य कर्तव्यमाह–

---

१. ''अथेन्द्रनामा'' हृपाठः ।

२. वैदेशीये अकारादयः षोडशस्वराः इत्युक्तम् । परं तैः मातृकान्यासोक्तप्रकारेण अनुस्वारविसर्गेण सह ऋलृदीर्घवर्णावपि गृहीतौ । परमत्र अनुस्वारविसर्गौ अविहायवा, ऋलृदीर्घवर्णौ विहायवा चतुर्दशोक्तिः । परिमळाचार्यैस्तु केवलं अच्वर्णाः इत्युक्तम् । न सङ्ख्या उक्ता ।

**अन्यस्त्विति** ॥ अन्यथा इन्द्रे बलं ददानीति मृत्योरात्मानं परिहराणीति कथञ्चन न स्मरेत् ॥ कुतस्तथा स्मरणं न कार्यमित्यतोऽनिष्टमाह– **देवेति** ॥

ननु वायोरेव मुख्योद्गातृत्वे इन्द्रं शरणं प्रपन्नोऽभूवम्, मृत्युं शरणं प्रपन्नोऽभूवमिति च कथं घटते । तयोस्तदवमत्वादित्यतस्तत्र तस्य शरण-मुपचरितमित्याह– [१]**इन्द्रमिति** ॥[२] ध्यायेत्प्राणः । शरणं गत इत्येवार्थः किं न स्यादित्यतो बाधकमाह– **ऐश्वर्यादिति** ॥ इन्द्रस्य प्राणत्वान्मृत्यो-स्तदपकृष्टत्वान्नेत्यर्थः । इतरेषां मानुषादीनामुद्गातृत्वे इन्द्रं शरणं प्रपन्नोऽ-भूवमित्यादि मुख्यार्थमेवेत्याह– **मानुषाणामिति** ।[३] **वायुतः** वाय्वादितः शरणं भवति । उक्तरीत्या प्राणस्येन्द्रत्वादिन्द्रे बलं ददानीति स्मृतिर्गौणीति प्रतीतिं निवारयन्नाह– **यस्मादिति** ॥ नन्विन्द्रनामकानां वायूनां बहुत्वेऽपि तेषां साम्यात्तस्य पुनरिन्द्रे बलं ददानीति स्मृतिरनुपपन्नैवेत्यतस्तद्घट-यन्नाह– **वायोरिति** ॥ वायोर्बलदानाद्यं नाम हरेः सकाशान्मोक्षदानादिकं मह्यादिस्थो हरिरिन्द्रस्य बलादिकं ददात्विति । अतस्तथा स्मृतिर्नानुपपन्ने-त्यर्थः । येन केन सताऽसतावाऽप्युपलम्भे कृते स त्वां प्रतिपेक्ष्यतीति ब्रूयादिति प्रतीतिं निवारयंस्तद्व्याचष्टे– **सर्वेति** ॥ मृत्योरात्मानं परिहरा-णीत्येतत् मृत्युवर्जितान् करिष्यामीति व्याख्यातम् । तत्कथं मृत्योरेवात्मानं परिहराणीति प्रतीतेरित्यतोऽपेक्षितं प्रक्षिप्य दर्शयति– **मृत्योरिति** ॥ विष्णुवाय्वोः प्रजापतीन्द्रशब्दवाच्यत्वं प्रमाणान्तरेण द्रढयति – **ब्रह्मेति** ॥[४] अन्यं प्रबोधयन् वर्तते यदेति शेषः । ब्रह्मप्रजापतिशब्दयोर्विष्णाविन्द्र-

---

१. अत्र ककोशे ''उपचरितमित्यत आह'' इति पाठो दृश्यते स न साधुः पाठः ।

२. न केवलं स्वरपतित्वादिकमिति च शब्दः ।

३. आद्यस्तुशब्दो मानुषाणां वाय्वाद्यपेक्षयाऽपकर्षरूपविशेषद्योतकः ॥ द्वितीयस्त्वव-धारणार्थो वायुत एवेति सम्बध्यते । तृतीयस्तु वायोरितरोत्कर्षरूपविशेषमाह ।

४. ब्रह्मा प्रजापतिश्चेति शब्दाभ्यां विष्णुरुच्यते ।

शब्दस्य वायौ रूढिं प्रदर्श्य व्युत्पाद्य योगवृत्तिं च दर्शयति– **बृंहयतीति** ॥ बृंहयतीति,[१] प्रजाः पातीति प्रजापतिः । इदं रातीतीन्द्र इति निर्वचन-मित्यर्थः ॥ ३-४-५ ॥ **इति द्वाविंशः खण्डः ॥**

## अथ त्रयोविंशः खण्डः

## धर्मब्रह्मज्ञानयोः फलनिरूपणम्

**उप.– त्रयो धर्मस्कन्धाः । यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽ-वसादयन् सर्व एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति ॥ १ ॥**

**भा.– सर्वधर्मैः पुण्यलोको ब्रह्मज्ञानाद्विमुच्यते ।**

**भाष्यविवृतिः–** व्यस्तसमस्तसामोपासकानां स्वर्गमोक्षोफलत्वेनोक्तौ तत्र तेषां किमिति न ज्ञायतेऽतस्तद्विवेकेनाह– **त्रयो धर्मस्कन्धा इत्यादिना** ॥ तत्र यज्ञाद्युपलक्षितो गृही । तपःप्रचुरो वनस्थः । आचार्यकुले वासी उपकुर्वाणः अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्नैष्ठिको ब्रह्मचारी । सर्व एते पुण्यलोका– **भवन्ति** । ब्रह्मसंस्थो यतिरेवामृतत्वमेतीत्यन्यथा प्रतीतिं निवारयंस्तात्पर्यार्थमाह– **सर्वेति**[२] ॥ ज्ञानं चेत् स्यात् सर्वेषामपि मोक्षो भवेदित्याशयः[३] ॥ १ ॥

---

१. ब्रह्म- यद्यपि ब्रह्मशब्दनिर्वचनं न श्रुत्यनुसारि तथाऽपि प्रमाणे ब्रह्मशब्दस्य प्रसक्तत्वात् तस्य निर्वचनं कृतमिति मन्तव्यम् ।

२. ब्रह्म- सर्वेषामाश्रमिणां धर्मैरित्यर्थः । यति धर्मस्यापि पुण्यलोकसाधनत्वमस्ति ।

३. एवं च त्रयाणामेव पुण्यलोको यतेरेव तद्विलक्षणो मोक्ष इत्ययुक्तमिति भावः ।

## दृष्टान्तपूर्वकं ओङ्कारस्य सर्ववेदसारत्वकथनम्

उप.– प्रजापतिर्लोकानभ्यतपत् तेभ्योऽभितप्तेभ्यस्त्रयी विद्या सम्प्रास्रवत्। तामभ्यतपत् तस्या अभितप्ताया एतान्यक्षराणि सम्प्रास्रवन्त । भूर्भुवः स्वरिति । तान्यभ्यतपत् तेभ्योऽभितप्तेभ्य ओङ्कारः सम्प्रास्रवत् । तद्यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णान्येवमेतेनोङ्कारेण सर्वा वाक्सन्तृण्णोङ्कार एवेदꣳ सर्वमोङ्कार एवेदꣳ सर्वम् ॥ २ ॥ २३ ॥

भा.– ओङ्कारो ब्रह्मणो नाम सर्ववागात्मकश्च सः ॥
तद्व्याख्यात्वात् सर्ववाचां सर्ववागात्मता भवेत् ।
इदं तु प्रस्तुतत्वात् स सर्वं चाप्यर्थपूर्णतः ॥

सर्वशब्दान्वितत्वाच्च न लिङ्गव्यत्ययो भवेत् ।
आधिक्यं चैव सर्वत्वं प्रस्तुतं तद्यथेति तत् ॥ इति च ।

अकाराद्याः क्रमेणैव भूरादेः साररूपिणः ।
अस्मादयं सार इति ज्ञानमेवाभितापनम् ॥

सम्प्रस्रावश्च तद्दृष्टिर्ब्रह्मणः परमस्य हि ।
नित्यज्ञानोऽपि भगवान् क्रीडयाऽचीक्लपद्यदा ॥
तदाभितापशब्दोऽयं वर्तते परमात्मनि ॥ इति च ।

भाष्यविवृतिः– प्रायो मुमुक्षुणा जप्यो मन्त्रो वेदाद्यर्थत्वेन सर्वसारत्वादोङ्कार एवेत्याख्यायिकमाह– **प्रजापतिरे**वेत्यादिकया । प्रजापतिः सारं विवेक्तुं शब्दात्मकलोकान् **अभ्यतपत्** अपश्यत् । **संप्रास्रवत्** सारत्वेन व्यज्ञायत ।[१] **सन्तृण्णा** प्रोता ।

---

१. व्यजायत इति वाऽर्थः ।

ॐकारस्य वाच्यानुक्तेस्तस्य सर्ववाक्सारात्मकत्वे च कारणानुक्ते-स्तद्वाक्यजातं तात्पर्योक्त्या व्याचष्टे– **ओङ्कार इति** । एवमोङ्कारेण सर्वा वाक् सन्तृण्णेत्युक्तसर्ववागात्मकत्वमेव हेतूक्त्या विवृणोति– **तद्व्याख्या-त्वादिति** ॥ इदं सर्वं शब्दजातमोङ्कार एवेति शब्दपरत्वप्रतीति-निवारयंस्तद्व्याचष्टे– **इदमिति** ॥ स ओंकारः इदमित्यस्योङ्कारपरत्वे कथमिदमोङ्कार इति लिङ्गव्यत्यास इत्यतस्तद्घटयन्नाह– **सर्वेति** ॥ सर्व-शब्दान्वितत्वादुत्तरलिङ्गानुसारात्[1] तथा चेदं सर्वमधिकमोङ्कार एवेति योजना ॥ इदं सर्वशब्दजातमोङ्कार एवेत्यर्थः किं न स्यात् । न स्यात् । तद्यथा शकुनेत्यादिदृष्टान्तविरोधादित्याह– **आधिक्यमिति** ॥ आधिक्यमेव सर्वत्वं तद्यथेति प्रस्तुतं च तदेवेति योज्यम् ।

त्र्यक्षरात्मन ओमित्यस्य तान्यभ्यतपत्तेभ्योऽभितप्तेभ्य ओङ्कारः सम्प्रास्रवदित्युक्तो व्याहृतिभ्यः सारत्वप्रकारः कथमित्यतस्तं दर्शयति– **अकारेति** ॥ तापप्रस्रवणार्थत्वप्रतीतिं निवारयंस्तपनप्रस्रवशब्दार्थावाह– **अस्मादिति** ॥ ननु सर्वदा सारासारत्वेन सारासारसर्ववस्तुदर्शनभावा-द्भगवतः कथमभ्यतपदिति तदुक्तिरित्यतस्तद्घटयन्नाह– **नित्येति** ॥

**भा.– तपःशब्देनैव यतिधर्मश्चोक्तः ।**

**सर्वेषामाश्रमस्थानामज्ञानां पुण्यलोकता ।**
**अपरोक्षदृशां विष्णोरमृतत्वं न चान्यथा ॥ इति च ।**

**यज्ञाध्ययनदानैस्तु गृही स्यात् सोमलोकगः ।**
**यतयस्तपसा सूर्यं चत्वारोऽपि विशेषतः ॥**

---

१. छान्दसत्वेन लिङ्गव्यत्ययः। अथवा इदमित्यस्य सर्वशब्दान्वितत्वमेव । सर्वशब्दस्य च नपुंसकत्वं सामान्ये नपुंसकम् इति न्ययेन, तथाच लिङ्गव्यत्ययो न दोषायेति भावः।

गच्छन्ति तपसैवर्षीन् वनस्था ब्रह्मचारिणः ।
नैष्ठिका वालखिल्यांश्च गुरुशुश्रुषयैव तु ॥
यदि पश्यन्त्येत एव साक्षादेव जनार्दनम् ।
अमृतत्वं तदा यान्ति नान्यथा तु कथञ्चन ॥ इति च ।

न च सन्न्यासमात्रेणामृतत्वम् । 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' इति श्रुतेः । 'विद्यैव तु निर्धारणात्' इति च भगवद्वचनम् ।

न रोधयति मां धर्मो न साङ्ख्यं योग उद्धव ।
न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणा ॥ इत्यादि च ।

'न च संन्यसनादेव सिद्धिं समधिगच्छति' इति च । 'तस्य पुत्रा दायमुपयन्ति' इत्यादेर्गृहस्थादीनामपि ज्ञानिनां मोक्षः प्रतीयते ।

सर्ववर्णाश्रमाणां च ज्ञानान्मोक्षो विनिश्चितः ।
अन्त्यानां स्थावराणां वा तथापि यतिरुत्तमः ॥
ज्ञानद्वारो यतो न्यासो विशेषेण भविष्यति ॥ इति च ।

'वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः' । इति च ॥ २३ ॥

**भाष्यविवृतिः**– ननु त्रयोऽप्याश्रमिणः पुण्यलोका भवन्ति ब्रह्मसंस्थो यत्याश्रम्येवामृतत्वमेतीत्येव योजना युक्ता । ननु चत्वारोऽप्याश्रमिणः पुण्यलोका भवन्ति । त एव ब्रह्मसंस्थज्ञानिनश्चेदमृतत्वं यांतीति कुतः । अत्र यतिधर्मानुक्तेरित्यत उत्तरमाह– **तप इति** । सर्वेन्द्रियनिग्रहण-रूपत्वेनालोचनरूपत्वात् यतिधर्मस्येत्यादावुपस्कृत्य योज्यम् । सर्वेऽप्या-श्रमिणोऽज्ञानिनश्चेत् पुण्यलोका भवन्ति त एव ज्ञानिनश्चेत् मुक्ता

भवन्तीति व्याख्यां प्रामाणेन द्रढयति– **सर्वेषामिति** ॥ एतद्वचनार्थमेव विवेचयन् विशदमाह– **यज्ञेत्यादिना** ॥ चत्वारः परमहंसहंसकुटीचक-बहूदकाः ।

ब्रह्मसंस्थो यादृशः तादृशो यतिरेवामृतत्वमेतीति व्याख्याने बाधकं वक्तुमनूद्य प्रतिषेधति– **नचेति** ॥ बाधकमाह– **तमेवमिति** ॥ सूत्रं च बाधकमाह– **विद्यैवेति** ॥ भागवतवाक्यं च बाधकं पठति– **नेति** ॥[1] **साङ्ख्यं** तत्वानां विवेचनम् । **योगो**ऽष्टाङ्गयोगः । **त्यागः** सन्यासः । ननु गृहिणां कथं मोक्षस्तस्य ज्ञानैकसाध्यत्वात् तेषां कर्मबाहुल्येन तत्रोप-क्षीणत्वादित्यतोऽनुपक्षीणावसरे ज्ञानसंपादनेन मोक्षसम्भवादित्याशय-वांस्तेषामपि मोक्षभावे श्रुतिं पठति – **तस्येति** ॥[2] **दायं** धनक्षेत्रादि । तत्रैव स्मृतिं च पठति– **सर्वेति** ॥ सर्वाश्रमिणां मोक्षभावे यतेर्विशेषा-भावेनोत्तमत्वं न स्यादित्यतो निरन्तरज्ञाननिष्ठत्वेन तदुपपत्तेरित्याह– **तथापीति** ॥ सन्यासमात्रेण मोक्ष इति जाल्ममतनिरासाय श्रुत्यन्तरं पठति– **वेदान्तेति** ॥ सन्यासयोगाच्छुद्धसत्वा यतयस्ते सर्वे वेदान्त-विज्ञानसुनिश्चितार्था भूत्वा ब्रह्मलोकेषु स्थिताः परान्तकाले ब्रह्मणोऽवसान-काले ॥ परानृतादनृतभूयिष्ठात् संसारात् परिमुच्यन्ति । परामृतादिति पाठे परममोक्षसाधनज्ञानात्परामृतस्य भगवतः प्रसादादिति वा ॥ २ ॥ इति त्रयोविंशः खण्डः ॥

## अथ चतुर्विंशः खण्डः

## स्वर्गमोक्षमार्गे प्राप्तविघ्नपरिहारोपायनिरूपणम्

**उप.– ब्रह्मवादिनो वदन्ति यद्वसूनां प्रातःसवनꣳ रुद्राणां माध्यन्दिनꣳ**

---

१. न रोधयति न निर्बन्धयति । मोक्षदानायेति शेषः । एतैरहं न मोक्षद इति भावः ।

२. तस्य मुक्तस्य पुत्राः पूर्वपुत्राः ।

सवनमादित्यानां विश्वेषां देवानां च तृतीयसवनं क्व तर्हि यजमानस्य लोक इति स यस्तं न विद्यात् कथं कुर्यादथ विद्वान् कुर्यात् ॥ १ ॥

## वसुस्थभगवद्रूपप्रार्थना

पुरा प्रातरनुवाकस्योपकरणाज्जघनेन गार्हपत्यस्योदङ्मुख उपविश्य स वासवꣳ सामाभिगायति लो३कद्वारमपावा३र्णू३३ पश्येम त्वा वयꣳ रा ३३३३३ हु३म् आ३३ज्या३ यो३ आ३२१११ इत्यथ जुहोति नमोऽग्नये पृथिवीक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानास्य लोक एताऽस्म्यत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै वसवः प्रातःसवनꣳ सम्प्रयच्छन्ति ॥ २ ॥

## रुद्रस्थभगवद्रूपप्रार्थना

पुरा माध्यन्दिनस्य सवनस्योपाकरणाज्जघनेनाग्नीध्रीयस्योददङ्मुख उपविश्य स रौद्रꣳ सामाभिगायति लो३कद्वारमपावा३र्णू३३ पश्येम त्वा वयं विरा ३३३३३ हु३म् आ३३ज्या३ यो३ आ३२१११ इत्यथ जुहोति नमो वायवेऽन्तरिक्षक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानस्य लोक एताऽस्मत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै रुद्रा माध्यन्दिनꣳ सवनꣳ सम्प्रयच्छन्ति ॥ ३ ॥

## आदित्यविश्वेदेवस्थभगवद्रूपप्रार्थना

पुरा तृतीयसवनस्योपाकरणाज्जघनेनाहवनीयस्योदङ्मुख उपविश्य स आदित्यꣳ स वैश्वदेवꣳ सामाभिगायति लो३कद्वारमपावा३र्णू३३ पश्येम त्वा वयं ꣳ स्वारा ३३३३३ हु३म् आ३३ज्या३ यो३ आ३२१११ इत्यादित्यमथ वैश्वदेवं लो३कद्वार-मपा३वा३वार्णू३३

पश्येम त्वा वयꣳ साम्ना ३३३३ हू आ ३म् ३३ ज्या ३यो ३ आ३२१११ इत्यथ जुहोति नम आदित्येभ्यश्च विश्वेभ्यश्च देवेभ्यो दिविक्षिद्भ्यो लोकक्षिद्भ्यो लोकं मे यजमानाय विन्दतैष वै यजमानस्य लोक एताऽस्म्यत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मा आदित्याश्च विश्वे च देवास्तृतीयसवनꣳ सम्प्रयच्छन्ति एष ह वै यज्ञस्य मात्रां वेद य एवं वेद य एवं वेद

॥ ३-२४ ॥

॥ इति श्रीमच्छान्दोग्योपनिषदि द्वितीयोऽध्यायः ॥

भा.– वसुरुद्रादितेयेषु विश्वेषु स्थितमीश्वरम् ।
तन्नामानं हरिं मन्त्रैर्लोकद्वारादिभिः प्रभुम् ॥

प्रार्थयित्वा दिवं त्वज्ञो ज्ञो मोक्षं प्राप्नुयात् तथा ।
यजमानो नान्यथा तु लोकोऽस्य प्राप्यते वरः ॥

राजनं पृथिवीलोके राज्यमित्युच्यते बुधैः ।
विराज्यमन्तरिक्षे तु स्वाराज्यं स्वर्गगं भवेत् ॥

एतेषु मोक्षोऽपि भवेन्मानुषाणां विशेषिणाम् ।
श्वेतद्वीपं तथा गत्वा दृष्ट्वा विष्णुं च ते ततः ॥

अनुज्ञाताः प्रमोदन्ते निर्दुःखास्तु धरादिषु ॥ इति च ।

**भाष्यविवृतिः**– सामनामकभगवदुपास्त्या स्वर्गमोक्षौ भवत इत्युक्तम् । तत्र भवद्विघ्नपरिहारहेतुभूतवस्वादिनिष्ठभगवदुपास्तिं शिष्यगुर्वाक्षेपसमाधानरूपाख्यायिकयाऽऽह– **ब्रह्मवादिन इत्यादिकया** ॥ ब्रह्मवादिनो वदन्तीत्याद्याक्षेपवाक्यस्यैवं योजना । यत् यदि वसूनां प्रातःसवनं भूलोकश्च रुद्राणां माध्यन्दिनमन्तरिक्षलोकश्च आदित्यादीनां विश्वेषां देवानां तृतीय-

सवनं स्वर्गलोकश्च क तर्हि यजमानस्य लोकस्तेषां तदाधिपत्यादिति ब्रह्मवादिनो गुरून् प्रति वदन्तीति । तत्र गुरुभिरुक्तं समाधानमाह– **सय इत्यादिना** ॥ तत् बुद्धिस्थतया वक्ष्यमाणम् । कथं कुर्यात् । यज्ञादीति शेषः । यतो वक्ष्यमाणमज्ञात्वा यज्ञादिकरणविघ्नो भवति । अथ तस्माद्विद्वानेव कुर्यात् ॥

तदित्युक्तं कर्तव्यमित्याह– **प्रातरित्यादिना** ॥ प्रातरनुवाकस्योपा-करणादुपक्रमात् । पुरा गार्हपत्यस्योपसमीपे उदङ्मुखो जघनेन स्थित-मुपविश्यवा सर्ववसुविषयं सामाभिगायति । रा इत्यस्य य इत्यनेन योगः । लोकजित इत्युक्तम् । लोकजितत्वमेव निर्देशेनाह– **पृथिवीजित** इति । एवमुत्तरत्रापि योजना द्रष्टव्या ॥ योग्यश्चेत् प्रातःसवनं भूर्लोकं प्रयच्छति । अग्नीध्रस्याग्रेः यजमानस्य मे यजमानाय । वैश्वदेवं साम वस्वाद्युपासनयैव यजमानः स्वर्गादिलोकं लभते किमित्यतो न किंतु तद्गतभगवद्रूपोपास्त्ये-त्युक्तम् ।

एषवै यज्ञस्य मात्रां मात्रं वेद य एवं वेदेति ब्रह्मविद्यात्वस्फोरणाय वस्वादीनामेव भूलोकादिदातृत्वप्रतीतिं निवारयन् प्रमाणेन व्याचष्टे– **वसुरुद्रेत्यादिना** । दिवमन्तरिक्षं भुवं च ।

ननु राज्याय विराज्याय स्वाराज्यायेत्यत्र पृथिव्यादिलोकानुक्तेः प्रभुं प्रार्थयित्वा दिवं त्वज्ञोज्ञो मोक्षं प्राप्नुयादिति व्याख्यानं कथमित्यत-स्तद्धटयन्नाह– **राजनमिति** ॥ ननु ज्ञान्यज्ञानिनोर्निर्विघ्नेन स्वफलप्राप्त्यर्थं हि वस्वादिस्थितभगवदुपास्तिरत्रोच्यते । न चात्र ज्ञानिलोक उक्त-स्तत्किमित्यतः सोऽप्युक्त इत्याह– **एतेष्विति** ॥ **विशेषिणां** योग्यानां मनुष्योत्तमानाम् ।[१] ननु यावच्छ्वेतं न गच्छति योगी तावन्न मुक्तः

१. विशेषिणां आत्मत्वमात्रोपासनायोग्यानाम् । आत्मन्येव परं देवमुपास्य हरिमव्ययम् । केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन । अत्रैव च स्थितिस्तेषाम् इत्यादेः ।

स्यादित्युक्तेः कथमेषु मोक्ष इत्यत उक्तं विशदमाह– **श्वेतद्वीपमिति** ॥ तन्नामानं हरिमिति प्रमाणेनैव भगवतो वस्वादिनामित्वं सिद्धमेव । तथापि तद्दाढर्याय तत्र प्रमाणान्तरमाह– **य इति** ॥ भगवत एव मुख्यत इति शेषः ।

## वस्वादिनाम्नां भगवत्परत्ववर्णनम्

**भा.– 'यो देवानां नामधा एक एव' इति श्रुतेश्च भगवत एव वस्वादिनामानि । 'त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते' इति वचनाच्च भगवानेव प्रार्थ्यः । भगवत्स्वरूपस्य सम्यगपरिज्ञानाद्रागाच्च तेषामन्तवत् फलवत्त्वम् ।**

**'न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते' ।**
**'गतागतं कामकामा लभन्ते' इति वचनात् ।**

**सर्वोत्तमत्वस्याज्ञानाद्विष्णोरन्धन्तमो भवेत् ।**
**तद्द्वेषात् किमु वक्तव्यं ब्रह्मादिद्वेषतोऽपि वा ॥**

**तारतम्यापरिज्ञानादनुत्थानं तमो भवेत् ।**
**अपराधकृतस्तेषां निरयं त्वेव गच्छति ॥**

**पूजाया अकृतेस्तेषां न वर्णेषु जनिर्भवेत् ।**
**सम्यक्कर्माननुष्ठानात् स्वर्गं नैवोपगच्छति ॥**
**अपरोक्षदृशोरौन्यान्मोक्षं नैवोपगच्छति ॥ इति च ।**

भाष्यविवृतिः– ननु मुमुक्षुभिर्भवतु भगवान् प्रार्थ्यः न तु स्वर्गार्थिभिः । कर्मणैव तत्सिद्धेस्तत्र प्रमाणाभावाच्चेत्यतस्तदसिद्धिं मन्वानस्तत्र प्रमाणमाह– **त्रैविद्या इति** ॥ त्रैविद्या नाम प्रतिकर्म भगवदनुसन्धानरहिता

सवनं स्वर्गलोकश्च क्व तर्हि यजमानस्य लोकस्तेषां तदाधिपत्यादिति ब्रह्मवादिनो गुरुन् प्रति वदन्तीति । तत्र गुरुभिरुक्तं समाधानमाह– **सय इत्यादिना** ॥ तत् बुद्धिस्थतया वक्ष्यमाणम् । कथं कुर्यात् । यज्ञादीति शेषः । यतो वक्ष्यमाणमज्ञात्वा यज्ञादिकरणविघ्नो भवति । अथ तस्माद्विद्वानेव कुर्यात् ॥

तदित्युक्तं कर्तव्यमित्याह– **प्रातरित्यादिना** ॥ प्रातरनुवाकस्योपाकरणादुपक्रमात् । पुरा गार्हपत्यस्योपसमीपे उदङ्मुखो जघनेन स्थितमुपविश्यवा सर्ववसुविषयं सामाभिगायति । रा इत्यस्य य इत्यनेन योगः । लोकजित इत्युक्तम् । लोकजितत्वमेव निर्देशेनाह– **पृथिवीजित इति** । एवमुत्तरत्रापि योजना द्रष्टव्या ॥ योग्यश्चेत् प्रातःसवनं भूर्लोकं प्रयच्छति । अग्नीध्रस्याग्रेः यजमानस्य मे यजमानाय । वैश्वदेवं साम वस्वाद्युपासनयैव यजमानः स्वर्गादिलोकं लभते किमित्यतो न किंतु तद्गतभगवद्रूपोपास्त्येत्युक्तम् ।

एषवै यज्ञस्य मात्रां मात्रं वेद य एवं वेदेति ब्रह्मविद्यात्वस्फोरणाय वस्वादीनामेव भूलोकादिदातृत्वप्रतीतिं निवारयन् प्रमाणेन व्याचष्टे– **वसुरुद्रेत्यादिना** । दिवमन्तरिक्षं भुवं च ।

ननु राज्याय विराज्याय स्वाराज्यायेत्यत्र पृथिव्यादिलोकानुक्तेः प्रभुं प्रार्थयित्वा दिवं त्वज्ञोज्ञो मोक्षं प्राप्नुयादिति व्याख्यानं कथमित्यतस्तद्घटयन्नाह– **राजनमिति** ॥ ननु ज्ञान्यज्ञानिनोर्निर्विघ्नेन स्वफलप्रास्यर्थं हि वस्वादिस्थितभगवदुपास्तिरत्रोच्यते । न चात्र ज्ञानिलोक उक्तस्तत्किमित्यतः सोऽप्युक्त इत्याह– **एतेष्विति** ॥ **विशेषिणां** योग्यानां मनुष्योत्तमानाम् ।[१] ननु यावच्छ्वेतं न गच्छति योगी तावन्न मुक्तः

१. विशेषिणां आत्मत्वमात्रोपासनायोग्यानाम् । आत्मन्येव परं देवमुपास्य हरिमव्ययम् । केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन । अत्रैव च स्थितिस्तेषाम् इत्यादेः ।

स्यादित्युक्तेः कथमेषु मोक्ष इत्यत उक्तं विशदमाह– **श्वेतद्वीपमिति** ।। तन्नामानं हरिमिति प्रमाणेनैव भगवतो वस्वादिनामित्वं सिद्धमेव । तथापि तद्दाढर्याय तत्र प्रमाणान्तरमाह– **य इति** ।। भगवत एव मुख्यत इति शेषः ।

## वस्वादिनाम्नां भगवत्परत्ववर्णनम्

**भा.– 'यो देवानां नामधा एक एव' इति श्रुतेश्च भगवत एव वस्वादिनामानि । 'त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते' इति वचनाच्च भगवानेव प्रार्थ्यः । भगवत्स्वरूपस्य सम्यगपरिज्ञानाद्रागाच्च तेषामन्तवत् फलवत्वम् ।**

**'न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते' ।**

**'गतागतं कामकामा लभन्ते' इति वचनात् ।**

**सर्वोत्तमत्वस्याज्ञानाद्विष्णोरन्धन्तमो भवेत् ।**
**तद्द्वेषात् किमु वक्तव्यं ब्रह्मादिद्वेषतोऽपि वा ।।**

**तारतम्यापरिज्ञानादनुत्थानं तमो भवेत् ।**
**अपराधकृतस्तेषां निरयं त्वेव गच्छति ।।**

**पूजाया अकृतेस्तेषां न वर्णेषु जनिर्भवेत् ।**
**सम्यक्कर्माननुष्ठानात् स्वर्गं नैवोपगच्छति ।।**
**अपरोक्षदृशेरौन्यान्मोक्षं नैवोपगच्छति ।। इति च ।**

भाष्यविवृतिः– ननु मुमुक्षुभिर्भवतु भगवान् प्रार्थ्यः न तु स्वर्गार्थिभिः । कर्मणैव तत्सिद्धेस्तत्र प्रमाणाभावाच्चेत्यतस्तदसिद्धिं मन्वानस्तत्र प्रमाणमाह– **त्रैविद्या इति** ।। त्रैविद्या नाम प्रतिकर्म भगवदनुसन्धानरहिता

अवसाने स्वकृतमुत्तमबुध्या भगवत्यर्पन्ति । भगवानर्थ्य एव स्वर्गार्थिभिरपि भगवत्प्रार्थित्वे तेषामन्तवत्फलत्वं न स्यात् इत्यतस्तत्र कारणमाह- **भगवदिति** ॥ सम्यग्भगवत्स्वरूपापरिज्ञानात् रागाच्चान्तवत्फलत्वमुक्तं तत्कुतः सिद्धमित्यत आह- **न तु मामिति** ॥ नतु मामभिजानन्ति तत्वेनातश्च्यवन्ति त इति विष्णोः सर्वोत्तमत्वादिज्ञानपूर्वमेव कृतं परमश्रेयःसाधनमित्युक्तम् । सांप्रतं तत् स्थिरीकरणाय तद्विरोधीन्याह- **सर्वोत्तमत्वस्येत्यादिना** ॥ अज्ञानात्तन्नास्तिताज्ञानात् ।

**भा.–** **पूर्वपूर्वगुणैर्दोषानशक्ता उत्तरोत्तराः ।**
**स्थानद्वयोत्तरे शक्ता मोक्षो नानपरोक्षिणः ॥**

**विरुद्धरागिणां नैव ह्यपरोक्षदृशिर्भवेत् ।**
**यावद्रागविनाशः स्याद्विरक्तो भक्तिसंयुतः ॥**

**सर्वदैवाप्रमत्तश्च पश्येदेव हरिं[1] परम् ।**
**अविस्मृतिस्सदा विष्णोरन्यथाज्ञानवर्जनम् ॥**

**शास्त्राभ्यासः सदोद्योगाच्छ्रवणाच्च विचारतः ।**
**निषिद्धकर्मणां त्यागः स्वधर्मस्य कृतिः सदा ॥**

**अप्रमाद इति प्रोक्तः शास्त्रं वेदास्तु पञ्च च ।**
**भारतं पञ्चरात्रं च मूलरामायणं तथा ॥**

**पुराणं भागवतं चैव पञ्चमो वेद उच्यते ॥ इति च ॥**

**त्रिलोकप्राप्तिपरिघास्त्रयः सन्ति सदातनाः ।**
**तेषामग्न्यादिगो विष्णुरपहन्ता स्मृतो भवेत् ॥**

---

१. ''पश्येद्देवं'' इृपाठः ।

**मृतः सन्सुखभोगाय यत्र गच्छति तत्र ह ।**
**एकैकः परिघोऽग्रे स्याद्गते तस्मिंस्तु विष्णुना ॥**
**यजमानः पृथिव्यादिलोकान् भोगाय याति हि ॥ इति च ।**

**यस्त्राति यज्ञमातारं यज्ञमात्रा हरिस्तु सः ।**
**तमेवं वेत्ति यो भक्तो याति स्वर्मुक्तिमेव वा ॥**
**इति च ॥ २४ ॥**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते**
**श्रीमच्छन्दोग्योपनिषद्भाष्ये द्वितीयोऽध्यायः ॥**

**भाष्यविवृतिः–** ननु सर्वोत्तमत्वज्ञानमस्ति कदाचित्तद्वेषादयोऽपि सन्ति। हरिस्नेहोऽस्ति । ब्रह्मादिद्वेषोऽपि विद्यते । कदाचिद्ब्रह्मदिस्नेहो विद्यते तत्तारतम्यज्ञानं नास्ति तदा किं तमो भवति नेत्याह– **पूर्वेति ॥** उत्तरोत्तरा द्वेषादयो दोषाः पूर्वपूर्वगुणैर्विरुद्धाश्चेत् स्वकार्यकरणे न शक्ताः । किं सर्वत्रैवं नियमः नेत्याह– **स्थानेति ॥** हरिसर्वोत्तमत्वज्ञानतत्स्नेह-लक्षणस्थानद्वयोत्तरे । तद्विरोधरहिता इति यावत् । दोषाः स्वकार्यकरणे शक्ता इत्यर्थः । तत्रोदाहरणमाह– **मोक्ष इति ॥** सम्यक् कर्मानुष्टान-वतोऽपि अनपरोक्षिणो भगवदपरोक्षज्ञानहितस्य मोक्षो न । अनपरोक्षित्वं दोषः सम्यक्कर्मानुष्ठानवतोऽपि मोक्षं यथा विरुणद्धीत्यर्थः । एवं मोक्षैक-हेतुरपरोक्षज्ञानं केन भवतीति जिज्ञासायां तद्विरोधिनिरासेनाह– **विरुद्धेति ॥ यावत्** यदा । अप्रमत्तः श्रवणादौ । अप्रमत्तपदोक्तं विशद-माह– **अविस्मृतिरिति ॥** सदोद्योगाच्छ्रवणाच्च विचारतः शास्त्राभ्यास इति योजना । शास्त्रं नाम किं यस्य सदा श्रवणं कार्यमित्यत आह– **शास्त्रं वेदाः पञ्च इति ॥** वेदाश्चत्वारः प्रसिद्धाः । पञ्चमो वेदोनाम क इत्यपेक्षायामाह– **भारतमिति ॥ भागवतं** भगवद्विषयं भागवतादि ।[१]

अपजहि परिघमित्युक्तः परिघः परिघ इव परिघो विघ्न इत्यन्यथा-प्रतीतिं निवारयन्नाह– **त्रिलोकेति** ॥[२] त्रिलोकप्राप्तिपरिघास्त्रयः सन्तु किमर्थं तदपगमः प्रार्थ्य इत्यतो भोगायेत्याह– **मृत इति** ॥ एष हवै यज्ञस्य मात्रां वेदेत्येतदप्रतीतेर्व्याचष्टे– **य इति** ॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमच्छान्दोग्योप-निषद्भाष्यटीकायां जयतीर्थपूज्यचरणशिष्यव्यासतीर्थकृतायां द्वितीयोऽध्यायः ॥**

---

१. शैवब्राह्मणपुराणव्युदासाय भागवतमित्युक्तम् । भगवद्विषयमित्यर्थः । तथा च भागवतादिवैष्णवपुराणमेव पञ्चमवेदकोटिनिष्ठमिति भावः ।

२. त्रिलोकप्राप्तिप्रतिबन्धकीभूताः प्रसिद्धार्गलतुल्या इत्यर्थः ।

# अथ तृतीयाऽध्यायः

## अथ प्रथमः खण्डः

## मधुविद्यानिरूपणम्

उप.– ॐ असौ वा आदित्यो देवमधु तस्य द्यौरेव तिरश्चीनवंशोऽन्तरिक्षमपूपो मरीचयः पुत्राः ॥ १ ॥

भा.– य आदित्यगतो विष्णुः स एव मधुनामकः ।
मदधिर्मध्विति प्रोक्तो मदः सुखमिहोच्यते ॥

अ इत्याधिक्यमुद्दिष्टं मद् ज्ञानततिरुच्यते ।
तद्वत्ता ततिरुद्दिष्टा तेनानुभव ईरितः ॥

अधिकोऽनुभवो यस्य सर्वस्मादीप्सितादपि ।
सोऽयं मद इति प्रोक्तः सर्वं हि सुखसाधनम् ॥

तत्पूर्णो मधुनामा स्यात् तृतीयोऽतिशयार्थकः ।
देवानामुपजीव्यत्वात् स देवमधुनामकः ॥

आदित्वादाततत्वाच्च[१] ज्ञानरूपत्वतस्तथा ।
आदित्य इति सम्प्रोक्तः प्रसिद्धमधुवच्च सः ॥

तिरोवंशादिसंयुक्तो द्युनाम्नी च द्युसंस्थिता ।
प्रकाशादिगुणैः श्रीस्तु वायोराश्रयरूपतः ॥

तिरोवंश इतिप्रोक्ता मध्वपूपस्तु मारुतः ।
तस्मिन् सन्निहितो विष्णुर्विशेषेण यतः सदा ॥

१. "आदित्वाच्च ततत्वाच्च" पाठान्तरम् ।

**सोऽन्तरिक्षमितिप्रोक्तः स्वान्तस्सम्यग्घरीक्षणात् ।**
**अन्तरिक्षस्थितश्चासौ वस्वाद्या मधुकारिणः ॥**

**तत्पुत्रास्तु मरीच्याद्यास्सूर्यरश्मिषु संस्थिताः ।**
**तिर्यक् स्थित्वा वशे कुर्याद्यस्माद्देवी रमा हरिम् ॥**

**भक्त्यैवातस्तिरोवंशस्तिर्यक्त्वं प्रणतिः स्मृता ।**
**तिर्यक्स्थित्वा स्वसंस्थं तु वशीकुर्याद्यतस्ततः ॥**

**वंशस्तिरश्चीनोऽन्योऽपि यस्मिन्नाप्यमुपस्थितम् ।**
**सोऽपूप आप्यो भगवान् मध्वाज्यादिप्रसिद्धगम् ॥**

**भाष्यविवृतिः–** वस्वादिदेवा उपासिता उपासकस्य निर्विघ्नेन स्वर्गादि प्रयच्छन्तीत्युक्तम् । ते च नानादितः स्वमहिम्नैव वसुपदादिमन्तः वसूनामेवैको भूत्वेत्याद्युक्तेः अतः कस्यचिदुपास्त्येति वक्तव्यम् । कोऽसौ तदुपास्य इत्यपेक्षायां उपास्यं पञ्चभिः पर्वभिः प्रपञ्चेन निरूपयति– **असौ वा आदित्यो देवमध्वित्यादिना** ॥ काव्यवत् प्रसिद्धमधुसादृश्यसम्पादनं क्रियत इति प्रतीतिं निवारयन् ब्रह्मविद्यात्वस्फोरणाय व्याचष्टे– **य इत्यादिना** ॥ केन निमित्तेन मधुनामा भगवान् इत्यत आह– **मदधिर्मध्विति प्रोक्त इति** ॥ मदो धीयतेऽस्मिन्नित्यसौ मदधिर्मदधिरेव मधुर्मदाश्रयत्वान्मध्विति प्रोक्त इत्यर्थः ।[१] भवतु मदधिर्मधु, मदः क इत्यपेक्षायामाह– **मद इति** ॥ उन्मादो मद इति प्रसिद्धेः कथं मदः सुखमित्यतस्तावदक्षरार्थमाह– **अः[२] इति** ॥ ज्ञानततिश्च नाम तद्वत्ता ज्ञानवत्तोदिष्टा[३] । ज्ञानवत्वमेव विशदमाह– **तेनेति** ॥ तेन ज्ञानततेरेव-

१. निर्वचनत्वाद् दशब्दस्य लोप इकारस्योकार इति भावः ।

२. मदशब्दान्तर्गतेन अ इत्यनेनेत्यर्थः ।

३. नात्र ज्ञानस्य ततिरिति विवक्षितम् । अपितु ज्ञानेन ततिः पूर्णत्वमिति । तथाच ज्ञानवत्वं लब्धम् । तदपि विषयत्वेनैव लब्धम् ।

मर्थत्वेनानुभवो[१]ऽनुभवविषयो ज्ञानततिशब्दार्थ ईरितः । अक्षरार्थमुक्त्वा पदार्थमाह– **अधिक इति** ॥ सर्वस्मादपीप्सितादाधिक्येनानुभवविषयो मदश्च सुखं चेत्येक इत्यर्थः । ननु मदस्याधिक्ये[२]नानुभवविषयत्वं कुत इत्यतस्तदनुभवेन समर्थयते– **सर्वमिति** ॥ सर्वं सुखसाधनं ह्यनुभूयतेऽत उक्तं युक्तमित्यर्थः ।

ननु मदधिरेव मधु तथा च किमर्थं मदधिरित्यनुक्त्वा मध्वित्युक्तमित्यतः प्रयोजनमाह– **तत्पूर्ण इति** ॥[३] मध्विति प्रयोगेऽपि कथं सुखपूर्णत्वमागतमित्यतस्तत्र शाब्दन्यायमाह– **तृतीय इति** ॥ इकारापेक्षयोकारस्य तृतीयत्वम्[४] । [५]देवमधुत्वप्रकाराप्रतीतेस्तद्व्याचष्टे–**देवानामिति** ॥ प्रसिद्धादितिपुत्रादित्यत्वप्रतीतिं निवारयन् अक्षरार्थकथनेनापूर्वमादित्य शब्दार्थमाह– **आदित्वादिति** ॥ तस्य द्यौरेव तिरश्चीनवंश इत्येतदप्रतीतेः पूर्वापेक्षितपूरणपूर्वकं व्याचष्टे **प्रसिद्धेति** ॥[६] प्रकाशादिगुणयुक्तत्वात् द्युनाम्नी द्युसंस्थिता ।[७] श्रीस्तु लक्ष्मीर्वायोराश्रयरूपत्वात्तिरोवंश इति प्रोक्ता । श्रियो वायोराश्रयत्वेऽपि कथं तिरश्चीनवंशत्वमित्यतस्तदुत्तरत्वेन तस्यान्तरिक्षमपूप इत्येतदप्रतीतेर्व्याचष्टे– **मध्वपूप इति** ॥ प्रसिद्धवंशस्येव श्रियोऽपि वायुरूपापूपाश्रयत्वाद्वंश इति प्रोक्तेत्यर्थः । मारुतस्यापूपत्वं कथमित्यतः प्रसिद्धमध्वपूपवद्विशेषेण मधुनामकभगव-

१. साक्षीत्यर्थः ।

२. सुखस्य सर्वेप्सिताधिक्येन इति खपाठः।

३. तच्छब्देन मदपरामर्शः ।

४. तृतीयत्वादेव इति खपाठः ।

५. आदेशभूत उकारोऽतिशयार्थकः पूर्णत्ववाचीत्यर्थः । तृतीयोऽतिशये इति महाव्याकरणसूत्रादिति भावः ।

६. देवानां मध्विव मध्विति तर्पकत्वेन साम्यात् मधुत्वमत्रेति ज्ञातव्यम् ।

७. प्रकाशादिगुणैर्द्युनाम्नी श्रीस्तु श्रीरेव, नलोकः इति भावः ।

त्सन्निधानस्थानत्वादित्याह– **तस्मिन्निति** ॥ भवतु मारुतो मधुस्थान-त्वादपूपस्तस्यान्तरिक्षत्वं केनेत्यत आह– **सोऽन्तरिक्षमिति** ॥ प्रसिद्धान्तरिक्षस्थितश्च । मरीचयः पुत्रा इत्येतदप्रतीतेरपेक्षितं पूरयन् व्याचष्टे– **वस्वाद्या इति** ॥[१] वस्वाद्या मुधुकारिणः मरीच्याद्यास्तत्पुत्रकाः पुत्रकाः । सूर्यमण्डललक्षणक्षौद्रपटलस्य रश्मिलक्षणनाडीसंस्थिता इत्यर्थः । प्रसिद्धवंशवदपूपाश्रयत्वेन वंशः श्रीरिति गौणीवृत्तिरुक्ता । इदानीं वशयतीति वंश इति योगवृत्तिमप्याह– **तिर्यगिति** ॥ किं बलाद्वशे कुर्या-दित्यत उक्तं– **भक्त्यैवेति** । केयं लक्ष्म्यास्तिर्यकूस्थितिरित्यत आह– **तिर्य-त्त्वमिति** ॥ प्रसिद्धवंशोऽपि तच्छब्दप्रवृत्तिनिमित्तं तदेवेत्याह– **तिर्यगिति** ।[२] मारुते अपूपशब्दप्रवृत्तिं[३] च निरुच्य दर्शयति – **यस्मि-न्निति** ॥ अप् आप्यमुपस्थितं यस्मिन्नसावपूप इत्यर्थः । आप्यः क इत्यपेक्षयाह– **आप्य इति** ॥[४] आप्यशब्दो लिङ्गव्यत्ययेनानुवर्तते । अब्विकारत्वादिति भावः । प्रसिद्धमध्वपूपेऽप्येतदेव तच्छब्दप्रवृत्तिनिमित्त-मित्याह– **मध्विति** ॥ आज्यादिमधुप्रसिद्धगं प्रसिद्धमध्वपूपगतमित्यर्थः ॥ १ ॥

## मधुनामकवासुदेवोपासना

**उप.– तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्य ऋच एव मधुकृत ऋग्वेद एव पुष्पं ता अमृता आपस्ता वा एता ऋचः ॥ २ ॥**

---

१. आद्यपदेन रुद्रादित्यादयो ग्राह्याः ।

२. स्वसंस्थं मध्वपूपम् । अनेन वशयतीति वंश इति निर्वचनं सूचितम् । अन्यद् योग्यतया लब्धमिति द्रष्टव्यम् ।

३. प्रवृत्तिनिमित्तमिति खपाठः।

४. मुक्तैः प्राप्यत्वादिति भावः ।

एतमृग्वेदमभ्यतप९ँस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्य९ँ रसोऽजायत ॥ ३ ॥

तद्व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतद्यदेतदादित्यस्य रोहित९ँ रूपम् ॥ ४ ॥ १ ॥

## रश्मिमधुनाड्यादिपदानामर्थकथनम्

भा.– प्राच्यरश्मिषु संस्थस्तु रतिशंमानरूपतः[१] ।
प्राच्यरश्मिरिति प्रोक्तो वासुदेवाभिधो हरिः ॥

एतद्द्विधा नालमिति नाडीत्यंश उदाहृतः ।
स्वरूपांशैर्विना प्राप्तुं नालं हि प्रापितांशिनम् ॥

ऋग्वेदमानिनश्चैव वह्न्याद्या वसवस्त्वृचः ।
अर्च्यत्वात् प्रथमं चैव विशेषाद्यज्ञदेवताः ॥

**भाष्यविवृतिः**– तस्य ये प्राञ्चो रश्मयस्ता एवास्यापूपस्य प्राच्यो मधुनाड्य इत्येतद्भगवत्परत्वाप्रतीतेस्तद्गतरूपविशेषं स्फोरयन् व्याचष्टे– **प्राच्येति** ॥ प्राच्यरश्मिसंस्थस्तन्नामा वासुदेवश्च नाडीशब्दाभिधेयोऽपि स एव । तथाच नाडीशब्दः केन निमित्तेनेत्यतः तं निरुच्य दर्शयति– **एतदिति** ॥ कः किं प्राप्तुमेतद्विना नालमित्यत आह– **स्वरूपांशैरिति** ॥ अंशिनं मूलरूपं प्रापिता [२]स्वरूपांशैर्वासुदेवादिभिर्विना तं प्राप्तुं नालं समर्थो हीति योजना। ऋच एव मधुकृतो यजूंष्येव मधुकृत इत्यादि वस्वाद्याः मधुकारिण इति सामान्येन व्याख्यातम् । तत्कुत इत्यतस्तद्भसव

---

१. स्वरतिर्मानरूपतः हृपाठः ।

२. अधिकारी

उपजीवन्ति तद्रुद्रा उपजीवन्तीत्याद्यनुसारेण स्पष्टं व्याचष्टे– ऋग्वेदे-त्यादिना ॥[१] तेऽह्यर्च्यत्वादृङ्नामानश्च । कथम् । यज्ञदेवतात्वात् । प्रथमं प्रथमसवने[२] विशेषादर्च्या हि वसव इति योजना ॥ ४ ॥ इति प्रथमः खण्डः ॥

## अथ द्वितीयः खण्डः

## मधुनामकसङ्कर्षणोपासना

**उप.– अथ येऽस्य दक्षिणा रश्मयस्ता एवास्य दक्षिणा मधुनाड्यो यजूꣳष्येव मधुकृतो यजुर्वेद एव पुष्पं ता अमृता आपः ॥ १ ॥**

**तानि वा एतानि यजूꣳष्येतं यजुर्वेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥**

**तद्व्यक्षरत् तदादित्यमभितोऽश्रयत् तदा एतद्यदेतदादित्यस्य शुक्लꣳ रूपम् ॥ ३ ॥ २ ॥**

**भा.– इन्द्राद्या यजुरुद्दिष्टा रुद्रा इन्द्रसखा यतः ।**
**इन्द्रशव्दोदितो वायुः स याज्यः सोमभुक्पुरः ॥**
**स हि शंकरपूर्वाणां रुद्राणां मुख्य एव च ।**

**भाष्यविवृतिः–** इन्द्राद्या रुद्रा यजुरुद्दिष्टाः[३] । इन्द्रस्य रुद्रेषु प्रवेशः कथं इत्यतो रुद्रा इन्द्रसखा यत इत्युक्तम् । यतः कारणाद्रुद्रा इन्द्रसखायो अत इन्द्रस्य रुद्रेषु प्रवेश इत्यर्थः । सच न प्रसिद्ध इन्द्र इत्याह– इन्द्र-

१. अभिमानिनि शब्दस्य मुख्यत्वादिति भावः ।

२. प्रातःसवने इत्यर्थः ।

३. यजुःशब्दवाच्याः ।

शब्दोदितो **वायुरिति** ॥ अत्रेन्द्रः श्रुतो वायुरिति कुत इत्यत आह– **स याज्य इति** ॥ सः माध्यन्दिनसवने **सोमभुजां** रुद्राणां **पुरः** पूर्वं याज्यो यतोऽतः इति पूर्वेण सम्बन्धः । प्रसिद्धन्द्रस्येन्द्रेण मुखेनेत्युक्तशङ्करपूर्व-रुद्राधिक्यानुपपत्तेश्चात्रेन्द्रो वायुरेवेत्याह– स हीति ॥ ३ ॥[1] इति **द्वितीयः खण्डः** ॥

## अथ तृतीयः खण्डः

## मधुनामकप्रद्युम्नोपासना

**उप.– अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः सामान्येव मधुकृतः सामवेद एव पुष्पं ता अमृता आपः ॥ १ ॥**

**तानि वा एतानि सामान्येतꣳ सामवेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥**

**तद्व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतद्यदेतदादित्यस्य परं कृष्णꣳ रूपम् ॥ ३ ॥ ३ ॥**

**भा.– सामनामान आदित्या मासशः समभोगतः ॥**
**इन्द्रो वरुण उद्दिष्टो यज्ञेषु ब्रियते यतः ।**
**आदित्यानामधिपतिः स हि विष्णुनियोजितः ॥**
**विष्णुस्तूपास्यरूपत्वान्नोपासकगणे युतः ।**

**भाष्यविवृतिः**– वरुणेन मुखेनेत्युक्ते वरुणोऽपि न प्रसिद्धो वरुण इत्याह **इन्द्र इति** ॥ इन्द्रस्य वरुणत्वप्रसिध्यभावात् कथमेतदित्यतो योगवृत्तिं व्युत्पाद्य दर्शयति **यज्ञेष्विति** ॥ प्रसिद्धवरुणः किन्न स्यादित्यतो

---

१. शङ्करपूर्वाणां रुद्राणां मुख्यश्च स वायुरेव प्रसिद्धः न पुरन्दर इत्यर्थः ।

बाधकमाह **आदित्यानामिति** ॥ आदित्यानामधिपतित्वेनेन्द्रोहि विष्णुनियोजितो नात्र प्रसिद्धवरुण इत्यर्थः । भगवदवतारो विष्णुनामादित्योऽस्ति तस्याप्युपासकगणेषु प्रवेशप्रतीतिं निवारयति **विष्णुरिति** ॥३॥
**इति तृतीयः खण्डः ॥**

## अथ चतुर्थः खण्डः

## मधुनामकानिरुद्धोपासना

**उप.– अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुनाड्योऽथर्वाङ्गिरस एव मधुकृत इतिहासपुराणं पुष्पं ता अमृता आपः ॥ १ ॥**

**ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतप॑स्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्य॑ रसोऽजायत ॥ २ ॥**

**तद्व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतद्यदेतदादित्यस्य परं कृष्ण॑ रूपम् ॥ ३, ४ ॥**

**भा.– इतिहासपुराणानां सोमाद्या अभिमानिनः ॥**
**अथर्वाङ्गिरसां चैवाप्यथर्वाङ्गिरनामकाः ।**
**अधरं वर्तयेयुस्ते वृष्टिमङ्गरसास्तथा ॥**
**मनस्त्वात् प्राणरूपत्वादथर्वाङ्गिरसस्ततः ।**

**भाष्यविवृतिः**– यतस्तेऽधरं वृष्टिं वर्तयेयुस्तथांऽगानां रसाश्च ततोऽथर्वाऽङ्गिरोनामकाः ।[१] अङ्गरसत्वं कथं तेषामित्यतो मनःप्राणाभिमानित्वादित्याह– **मनस्त्वादिति** ॥ ३ ॥[२] **इति चतुर्थः खण्डः ॥**

---

१. अथर्वाणश्चाङ्गिरसश्चेत्यथर्वाङ्गिरसोऽधर्वाङ्गिरोनामकाः इत्यर्थः । धकारस्य थकारो निर्वचनत्वात् । अङ्गेत्यत्राकारस्येकारोऽतिशयार्थः ।

२. सोमस्य मनस्त्वात् मनोऽभिमानित्वात् । इतरेषां मरुतां प्राणरूपत्वात् प्राणापानादिरूपत्वात् । इन्द्रियाभिमानित्वाद्वेत्यर्थः ।

## अथ पञ्चमः खण्डः

## मधुनामकनारायणोपासना

उप.– अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाड्यो गुह्या एवादेशा मधुकृतो ब्रह्मैव पुष्पं ता अमृता आपः ॥ १ ॥

ते वा एते गुह्या आदेशा एतद्ब्रह्माभ्यतप॑ꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्य॑ꣳ रसोऽजायत ॥ २ ॥

तद्व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतद्यदेतदादित्यस्य मध्ये क्षोभत इव ॥ ३ ॥

ते वा एते रसाना॑ꣳरसा वेदा हि रसास्तेषामेते रसास्तानि वा एतान्यमृतानाममृतानि वेदा ह्यमृतास्तेषामेतान्यमृतानि ॥ ४ ॥ ५ ॥

भा.– गुह्यादेशा ब्रह्मपदे ये योग्या ब्रह्मणा सह ॥

सर्वगुह्योपदेष्टारः सर्वेषां गुरवो हि ते ।
ब्रह्मेति सर्वदेवानां नामानन्तत्त्वतः स्मृतम् ॥

भाष्यविवृतिः–गुह्यादेशा इत्येकमेव समासपदम् ।[१] पृथक् प्रयुक्तत्वेऽपीति भावेन तत्पदं व्याचष्टे– गुह्येति ॥ ब्रह्मपदे ये योग्यास्ते ब्रह्मणा सह गुह्यादेशाः ।[२] गुह्यादेशाः कुतो जातास्त इत्यतः सर्वे गुह्यापदेष्टृत्वादित्याह– सर्वेति ॥[३] तदेवोपपादयति– सर्वेषामिति ॥ ब्रह्मैव पुष्पमित्यतदनेकार्थप्रतीतेर्व्याचष्टे– ब्रह्मेति ॥ वेदानां ब्रह्मत्वं च बृहधातोर्वृध्यर्थत्वेन ''अनन्ता वै वेदा'' इत्यनन्तत्वत इत्यर्थः ।

---

१. श्रुतौ २. गुह्यशब्दवाच्याः इत्यर्थः ।

३. गुह्यं गोप्यं आदिशन्ति इति निरुक्त्या सर्वगुह्योपदेष्टृत्वं निमित्तमुक्तं भवति ।

भा.– ऋग्वेदादींस्तु ते देवा अग्र्याद्याः संव्यचारयन् ।
मधु ब्रह्मव्यक्तिकृत्वात् ते वै मधुकृतः स्मृताः ॥

ज्ञानपोपकरत्वात् तु वेदाः पुष्पाभिधाः स्मृताः ।
अन्यत्र मधुकृत् पोषन्नित्यत्वादमृताश्च ताः ॥

वेदवाचः सुरैः पेया भोग्यत्वादाप ईरिताः ।
वेदपानं विचारश्च श्रवणं पाठ एव च ॥

देवैर्विचारितेभ्यश्च वेदेभ्यो व्यक्ततां गतः ।[१]
ज्ञानानन्दस्वरूपत्वाद् यशस्तेजस्वरूपकः ॥

इन्द्रियं परमैश्वर्याद्वीर्यरूपश्च सर्वदा ।
सर्वानुग्रहशक्तित्वादन्नाद्यो वलरूपतः ॥

रसनामा च भगवान् ........ ..........

**भाष्यविवृतिः**– ननु वेदस्य शब्दत्वेन तापायोग्यत्वादृग्वेदमभ्यतपन् यजुर्वेदमभ्यतपन्नित्याद्युक्तं तत्तपनं किमित्यत आह– **ऋग्वेदादीनिति** ॥[२] वस्वाद्या मधुकृतः केनेत्यत आह– **मध्विति** ॥ वेदानां पुष्पत्त्वं व्युत्पाद्य दर्शयति– **ज्ञानेति** ॥[३] अन्यत्र प्रसिद्धे पुष्पेऽप्येतदेव प्रवृत्तिनिमित्त-मित्याह– **अन्यत्रेति** ॥ ता अमृता आपः ता इति काः ? ता एताः

---

१. ''गताः'' हृपाठः । गतः भगवान् । गता इति पाठे वासुदेवसङ्कर्षणानिरुद्धनारायणा इत्यर्थः ।

२. तथाच ऋच इत्यादिकर्तृवाचकपदैः पूर्वप्रकृता वस्वद्याः साध्यान्ताः देवा एव विवक्षिताः। तपनंच विचार एवेति न कोऽपि दोष इति भावः ।

३. अनेन पोपकत्वमेव पुष्पशब्दप्रवृत्तिनिमित्तमिति सूचितम् ।

ऋचो वेत्यादिवाक्यं व्याचष्टे– **नित्यत्वादिति** ॥[१] भोग्यत्वादाप ईरिताः ।[२] भोग्यत्वं च केन कारणेनेत्यतः सुरैः पेया इति योजना ॥ ननु कथं वेदाः पेयाः अद्रवरूपत्त्वादित्यतस्तत्पेयत्व प्रकारमाह– **वेदेति** ॥ तस्याभितप्तस्य यशस्तेज इत्यादिवाक्यं प्रसिद्ध यशआद्यभूदिति प्रतीतिं निवारयन् व्याचष्टे– **देवैरित्यादिना** ॥ अद्यत इत्यन्नम् ।[३] तत्तात्पर्यं **सर्वानुग्रहेति** ॥ बलरूपत्वाद्रसः ॥

भा.– ........ .... ...... **संस्थितः सूर्यमण्डले ।**
**व्यक्षरद्धर्ममोक्षादीन् देवानां भगवान् हरिः ॥**

**ऋक्प्रोक्तो लोहिताकारो वासुदेवः परः पुमान् ।**
**स एव सूर्यलोहित्ये प्राच्यरश्मिषु संस्थितः[४] ॥**

**सङ्कर्षणः शुक्लवर्णो यजुर्वेदोदितः प्रभुः ।**
**शुक्ले वर्णे[५] च सूर्यस्य दक्षरश्मिषु संस्थितः[६] ॥**

**प्रद्युम्नः श्यामवर्णस्तु सामवेदोदितः प्रभुः ।**
**प्रत्यग्रश्मिषु सूर्यस्य श्यामवर्णेऽपि च स्थितः ॥**

**अनिरुद्धः सुनीलश्च इतिहासपुराणयोः ।**
**अथर्ववेदे चोक्तस्सन्नुदग्रश्मिषु संस्थितः ॥**

१. नित्यत्वादपौरुषेयत्वात् ।

२. सुरैर्भोग्यत्वात् पाल्यत्वादिति निमित्तान्तरम् । अप्शब्दस्य पानपालनरूपोभयार्थक-धातुजत्वस्य प्रसिद्धेरिति भावः ।

३. अन्ने स्थित्वाऽद्यते उपजीव्यते सर्वैरित्यन्नाद्यमिति व्याख्यातमिति ज्ञायते ।

४. च स्थितः पाठान्तरम् । ५. 'शुक्लवर्णे च' पाठान्तरम् ।

६. च स्थितः पाठान्तरम् ।

सुकृष्णे सूर्यरूपे च मध्ये नारायणः प्रभुः ।
ऊर्ध्वरश्मिषु संस्थश्च प्रोद्यदादित्यसप्रभः ॥

महामरीचिपुञ्जेन चलतीवाचलोऽपि सन् ।
स वाच्यः सर्ववेदानामेवं पञ्चात्मको हरिः ॥

वेदानां सारभूतोऽसौ वेदानां नित्यताप्रदः ।
अतोऽमृतानाममृतो रसानां रस एव च ॥

इति सामसंहितायाम् ॥

**भाष्यविवृतिः**– तद्व्यक्षरत्तदादित्यमभितोऽश्रयदित्येतदप्रतीतेः सौकयार्थं व्युत्क्रमेण व्याचष्टे– **संस्थित इति** ॥ तद्वा एतद्यदेतदादित्यस्य लोहितं रूपं यदेतदादित्यस्य शुक्लं रूपमित्यादिस्पष्टं भगवत्परत्वाप्रतीतेर्व्याचष्टे– **ऋक् प्रोक्त इत्यादिना** ॥ क्षोभत इव चलतीव दृश्यत इत्युक्तम् । तथा-दर्शने निमित्त[1]जिज्ञासायां तत्पूर्वमिवशब्दार्थं व्यञ्जयति– **महेति** ॥[2] तेवा एते रसानां रसा इत्याद्यप्रतीतेस्तात्पर्यपूर्वं व्याचष्टे– **स वाच्य इति** ॥[3]

## भगवत एव मधुविद्याप्रतिपाद्यता नाचेतनस्य

**न चाचेतनमात्रमुपासितं पुरुषार्थप्रदानशक्तम् । 'ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्' इति वाक्यशेषाच्चैतदवगम्यते । 'य एतामेवं ब्रह्मोपनिषदं वेद' इति च । कथं चाचेतनोपासनं ब्रह्मादिपदप्रदं भवति । 'न वै तत्र**

१. हेतुजिज्ञासायामिति खपाठः ।

२. अचलोऽपि समाहित दृष्टः चलतीव दृश्यत इत्यर्थः ।

३ एवं पञ्चात्मकोऽसौ हरिः वेदानां सारभूतः उत्तमवाच्यो यतोऽत एव रसानां रसतम इत्युच्यते । वेदानां नित्यताप्रदश्च यतोऽत एवामृतानाममृतश्चेत्युच्यते इति योजना ।

**न निम्लोचः[१] नोदियाय कदाचन । सकृदिव हैवास्मै भवति' इत्यादि च मुक्तस्यैव मुख्यतो युज्यते ।**

**भाष्यविवृतिः**– सूर्यबिम्बे मध्वपूपभावनार्थं काव्यवत्प्रसिद्धमधुसादृश्य-संपादनमात्रं क्रियत इत्येवं किं न स्यात् । न स्यात् । प्रमाणेन व्याख्यातत्वात् । युक्त्याच दूषयति– **न चेति** ।। पुरुषार्थार्थदं ह्युपासनमचेतनं न तद्दानशक्तमशक्तमित्यर्थः ।[२] सूर्यबिम्बस्य मध्वपूपत्व-भावनामात्रार्थत्वे अब्रह्मविद्याप्रसञ्जनं च दूषणं इत्याशयवान् स्वव्याख्याने तदानुगुण्यं वाक्यशेषमुदाहृत्य दर्शयति– **जेष्ठायेति** ।। एतत् प्रसिद्धमधुवच्च स इत्येतत् ।[३] वाक्यशेषान्तरानुगुण्यं च दर्शयति– **एतामिति** ।। ब्रह्मण उपनिषदं ब्रह्मोपनिषदम् ।[४] यदा साध्यानामेवैको भूत्वेत्यादिनोक्त-ब्रह्मपदादिलक्षणफलदानाशक्तं तदा सुतरां तद्दानायोग इत्याह– **कथं चेति** ।। बाधकान्तरमाह– **न वैतत्रेति** ।।[५] तत्र ब्रह्मस्वरूपे दोषो नवै नैव । दोषाभावमेकदेशेन दर्शयन्नाह– **न निम्लोच इति** ।। सूर्यास्तमयादि दोषास्तत्र न सन्तीत्यर्थः । इति ब्रह्मस्वरूपमुक्त्वा नह वा अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्मै भवतीति मुक्तस्वरूपमुच्यते । अचेतनोपास्त्यैतादृत्त्वस्यायोगाच्च न तद्व्याख्यानं युक्तमित्यर्थः ।

१. निम्रोचः हृपाठः ।

२. अत्र हि वस्वादिपदप्राप्तिरूपपुरुपार्थप्रदत्वमेतद्विद्याप्रतिपाद्यस्योच्यते । नच तदुक्तविधस्याचेतनस्य प्रतिपाद्यत्वे सम्भवति । तस्य तत्रास्वातन्त्र्यात् । अत उक्तरीत्या ब्रह्मैव प्रतिपाद्यमिति भावः । अस्वातन्त्र्योपपादनायैव "अचेतनमात्रम्" इत्युक्तम् । चेतनानधिष्ठितमित्यर्थः ।

३. एतत् ब्रह्मैव प्रतिपाद्यं नाचेतनमित्येतत् ।

४. षष्ठ्यर्थश्च प्रतिपाद्यप्रतिपादकभाव इत्यर्थः ।

५. 'कदाचन' इत्यनन्तरं 'देवास्तेनाहं सत्येन मा विराधिषि ब्रह्मणा' इति श्लोकोऽप्यनुपपन्नः स्यादिति शेषः । हे देवास्तेन सत्येन ब्रह्मणा परब्रह्मणा । तत्प्रसादेनाहं मा विराधिषि अवृद्धिं न प्राप्नुयामिति श्लोकार्थः ।

ननु सकृद्दिवेत्यत्र मुक्तफलमुच्यत इति कुतः । येन मद्व्याख्यानमयुक्त्याऽनुपपन्नं स्यात् इत्यतस्तदुपपादयति– **सकृदिति** ॥ सकृत् सदेत्यर्थः ।[1]

**भा.– यशस्तेज इन्द्रियवीर्यान्नाद्यरसत्वं च भगवन्तं विना कस्य मुख्यतो युज्यते । 'तस्य नाम महद्यशः' ।**

**ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।**
**ज्ञानवैराग्ययोश्चैव[2] षण्णां भग इतीरणा ॥**

**'रसो वै रसः'**

**'सुखात्मकं षड्गुणविग्रहं परं हृदि स्थितं ब्रह्म निरञ्जनं स्वरुक् । ऐश्वर्यवैराग्ययशोविबोधवीर्यश्रिया पूर्णमहं प्रपद्ये ॥'**

**'अहं तत्तेजोरश्मीन्नारायणं पुरुषम्'[3] इत्यादेश्च । 'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः' इति च ।**

**भाष्यविवृतिः–** उक्तयशस्तेजस्त्वाद्यनुपपत्तेश्च न जडमत्रोक्तमित्याह– **यश इति** ॥ प्रमाणाभावादिति शेषः । भगवत्परत्वाङ्गीकारेऽपि कथमेषामत्र युक्तत्वं इत्यतः प्रमाणेन व्याख्याततत्वादित्याशयवान् प्रमाणान्तरैश्चोपपादयति– **तस्येत्यादिभिः** ॥ हरिश्च भगवानिति ग्राह्यम् ।[4] सुखात्मकं स्वरुगिति यश इत्यत्र मानम् । **अहम**–हेयम् । रश्मीनीरयतीति रश्मीत्,

१. सदा दिवसभवनरूपं च फलं मुक्तस्यैव मुख्यतो युज्यते नान्यस्येत्येकवाक्यतया योज्यम् ।

२. ''ज्ञानविज्ञानयोश्चैव'' पाठान्तरम् ।

३. 'पुरुषं जातमग्रतः' पाठान्तरम् ।

४. ''को नामलोके भगवत्पदार्थः'' इति प्रमाणप्रसिद्ध इति भावः ।

तत्तेज इत्यत्र मानान्तरम् । ननु भगवान् सूर्यबिम्बे तिष्ठतीति कुतः । येनात्र मधुतया तदुपास्तिरुच्यत इति प्रतीम इत्यतस्तत्र प्रमाणमुदाहरति– ध्येय इति ॥

**भा.– न चाचेतनस्यैश्वर्यादिरूपत्वं युज्यते । ज्ञानात्मको भगवानैश्वर्यात्मको भगवान् शक्त्यात्मको भगवान्' इति च श्रुतिः । 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' इति सर्ववेदप्रतिपाद्यत्वं भगवत उक्तं भगवता । 'स सर्वनामा स च विश्वरूपः प्रसीदतां ब्रह्म महाविभूतिः' इति च । 'सर्वे वेदा यत्पदमामनन्ति' 'ता वा एताः सर्वा ऋचः सर्वे वेदा सर्वे घोषा एकैव व्याहृतिः प्राण एव' ।**

**वेदे रामायणे चैव पुराणे भारते तथा ।**
**आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ॥**

**'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति' इत्यादेश्च ।**

**भाष्यविवृतिः**– पूर्वं यशस्तेजस्त्वादिकं भगवतोऽन्यस्य कस्यापि नोपपद्यत इति सामान्याकारेणोपपादितं इदानीं जडस्य सुतरामित्याह– **न चेति** ॥ कथञ्चिद्यशस्तेजसोरुपपत्तावपि सर्वथैश्वर्यादिकं नोपपद्यत इति वाऽऽह– **न चेति** ॥ ऐश्वर्याद्यात्मकत्वस्य साधितत्वेऽपि भगवतः प्रमाणान्तरेणापि साधयति– **ज्ञानेति** ॥ अचेतनमात्रमुपास्यतयोच्यत इति व्याख्याने सूत्रविरोधं चाह– **सर्वेति** ॥ तत्र वाक्यान्तराणां विरोधं चोदाहृत्याह– **स सर्वेति** । **एकैव व्याहृतिः व्याहरणमुक्तिः** ॥ प्रतिपाद्यैक्यात् प्रतिपाद्यश्च प्राण[१] एवेति योजना ॥

१. नारायण एवेत्यर्थः ।

भा.– उपनिषत्वाच्च विशेषतो न यत्किञ्चिदुच्यत इति वक्तुं युक्तम्।

विष्णुरुक्तः सर्ववेदैर्मन्त्रेषु च विशेषतः ।
आरण्यके विशेषेण नैवान्यत् किञ्चिदुच्यते ॥

कर्मार्थं च ब्राह्मणं स्यादमुख्यार्थविवक्षया ।
मुख्यतो विष्णुरेवैको ब्राह्मणेष्वपि कथ्यते ॥

आरण्यकेष्वृते विष्णुं नैवान्यत् किञ्चिदुच्यते ।
सूत्रात्मा तूच्यते विष्णोस्तद्विशिष्टत्ववित्तये ॥

कुत्रचित् तदुपास्तिश्च तस्याध्यर्धतनुत्वतः ।
तस्मिन् विष्णोरुपास्त्यर्थं नान्यथा किञ्चिदुच्यते ॥

इति ब्रह्माण्डे ।

**भाष्यविवृतिः–** युक्त्यन्तरविरोधं चाह– **उपनिषत्वादिति** ॥ उपनिषत्स्वप्यन्यस्योक्तिः कुतो न युक्तेत्यतस्तत्र प्रमाणमाह– **विष्णुरिति** ॥ सर्ववेदगतमन्त्रैर्विशेषत उक्तः । **अरण्ये** निर्जनप्रदेशेऽध्येतव्यत्वादारण्यक उपनिषदि । मन्त्रेषु च विशेषत इत्युक्त्या ब्राह्मणस्येषदन्यपरत्वं सूचितं तद्दर्शयति **कर्मार्थं चेति** ॥ ननु कथमारण्यकेष्वन्यन्नोच्यत इति सूत्रात्मनः क्वचिदुक्तेः । क्वचित्साधनसंप्रत्याधानमिति तदुपास्त्युक्तेश्चेत्यतस्तदुक्तेः प्रयोजनमाह– **सूत्रेति** ॥ तस्य सूत्रस्याभ्यधिकं ऋद्धतनुत्वतः कारणात् । सर्वविशिष्टप्रतिमात्वात्तस्मिन् विष्णोरुपास्त्यर्थं कुत्रचित्तदुपास्तिश्चोच्यत इति योजना ॥

भा.– 'यस्यां न मे पावनमङ्ग कर्म स्थित्युद्भवत्राणनिरोधमस्य ।
लीलावतारैरधितकर्म वा स्याद्वन्ध्यां गिरं तां विभृयान्न धीरः ॥'

'वित्तं त्वतीर्थीकृतमङ्ग वाचं हीनां मया रक्षति दुःखदुःखी'

'यन्न व्रजन्त्यघभिदो रचनानुवादाः
शृण्वन्ति येऽन्यविषयाः कुकथा मतिघ्नीः ।
यास्तु श्रुता हतभगैर्नृभिरात्तवीर्या-
स्तांस्तान् क्षिपन्त्यशरणेषु तमस्सु हन्त ॥

इत्यादिभगवद्वचनाच्च ।

'सर्वासु शाखास्वारणमावर्तयेदारणकमावर्तयेदुपनिषदमावर्तयेद् उपनिषदमावर्तयेत्' इत्युपनिषदभ्यासस्य सतात्पर्यं विहितत्वादभगवद्विषयस्य निन्दितत्वाच्च नोपनिषत्स्वन्यदुच्यते ।

अभ्यसेदधियज्ञं चाप्यधिदैवं विशेषतः ।
अध्यात्मं तु विशेषेण यस्माद् विष्णुस्त्रिषूदितः[१] ॥

इति स्कान्दे ।

मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्य इत्यहम् ।
इत्यस्या हृदयं साक्षान्नान्यो मद्वेद कश्चन ॥

इत्यादेश्च भगवदुपासना एव सर्वत्रोक्ताः ॥ ५ ॥

**भाष्यविवृतिः–** वाक्यान्तराण्युदाहृत्य तल्लब्धयुक्त्या च परव्याख्यानं दूषयति– **यस्यामित्यादिना** ॥ **निरोधः** संहारः । **अस्य** जगतः । **वन्ध्यां** निष्फलां न बिभृयान्नाभ्यसेदिति यावत् । **अतीर्थीकृतं** पात्रे अप्रतिपादितम् । **दुःखदुःखी** अतिशायितदुःखभाक् । **अरचनानुवादाः**

१. अधियज्ञं यज्ञमाधिकृत्यवर्तमानं ब्राह्मणम् । अधिदैवं देवानधिकृत्यवर्तमानं मन्त्रम् । अध्यात्मं आत्मानं परमात्मानं अधिकृत्य वर्तमानमारण्यकं विशेषेणाभ्यसेदित्यर्थः ।

रचनानुवादादन्याः । आत्तः सारो याभिस्ता **आत्तवीर्याः । अशरणेषु** रक्षकरहितेषु । इत्यादिभगवद्वचनाच्च । इत्यादिभगवद्वचनेनाभगवद्विषयस्य निन्दितत्वाच्च । आरणमावर्तयेदित्यादिना सर्वास्वपि शाखासूपनिषदभ्या-सस्याभ्यासेन सतात्पर्यं विहितत्वाच्च नोपनिषत्स्वन्यः परोहि भगवत इत्यर्थः । अभ्यसेन्मां विधत्त इत्यादिवाक्यद्वयेन च स्वव्याख्यानसमर्थन-व्याजेन परव्याख्यानं दूषयति ॥ सन्ध्यामुपासीत ज्योतिष्टोमेन यजे-तेत्यादिना मां प्रति विधत्ते श्रुतिः । इन्द्रादिशब्दैर्मामभिधत्ते च । अहं विकल्प्योऽपोह्यः। बहुरूपत्वाद्वै त्रय इत्यादिवचनविषयः । न सुरां पिबेदित्यादिनिषेधविषयश्च । इत्यस्या इत्यनेकप्रभेदयुक्तायाः श्रुतेरिति हृदयं इत्यभिप्रायं प्रायो मदन्यः कश्चिन्न वेदेत्यादेश्च भगवदुपासना एव नत्वन्यत् सर्वत्र वेदेषूक्ताः ॥ **इति पञ्चमः खण्डः ॥**

## अथ षष्ठः खण्डः

## मधुनामकवासुदेवोपासनाफलम्

**उप.– तद्यत् प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥**

**त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥**

**स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स य एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥**

**स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥ ४ ॥ ६ ॥**

**भा.–** प्रथमामृतस्य द्रष्टारो वसवस्त्वग्निपूर्वकाः ।
यावत् पश्यन्ति तं विष्णुं तावत् ते नान्यभोगिनः ॥

**एतदेव विशन्त्यद्धा मोक्षे ते तत एव च ।**
**स्वेच्छयैव समुद्यन्ति मुक्ताः सन्तो बहिस्तथा ॥**

भाष्यविवृतिः– एवं पञ्चरूपिणं भगवन्तं मधुतया प्रपञ्चेन निरूप्येदानीं के कस्यामृतस्य सेवकाः । किंच तेषां तत्फलमित्याकाङ्क्षायां तत्सर्वं पञ्चभिः पर्वभिः निरूपयति । तान्यप्रतिपत्तिविप्रतिपत्ती निवारयन् प्रमाणेन व्याचष्टे– **प्रथमामृतस्येत्यादिना** ॥ उपजीवन्तीत्युक्तमुपजीवनं किमात्मकमिति न ज्ञायते अतस्तद्‌ज्ञानसंपादनरूपमित्याह– **प्रथमामृतस्येति** ॥[1] न वै देवा अश्नन्तीत्याद्युपास्त्यादरपरं वाक्यं तद्व्याचष्टे– **यावदिति** ॥ प्राप्तपदानां वस्वादीनां मधूपासकानां मोक्षाख्यं फलमाह– **एतदेव रूपमित्यादि** ॥ तत्तथाऽप्रतीतेर्व्याचष्टे– **एतदेवेति** ॥ **इति षष्ठः खण्डः** ॥

## अथ सप्तमः खण्डः

## मधुनामकसङ्कर्षणोपासनाफलम्

उप.– **अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीन्द्रेण मुखेन । न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥**

**त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥**

**स य एतदेवममृतं वेद रुद्राणामेवैको भूत्वेन्द्रेणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स य एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥**

**स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥४॥७॥**

---

१. उपजीवन्तीत्यस्य पश्यन्तीत्यर्थ उक्तो भवति ।

भा.– एवं द्वितीयरूपं तु शिवाद्या वायुसंश्रिताः[१] ।
वायोर्हिरण्यगर्भत्वात् पदद्वयमुदाहृतम् ॥

रुद्राणामाश्रयत्वं च साध्यानामपि सर्वशः ।
अतो यजुर्विचारश्च सर्ववेदात्मनस्तथा ॥

वायोरेव विचारः स्याद् ब्रह्मणोऽपि विशेषतः ।
उभयाश्रयः स मोक्षोऽपि वायुरेव हि सर्वदा ॥

**भाष्यविवृतिः**– एवं शिवाद्या द्वितीयं रूपं निर्भरेणोपास्य विशन्तीति योज्यम् । वस्वादीनां यथैकरूपदर्शनमेकैकपदं च न तथा वायोरित्याह– **वायोरिति** ॥ ऊर्ध्वजन्मनि हिरण्यगर्भत्वात् । उभयो रूपयोर्मध्ये कस्य रूपस्य ज्ञानविशेष इति जिज्ञासायामाह ब्रह्मणोऽपि विशेषतो विचारः स्यादिति । न केवलं संसारे वायुरुभयाश्रय इत्याह– **उभयेति**[२] ॥ ४ ॥
**इति सप्तमः खण्डः ॥**

## अथ अष्टमः खण्डः

## मधुनामकप्रद्युम्नोपासनाफलम्

**उप.– अथ यत्तृतीयममृतं तदादित्या उपजीवन्ति वरुणेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥**

**त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥**

**स य एतदेवममृतं वेदादित्यानामेवैको भूत्वा वरुणेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स य एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥**

१. "वायुसंस्थिताः" पाठान्तरम् ।

२. हि यस्मात् मोक्षेऽपि उभयाश्रयस्तस्मात् सर्वदोभयाश्रयः ।

स यावदादित्यो दक्षिणतः उदेतात्तरतोऽस्तमेता द्विस्तावत् पश्चादुदेता पुरस्तादस्तमेताऽऽदित्यानामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥४-८॥

भा.– द्रष्टारोऽथ तृतीयस्य शक्रमुख्यादितेः सुताः ।

भाष्यविवृतिः– शक्रमुख्यादितेः सुता इत्यलुक्समासः । अलुगुपासनाऽनिर्भरत्वसूचकः ।[१] इति अष्टमः खण्डः ॥

## अथ नवमः खण्डः

## मधुनामकानिरुद्धोपासनाफलम्

उप.– अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

त एतदेव रूपमभिसंविशत्येतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेद मरुतामेवैको भूत्वा सोमेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स य एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥

स यावदादित्यः पश्चादुतेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता दक्षिणतोऽस्तमेता मरुतामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥४॥९॥

भा.– चतुर्थस्य तु सोमाद्या मरुतः .................

## अथ दशमः खण्डः

## मधुनामकनारायणोपासनाफलम्

उप.– अथ यत्पञ्चमममृतं तत्साध्याः उपजीवन्ति ब्रह्मणा मुखेन न वै देवा अश्नन्ति न पिवन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

---

१. आदित्या इत्यर्थः ।

त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेद साध्यानामेवैको भूत्वा ब्रह्मणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स य एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥

स यावदादित्यः उत्तरत उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्वं उदेताऽर्वाङस्तमेता साध्यानामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥ ४ ॥१०॥

भा.– ....... ...... .......... पञ्चमस्य च ॥

ऋजवो ब्रह्ममुख्या हि सुपर्णः शेष एव च ।
सरस्वती सुपर्णी च वारुणी साध्यनामकाः ॥

अन्योन्यमुखता मुक्तौ ब्रह्मणा समता तथा ।
वाक्शेषादेर्मुखं ब्रह्मा मुक्तावपि विशेषतः ॥

द्रष्टोभयस्यापि शिवो द्वितीयस्यान्तगस्य[१] च ।
मोक्षे त्वन्यत्र चैकस्य परतः शेषभावतः ॥

ये चैतत्पदयोग्यास्स्युर्देवाः पञ्च महागणाः ।
तेषामपि यदोपासा निच्छिद्रा मधुनामके ॥

तदा वस्वादितां प्राप्य मुक्तिमेष्यन्त्यसंशयम् ।

**भाष्यविवृतिः**– उपासकेषु स्पष्टमनुक्तेः सुपर्णशेषतत्पत्नीनां मधूपास्त्यभावप्रतीतिं निवारयन्नाह **सुपर्ण इति** ॥ ननु मुक्तौ ब्रह्मणां समत्वादुभयाश्रयः स मोक्षेऽपीत्युक्तं वायोस्तदाश्रयत्वलक्षणं मुख्यत्वं कथमित्यतस्तद्घटयन्नाह **अन्योन्येति** ॥ यद्यपि मुक्तौ ब्रह्मणां समता तथापि ब्रह्मणो मुखता[२] घटते । तस्यान्योन्यानतिक्रमरूपत्त्वादित्यर्थः । मुक्त-

१. 'अन्त्यगस्य' इपाठः ।

२. मुखशब्देनाप्राधान्याभावमात्रस्य विवक्षितत्वादिति भावः ।

ब्रह्मणः प्रति इति मुखत्वं तु यथा गौणं ब्रह्मणस्तथा किं मुक्तवागादीन् प्रति जिज्ञासायामाह **वागिति** ॥ वस्वादीनां सर्वदैकैकामृतद्रष्टृत्वमुक्तम् ॥ शिवस्य विशेषमाह **द्रष्टेति** ॥ परतः शेषभावतः शेषत्वानन्तरं, मोक्ष इति यावत् ॥ उभयस्याप्यमृतस्य द्रष्टा। अन्यत्र रुद्रत्वे त्वेकस्यैवेति योजना ।[१] पूर्वं प्राप्तपदानां मधूपासकानां वस्वादीनां मोक्षलक्षणं फलमुक्तम् । इदानीमप्राप्तपदानां तत्पदयोग्यानां मधूपासकानां तत्पदप्राप्त्यादिकं फलमाह– **स य एतदमृतं वेदेत्यादिना** ॥ तद्वाक्यजातं यस्य कस्यापि मधूपासकस्य तत्पदप्राप्तिर्भवतीति प्रतीतिं निवारयन् व्याचष्टे– **ये चैतदिति** ॥

## वस्वाद्याधिपत्यसम्बन्धिदेशकालनिरूपणम्

भा.– **उदेत्यास्तमयं यावद्याति भानुस्तु पर्वते ॥**

**उदयास्ताद्रिमध्यस्य वसवः पतयः स्मृताः ।**
**ततश्चास्तमयाद्यावदर्धरात्रं दिवाकरः ॥**

**दक्षिणादुत्तरं याति किञ्चित् पूर्वसमन्वितम् ।**
**तद्देशकालयोरीशा रुद्रा वायुपुरःसराः ॥**

**[२]वसुभोज्यादर्धकालमर्धदेशस्तथैव च ।**
**रुद्रभोज्योऽर्धरात्रात्तु याम आदित्यदैवतः ॥**

**पश्चिमात् पूर्वमार्गस्तु रौद्रादर्धः प्रकीर्तितः ।**
**ततः परोऽर्धयामस्तु सौम्याद् दक्षिणमार्गकः ॥**

---

१. यद्वा मोक्षार्थं परतः परजन्मनि । शेषत्वावस्थायां उभयस्यापि द्रष्टा । शेषभावतोऽन्यत्र तु शिवत्वावस्थायां एकस्यैव द्रष्टेति विवेकः ।

२. 'वसुभोग्यात्' पाठान्तरम् ।

**मारुतः काल उद्दिष्ट आदित्यार्धश्च देशतः ।**
**पश्चात्पश्चादुदेत्येव[१] पूर्वतोऽस्तमुपैति च ॥**

**ततस्तदर्धकालेन चोत्तरादुदितस्तथा ।**
**अस्तं दक्षिणतो याति स कालो मारुतः स्मृतः ॥**

**उदेत्यैन्द्रपुरे[२] चोर्ध्वमर्वागुदयपर्वते ।**
**अस्तमेति तदर्धेन ब्रह्मा तस्य पतिः स्मृतः ॥**

**भाष्यविवृतिः–** वसूनामेवैको भूत्वा रुद्राणामेवैको भूत्वेत्यादिना मधूपासकस्य स्वाराज्यं भवतीत्युक्तम् । किं तत्स्वाराज्यमिति जिज्ञासायां तदाह– **यावदादित्यः पुरस्तादित्यादिना ॥** तद्वाक्यमुदयास्तमयावप्य-प्रतीतेर्व्याचष्टे– **उदयपर्वते । उदेत्य** प्रतीत्य । **अस्तमयमदर्शनम् । यावत्** यावति काले यावति देशे च । उदयास्ताद्रिमध्यस्थदेशस्य तदागमन-कालस्य च । वसुभोज्यदेशकालापेक्षया कियन्तौ रुद्रभोज्यदेशकालावित्य-पेक्षायामुक्तं विशदमाह **वसुभोज्यादिति ॥** वसुभोज्याद्देशकालाच्च । **अर्धकालम्** अर्धकालः । अर्धरात्रात्परतो याम[३] आदित्यदैवतः । पश्चिमात्पूर्वमार्गस्तु आदित्यदैवतः। रौद्रान्मार्गादर्धः प्रकीर्तितः । **ततः** आदित्यदैवतात् । परोऽर्धयामस्तु सौम्याद्देशाद्दक्षिणमार्गकः मारुतः काल उद्दिष्टः । **देशतो अर्धः** आदित्यार्धः ।

ननु मेरुं प्रदक्षिणमावर्त्तमानस्यादित्यस्य कथं पुरस्तादुदेत्य पश्चादस्त-मेतीत्युदयास्तमयोक्तिरित्यतस्तद्घटयते– **पश्चादिति ॥** सत्यमेवं वस्तुगतिः। तथाऽपि तदुक्तिर्घटते । यतो मेरुपार्श्वे आरोहावरोहाभावेन पश्चात् पश्चा-

---

१. ''उदेत्यैव'' पाठान्तरम् । २. 'उदेत्येन्द्रपुरे' पाठान्तरम् ।

१. तावता कालेन गन्तव्यो देशः । आदित्यानामेव तावदाधिपत्यमित्युक्तार्थम् ।

दुदेत्यारोहावरोहे प्रतीत्य पूर्वतोऽवरोहे दर्शनं चोपेति तदपेक्षया तदुक्तिरित्यर्थः । ततः पर इत्युक्तं कालं विशदमाह– तत इति ॥ ततश्चादित्यकालानतरं **तदर्धकालेन** आदित्यकालार्धेन । **तदर्धेन** मारुतकालार्धेनेति ।

## वस्वादिदेवताकालव्यवस्था

भा.– **एकत्रिंशत्तु घटिकाः साधिका वसुदैवताः ।**
**तदर्धा रुद्रदैवत्यास्तत आदित्यदैवताः ॥**
**तदर्धा मारुता ब्राह्मास्तदर्धा देशतस्तथा ॥ इति च ।**

**रौद्रो द्विगुणीभूतो वसुकालो यावांस्तावान् भवतीति द्विस्तावत् । अर्ध इत्यर्थः । ब्राह्मे मुहूर्ते[1] इत्युषःकालस्य प्रसिद्धेश्च । रौद्रः काल इति पूर्वरात्रस्य प्रसिद्धेः । अपररात्रस्य सौम्यकालत्वाच्च तस्मिन् काले शीतमुत्पद्यते । मारुतकालत्वाद् वायुश्च वाति । आग्नेयकालत्वादेवाह्नि सैकघटिकं होमकर्माणि विशेषतः प्रवर्तन्ते ।**

**भाष्यविवृतिः**– ननु षष्टिघटिकाकालो ह्यहोरात्रस्तस्य वस्वादिभ्य उक्तक्रमेण विभागे कृतेऽपीषदूनघटिकाद्वयमवशिष्यते । तस्य देवता नोक्तेत्यस्ता एव देवतेत्याशयेन स्पष्टं कालविभागमाह– **एकेति** ॥ ततस्तदर्धा इति यावत् । चतुर्षु पर्वसु श्रुतं द्विस्तावदिति वाक्यं क्रमेण वस्वादिकालार्थत्वेन व्याख्यातम् । तथापि तद्वाक्येन स्फुटमप्रतीतेर्व्याख्याय तद्दर्शयति– **रौद्र इति** ॥ **द्विः**द्विगुणीभूतो रौद्रः । कालो वसुकालो यावांस्तावान् भवतीति द्विस्तावदिति योजना । वाक्यार्थमुक्त्वा तात्पर्यार्थमाह– **अर्ध इति** । वसुकालार्धो रौद्रः काल इत्यर्थः। अनयैव रीत्या द्विगुणीभूत आदित्यकालः रौद्रकालो यावांस्तावान् भवतीति द्विस्तावदि-

---

१. ''ब्राह्मो मुहूर्तः'' पाठान्तरम् ।

त्यादि योजना सर्वत्र द्रष्टव्या । अहरादिकालविशेषाः वस्वादिदेवताकत्वे-नोक्तास्तद्युक्त्याच समर्थयते– **ब्राह्म इत्यादिना ॥** प्रसिद्धेर्ब्रह्मदेवताकत्वेनेति शेषः ।[१] अर्धरात्रात्परयामस्यादित्यानामापि क्रौर्येण रौद्रः काल इति प्रसिद्धेश्चेत्यपि ग्राह्यम् । अपररात्रस्य सोमादिकालत्वे तिस्र उपपत्तीराह– **सौम्य इत्यादिना ॥**[२] उदयात्पूर्वमस्तमयात्परतः सैकघटिकम् ।[३]

## वस्वादिकालव्यवस्थायाः प्रामाणिकत्वनिरूपणम्

भा.– **अहः सर्वं वसूनां[४] तु परेषां रात्रिरेव च ।**
**प्रदत्ता विष्णुना पूर्वं नालमित्यब्रुवन् परे ॥**

**पुनर्विशेषतो दत्तं रुद्राणां मरुतां तथा ।**
**माध्यन्दिनं तृतीयं चाप्यादित्यानां प्रदत्तवान् ॥**
**विश्वेषामपि देवानां सामान्याद् वसुनामहः ॥ इति च ।**

**सर्वस्याधिपतिर्ब्रह्मा रुद्राद्यास्तु द्वयोर्द्वयोः ।**
**वसवस्त्वह्न एवेशाः सामान्यान्न[५] विशेषतः ॥ इति च ।**

**माध्यन्दिने तृतीये च रुद्रादे राज्यमिष्यते ।**
**तद्भृत्यत्वात् वसूनां तु प्रातःकाले विशेषतः ॥**
**तत्रापि वाय्वधीनत्वमग्न्यादीनां प्रकीर्तितम् ।**

**भाष्यविवृतिः**– नन्वहर्वसुस्वामिकमित्युक्तं तदयुक्तम् । माध्यन्दिनादि-

---

१. "ब्राह्मे मुहूर्ते चोत्थाय" इति स्मृतौ इत्यर्थः ।

२. शीतस्य सोमधर्मत्वादिति भावः ।

३. उदयात्पूर्वमर्धघटिकाऽस्तमयात् परत अर्धघटिकेति सैकघटिकमित्यर्थः ।

४. "सर्ववसूनां तु" ह्पाठः ।

५. "प्रातःकालः" ह्पाठः ।

सवनस्य तदेकदेशस्य रुद्रादिदेवताकत्वेन प्रसिद्धेरित्यतस्तद्धटकोक्त्या समर्थयते– **अहरिति** ॥ रुद्रादिभ्यो माध्यन्दिनादिसवनं दत्तं चेत् कथं वसूनामहरित्यत आह– **सामान्यादिति** । तथापि सामान्याद्वस्वभिमानेन वसूनामहरिति युक्तमित्यर्थः ।

ननु ब्रह्मण ईषदूनघटिकाद्वयाधिपत्यमुक्तं तन्महतोल्पमल्पस्य महदिति विरुद्धमित्यत आह– **सर्वस्येति** ॥[१] **द्वयोर्द्वयोः** सवनरात्रिभागयोः मध्यन्दिनसवनादिरुद्रादिदैवत्यमित्युक्तम् । तत्र किं वसूनामप्रवेशस्तर्हि नेत्याह– **माध्यन्दिन इति** ॥ **तद्भृत्यत्वात्** तदाज्ञावृत्तित्वात् । माध्यन्दिनसवनादेरपि स्वामित्वे कथं वसूनां प्रातः सवनमिति विशेषोक्तिरित्यत आह– **प्रातरिति** ॥ विशेषेण ।[२] प्रातःकालाधिपत्यं किं स्वातन्त्र्येण नेत्याह– **तत्रापीति** ॥[३]

## देशव्यवस्था

**भा.– एवं पृथिव्यां[४] रुद्राणामन्तरिक्षं प्रकीर्तितम् ॥[५]**

**मरुतां च द्विलोकेशा आदित्याः परिकीर्तिताः ।**
**सर्वेषामधिपो ब्रह्मा युवाधीशस्तु[६] मारुतः ॥**
**त्रिलोकाधिपतिश्चेन्द्रस्तेषामप्यधिपो हरिः ॥ इति च ।**

---

१. यद्यपि विशेषतो ब्रह्मा सर्वस्यापि कालस्याधिपतिरितरे च तदधीनतयैकदेशाधिपतयः । तथापि ईषदूनघटिकाद्वयस्येतरत्यागेन स एवाधिपतिरित्युक्तमुपपन्नमिति भावः ।

२. प्रातः कालो विशेषतयाऽनन्याधीनतया वसूनां भोग्य इति शेषः ।

३. अत्र वायुशब्देन ब्रह्माविवक्षितः । "सर्वस्याधिपतिर्ब्रह्मा" इत्युक्तत्वात् ॥

४. "एवं पृथिव्या रुद्राणां" हपाठः ।

५. "अन्तरिक्षे प्रकीर्तितम्" पाठान्तरम् ।

६. "द्युवाधीशस्तु" प्रपाठः ।

**स्वाराज्यं भोगः । स्वरञ्जनात् ।**

**भाष्यविवृतिः**— प्रसङ्गात् वस्वादीनां लोकविभागं चाह— **एवमिति** ॥ एवं [१] सवने यथा पृथिव्यामाधिपत्यं वसूनामिति शेषः । कीदृशं तदाधिपत्यमिति जिज्ञासायामुक्तम् — **स्वाराज्यमिति** ॥ तदव्याख्यातत्वादप्रतीतेर्व्याचष्टे— **स्वाराज्यमिति** ॥[२] स्वरंजनात् स्वाराज्यम् । भोगो विषयानुभव इत्यर्थः ।

## परमतविमर्शः

**भा.— न त्विन्द्राद्यमो द्विगुणकालं तिष्ठति तस्माद्वरुणस्तस्माद् सोम इत्यत्र किञ्चिन्मानम् । न च सोमाद् द्विगुणेव ब्रह्मा तिष्ठति । द्विपरार्धं हि तस्य कालः । इन्द्रादयो हि मन्वन्तरमात्रं तिष्ठन्ति । न च वसूनां पूर्वोदिशो रुद्राणां दक्षिण आदित्यानां पश्चिमो मरुतामुत्तर एव । नान्यत्रेत्यत्र प्रमाणमस्ति । तत्पक्षे रुद्रैः सहेन्द्रस्य दक्षिणत्वप्राप्तेश्च । न चेन्द्रशब्देन वायुस्तैर्गृहीतः । अत इन्द्रादेवेन्द्रस्य द्विगुणकालत्वमिति विरोधः ।**

**भाष्यविवृतिः**— एवं स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेतोत्तरतोऽस्तमेतेत्यादि प्रतिदिनं भवदुदयपरतया व्याख्याय तत्परिशुद्धये यत्परेषां तद्व्याख्यानं यावति काले सूर्यः पुरस्तादुद्यन् पश्चादस्तमेति तद्द्विगुणकालमैन्द्रपुरोद्वासे दक्षिणतो यमपुर्यामुदेत्योत्तरतोऽस्तमेतेत्यादि तद्दूषयति— **नत्विन्द्रादिति** ॥ इन्द्रापेक्षया द्विगुणकाले तिष्टति यमो, यमापेक्षया वरुणो, वरुणापेक्षया सोमो द्विगुणकालं तिष्ठतीत्यत्र किञ्चिन्मानं प्रत्यक्षादिष्वेकमपि प्रमाणं नैवास्ति, येन

---

१. प्रातः इति खपाठः ।

२. अनेन स्वं रञ्जयति सुखयति इति स्वराट् स्वराडेव स्वाराज्यमिति निर्वचनं सूचितं भवति ।

कालान्तरभाविदक्षिणाद्युदयपरतया व्याख्यानमुपपन्नं स्यादित्यर्थः । कालान्तरभाविदक्षिणाद्युदयपरतया व्याख्याने स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्व उदेत्यर्वाङस्तमेतीत्येतत् सर्वथाऽनुपपन्न-मित्याह– **न च सोमादिति** ।। हि लोकप्रसिद्धेः ।[१] सोमस्यैकपरार्धाव-स्थाने तद्द्विगुणकालं ब्रह्मा तिष्ठति काऽनुपपत्तिरित्यत आह– **इन्द्रादय इति** ।। वस्वाभिमानिकपूर्वदेशं परित्यज्य कालान्तरे रुद्राभिमानिकदक्षिण-देशे उदेतीति यो वस्वादीनां देशविभागनियम उक्तः सोऽपि प्रमाणा-भावेनायुक्त इत्याह– **न च वसूनामिति** ।। ऐन्द्रपुरे नष्टे पूर्वोदया-द्विगुणकालदक्षिणे य उदयास्त उक्तः स इतोऽप्ययुक्त इत्याह– **तत्पक्ष इति** ।।[२] तद्रुद्रा उपजीवन्तींद्रेण मुखेनेत्युक्त्या रुद्रैः सहेन्द्रस्य रुद्राणामेव तदाधिपत्यमित्युक्तदक्षिणाधिपतित्वप्राप्तेश्चेति योजना। इन्द्रेण मुखेनेत्युक्त इन्द्रोऽन्यश्चेत् प्रसिद्धेन्द्रस्य रुद्रैः सह दक्षिणाधिपतित्वं क ? इति शङ्कायां तत्पक्ष इत्युक्तं । तद्विवृणोति **नचेति** ।। प्रसिद्धेन्द्रस्य दक्षिणाधिपतित्वमस्तु को दोषः । सेन्द्रे इन्द्रपुरे नष्टे इति त्वद्व्याख्यानानुपपत्तिः । दूषणान्तर-चाह– **अत इति** ।। पूर्वोदयाद्द्विगुणकालो हि दक्षिणोदयस्ते मते । पूर्वाधिपतेरिन्द्रस्य दक्षिणाधिपतित्वस्याप्यङ्गीकारे इन्द्रादेवेन्द्रस्य द्विगुण-कालत्वमिति विरोध इत्यर्थः ।

**भा.– इन्द्रादिपुरीणामुद्वासत्वेनैवमङ्गीकारे तत् षोडशगुणत्वाद् ऊर्ध्वोदयस्यैकेन्द्रात् परतोऽनिन्द्रत्वमेव स्यात् । अथ तं त ऊर्ध्वं उदेत्येति तत्पक्षे पश्चादप्यादित्यभावात् कल्पान्तलयो[३] न स्यादित्यत्या-द्यनन्तदोपदुष्टत्वेऽपि ग्रन्थाल्पत्वायैवोपरम्यते ।।**

---

१. ''द्विपरार्धधिष्ण्यमध्यासितः इति प्रसिद्धिमाह ।

२. तत्पक्षे दक्षिणाद्युदयस्य पूर्वोदयद्विगुणकालत्वपक्षे ।

३. ''कल्पान्तलयोऽपि'' हपाठः । ''कल्पान्तलयोऽपि'' पाठान्तरम् ।

वस्वादीनां तु सर्वेषां सर्वदिक्षु पुराण्यपि ।
सन्त्येवमपि धीवृत्यै प्रत्येकं दिक्षुकथ्यते ।। इति च ।

**ऐन्द्रया उद्वासे रुद्राणामेवोदयाभाव इति च दोपः ।** अतो **यत्किञ्चिदेतत् ।**

**भाष्यविवृतिः**– कालान्तरभाविदक्षिणोदयाद्यङ्गीकारे बाधकान्तरमाह– **इन्द्रादीति ॥ एवमङ्गीकारे** दक्षिणोदयाद्यङ्गीकारे । **तत्पोडशगुणत्वात्** प्रथमोदयषोडशगुणत्वात् । अनिन्द्रत्वे चेन्द्रोद्देशेन वैदिकक्रियालोपः स्यादिति भावः ।[१] परव्याख्याने दोषान्तरमाह– **अथेति ॥** तत्पक्षे कालान्तरभाविदक्षिणाद्युदयपक्षे कल्पान्तलयोऽपि न स्यात् । कुतः तत ऊर्ध्व उदेत्य न वोदेति नास्तमेतेत्यस्यादित्यपरत्वाङ्गीकारेणादित्यस्य पश्चादपि भावादिति योजना । अनन्तदोषदुष्टमपि परव्याख्यानं कैश्चि-दूषणैर्दूषयित्वा दूषणान्तरानुक्तौ कारणं वदन् । उपसंहरति **इत्यादीति ॥** न च वसूनां पूर्वदेश इत्यत्र वस्वादीनां पूर्वदेशादिनियमेनाभाव उक्तः । सांप्रतं वस्वादीनां सर्वेषामपि सर्वदिक्ष्वपि पुरभावे प्रमाणमाह– **वस्वा-दीनामिति ॥** वस्वादीनां सर्वेषां सर्वदिक्ष्वपि पुराणि सन्ति चेदिन्द्रस्य पूर्वस्यां, यमस्य दक्षिणस्यां पुरमिति विशेषोक्तिः कथमित्यत आह– **एवमपीति ॥ धीवृत्यै** ध्यानार्थम् । परव्याख्यानदूषणस्योपसंहृतत्वेऽ-

१. **अयं भावः** । त्वन्मते दक्षिणाद्युदयकाले एकेन्द्रात् परत इन्द्राभाव एव स्यात् । तथाच तदुद्दिष्टकर्मविलोपे वेदाप्रामाण्यप्रसङ्गः । न च पूर्वेन्द्रस्तदानीमस्तीति वाच्यम् । त्वया तत्पुरीसहितस्य तस्योद्वासेन दक्षिणाद्युदयाङ्गीकारात् । नचेन्द्रतत्पुर्योरुद्वासानन्तर-मल्पकाले एव प्रलयात् कर्मप्रवृत्तिरेव नास्तीति वाच्यम् । ऊर्ध्वोदयकालसमाप्त्यनन्तरं हि प्रलयोऽङ्गीकृतः । ऊर्ध्वोदयकालस्य च पूर्वोदयकालषोडशगुणत्वात् । इन्द्रनाशा-नन्तरमेव न प्रलय इति बहुतरकाले कर्मप्रवृत्त्यादिसत्त्वेन तदभावापत्तिरनिष्टैवेति । आदिपदबहुवचनाभ्यां यमनाशानन्तरं पश्चिमाद्युदयकालस्यायमत्वं स्यदित्याद्यपि सूचितम् ।

पीत्याद्यनन्तदोषदुष्टत्वेऽपीत्यस्य प्रौढवादत्वनिरासाय दोषान्तरमाह– **ऐन्द्रा** इति ॥ ऐन्द्राः पुर्या उद्वासे नाशे रुद्राणामिन्द्रपरिवारत्वेन रुद्राणामेवोदयाभावोऽवस्थित्यभाव इति च दोषः स्यादित्यर्थः । अतो विचारासहं परव्याख्यानमित्यर्थः ।

भा.– **उदेति पूर्वतः सूर्यो निम्लोचति च पश्चिमे ।**
**एवं नियम उद्दिष्टो ब्रह्मणा विष्णुचोदनात् ॥**

**द्विगुणं द्विगुणं कालमुदित्वा दक्षिणादिषु ।**
**मध्ये चावस्थितिः[१] पश्चाद् ब्रह्माणं याचिता पुरा ॥**

**हिरण्यकेन सूर्यस्य हिरण्याक्षेण वै पुनः ।**
**तदासुराणां देवत्वं ब्रह्मा तत्प्रददौ तयोः ॥**

**तच्छुत्वेन्द्रादिभिः प्रोक्तः कथं प्रादा वराविमौ ।**
**देवता हि विनश्येयुरेवं दत्ते वरे त्वया ॥**

**इत्युक्तो देवतैः प्राह ब्रह्मा लोकपितामहः ।**
**न मया स वरो दत्तो दैतेयानां सुराः क्वचित् ॥**

**येन युष्मद्विनाशः स्यात् ततो व्यैतु[२] च वो भयम् ।**
**दक्षिणाद्युदयो यस्तु स हि दैनन्दिनो मया ॥**

**अभिप्रेतो नैव चायं कालान्तरगतः क्वचित् ।**
**अर्धनाड्युत्तरा नाडीः सकाष्ठा नित्यशो रविः ॥**

---

१. "व्यवस्थितिः" पाठान्तरम् ।

२. "व्येतु" पाठान्तरम् ।

**पश्चादशोत्तरां गच्छेत् पूर्वं रात्रे तु दक्षिणात् ।**
**तदर्धं पश्चिमात् पूर्वं[१] तदर्धं चोत्तरादपि ॥**

**दक्षिणां च तदर्धं स ऊर्ध्वादर्वाक्च गच्छति ।**
**दक्षिणाद्युदयस्त्वेष न तु कालान्तरे क्वचित् ॥**

**यदोत्तरस्मात् द्विगुणः पूर्वो भवति वै सुराः ।**
**तदापि द्विगुणत्वं स्यात् तन्मयाऽत्र विवक्षितम् ॥**

**अहःसाम्येऽपि क्रमश आतपस्याल्पकालतः ।**
**[२]गिर्यावृतेः क्षिप्रमन्येषूदयास्तमयाविव ॥**

**भाष्यविवृतिः–** कालान्तभाविदक्षिणाद्युदयस्यासुरमतत्वाच्च न तद्व्याख्यानं युक्तमित्याशयेन तादृगाख्यायिकां पठति– **उदेतीति** ॥ देवत्वं च याचितमिति शेषः । दिनेदिने भवो दैवंदिनः । दक्षिणाद्युदयः किं प्रकारस्त्वयाऽभिप्रेत इत्यपेक्षायां तत्प्रकारमाह– **अर्द्धेति** ॥ रविर्नित्यशः पूर्वरात्रेऽर्धनाड्युत्तराः सकाष्ठाः पञ्चदशनाडीः दक्षिणात् उत्तरां दिशं गच्छेदिति योजना । भवतु दैनन्दिनो दक्षिणाद्युदयो विवक्षितस्तथाऽपि द्विगुणं द्विगुणं द्विगुणकालमुदितित्वे प्रार्थितत्वाद्दैनन्दिन्दक्षिणाद्युदयस्य पूर्वोदयद्विगुणत्वादि कथमित्यतस्तत्प्रकारं दर्शयति– **यदेति** ॥ पूर्व उदयकालः दैनन्दिनश्चेद्दक्षिणाद्युदयो विवक्षितस्तर्हि पूर्वेदयापेक्षया दक्षिणाद्युदयेष्वहरल्पमिति प्राप्तमित्यत आह– **अहरिति** ॥ दक्षिणाद्युदयाहः पूर्वोदयाहःसमानमित्यर्थः । दक्षिणाद्युदयेषु पूर्वोदयाहःसाम्ये कथं दक्षिणत उदेतोत्तरतोऽस्तमेतेत्याद्युक्तोदयास्तमयावित्यत आह– **अहःसाम्येऽप्यन्येषूदयास्तमयाविवेति** । उदयास्तमयाभावेऽप्युदयास्तमयोक्तिः कुतः कारणादित्यत आह– **गिर्यावृतेः क्रमश आतपस्याल्पकालत** इति ॥

१. ''पूर्वां'' हृपाठाः ।   २. गिर्यावृत्तेः पाठान्तरम् ।

भा.– कालान्तरे भाविनं तु दक्षिणाद्युदयं पुनः ।
अपेक्ष्यैव वरो दत्तो द्वितीयो देवता मया ॥

समयश्च कृतो नित्यो मया सूर्यस्य चानघाः ।
पूर्वस्मादुदयो नित्यं[१] पश्चिमेऽस्तमयस्तथा ॥

नियमो नान्यथाऽयं स्यात् कदाचित् केनचित् क्वचित् ।
तस्मान्न वो भयं क्वापि प्रोक्ता इत्थं सुरास्तदा ॥

विशोका अभवन् सर्वे ययुः स्वं स्वं निकेतनम्[२] ॥ इति च ।

एतदेव मोक्षधर्मेषु बलिवासवसंवाद उक्तम् । देवान् प्रति ब्रह्मणो वचनं रहस्यत्वादविज्ञाय बलिना दक्षिणाद्युदय उक्तः । इन्द्रेण तु ब्रह्मवचनं जानता दक्षिणाद्युदयो नास्तीत्युक्तम् ।

दैतेययोर्वरं ज्ञात्वा त्वविज्ञाय सुरान् प्रति ।
ब्रह्मणोक्तं हि बलिना वासवं प्रत्युदीरितम् ॥

दक्षिणाद्युदयान्ते तु त्वां जेष्यामि पुरन्दर ।
इत्युक्तस्तमुवाचेन्द्रो न कदाचन तद्भवेत् ॥

ब्रह्मणा नियमो यस्मात् कृतः प्रागुदयो रवेः ।
इत्युक्त्वा तु जगामेन्द्रो दिवमैरावतस्थितः ॥

इति च ॥ ६-१० ॥

भाष्यविवृतिः– भवतु दैनन्दिनो दक्षिणाद्युदयो विवक्षितो भवता तथाऽप्यनिष्टमेव नः[३] । हिरण्यकेन दक्षिणाद्युदयेऽसुराणां देवत्वस्य प्रार्थितत्वात् । भवता च तस्य दत्तत्वात् । दैनन्दिनदक्षिणाद्युदयेऽसुराणां

१. ''नित्यः'' इ.पाठः । २. 'निवेशनम्' इ.पाठः । ३. ततः ।

देवत्वाप्राप्तेरित्यत[1] आह– **कालान्तर इति** ॥ भवतु कालान्तरभाविदक्षिणाद्युदयापेक्षया द्वितीयवरदानं तथाऽप्यनिष्टमेव भवदिच्छया कालान्तरे सूर्यस्य दक्षिणाद्युदयेऽसुराणां देवत्वप्राप्तेरित्यत आह– **समय इति** ॥ कालान्तरभावी दक्षिणाद्युदयः आसुरत्वेन मोक्षधर्मेषु च प्रसिद्ध इत्याह– **एतदेवेति** ॥ एतदेवेत्युक्तमेव विशदमाह– **बलिनेति** ॥ ब्रह्मणा स्वाभिप्रायस्य[2] प्रकटीकृतत्वात् । कथमेवं बलिनोक्तमित्यत उक्तम्– **देवान् प्रतीत्यादि** ॥ मोक्षधर्मगतबलिवासवसंवादवाक्यं चोदाहरति– **दैतेययोरिति** ॥ **इति दशमः खण्डः** ।

## अथ एकादशः खण्डः

## प्रलये भगवत उदयास्ताभावसमर्थनम्

**उप.– अथ तत ऊर्ध्वं उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता तदेष श्लोकः ॥ १ ॥**

**भा.– न वै तत्र न निम्लोचो नोदियाय कदाचन ।**
**देवास्तेनाहꣳ सत्येन मा विराधिषि ब्रह्मणा ॥ इति ॥ २ ॥**

**अथ सूर्यस्थितो विष्णुरादित्यस्त्वादिमूलतः ।**
**आदानाद्वापि देवानामूर्ध्वं गच्छति मण्डलात् ॥**

**प्राप्य वैकुण्ठलोकं च [3]नोदेत्यस्तं न चैति सः ।**
**एकलः प्रलये स्थाता देवता नात्र संशयः ॥**

---

१. देवत्वप्राप्तेरिति खपाठः ।

२. प्रकटितत्वात् इति खपाठः ।

३. 'नोदेति'' हृपाठः ।

तेन सत्येन न व्यृद्धिमाप्नुयां[१] ब्रह्मणा कचित् ।
इत्युवाच पुरा ब्रह्मा देवेभ्यः स चतुर्मुखः ॥

भाष्यविवृतिः– अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेता एकल एव मध्ये स्थातेति प्रलयपरं वाक्यं तथा प्रतीतेर्व्याचष्टे – **अथ सूर्यस्थित** इत्यादिना ॥ वैकुण्ठधाम्न्युक्तसूर्योदयास्तमयराहित्ये प्रस्ताप्योदाहृतश्लोके पूर्वार्धस्य स्पष्टार्थत्वादुत्तरार्धं व्याचष्टे– **तेनेति** ॥ **मा विराधिषि व्यृद्धिं** सिद्धिराहित्यं न प्राप्नुयाम् ॥ १-२ ॥

**उप.– न ह वा अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्मै भवति च एतामेवं ब्रह्मोपनिषदं वेद ॥ ३ ॥**

**तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यस्तद्धैत-दुद्दालकायारुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच ॥ ४ ॥**

**इदं वा व तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्याय वाऽन्तेवासिने ॥ ५ ॥**

**नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूय इत्येतदेव ततो भूय इति ॥ ६ ॥ ११ ॥**

भा.– एतां विद्यां तु यो वेद नित्यमस्य दिवा[२] भवेत् ।
वैकुण्ठधामसंस्थस्य मुक्तस्यानुदयास्तकम् ॥

तदेतद्भगवान् विष्णुः प्रादाज्ज्ञानं विरिञ्चये ।
विरिञ्चिर्मनवे प्राह प्रजाभ्यो मनुरेव च ॥

---

१. 'व्याप्नुयां'' हृपाठः । २. ''दिवाऽभवत्'' हृपाठः ।

पूरयित्वा तु पृथिवीं रत्नैः सप्तसमुद्रिणीम् ।
दत्वापि गुरवे नैव पूर्यते गुरुदक्षिणा ॥
देवास्तूपासनायोग्या एकैकस्यामृतस्य हि ।
सर्वस्योपासने ब्रह्मा तदन्ये ज्ञानमात्रके ॥
उपासने नैव योग्यास्तद्योग्या हि सुरा यतः ॥ इति देवश्रुतौ ।

**ब्रह्मणा परेण मा विराधिषि । भगवत्प्रसादादवृद्धिं न प्राप्नुयामित्यर्थः ॥ ११ ॥**

**भाष्यविवृतिः**– एतद्विद्याधिगन्तुर्महत्त्वं प्रशंसयन् मोक्षं फलमाह– **न ह वा इति** ॥ तत्तथाऽप्रतीतेर्व्याचष्टे– **एतामिति** ॥

महदुपदेशपरंपरागता ह्येषेति[१] प्रशंसति– **तद्धैतद्ब्रह्मेत्यादिना** ॥ तत्तस्मात्संप्रदायभावात् ॥ अद्यतनोऽपि **प्रणाय्याय** प्रणयवते ज्येष्ठपुत्रायेदं ब्रह्म प्रब्रूयात् । तद्वाक्यं व्याचष्टे– **तदेतदिति** । एतद्विद्योपदेष्टुः सदृशगुरुदक्षिणाभावाच्चैषा महतीत्याह– **यदीति** ॥ **अस्मै** एतद्विद्योपदेष्ट्रे । **धनस्य** धनेन । तद्व्याचष्टे– **पूरयित्वेति** ॥ सर्वाधिकारिकत्वप्रतीतिं निवारयन्निरूपितमधुविद्योपास्तौ योग्यानाह– **देवा इति** ॥ ब्रह्मणा मा विराधिषीत्येतद्ब्रह्मणा न व्यृद्धिं प्राप्नुयामिति यथामूलं व्याख्यातम् । इदानीं भाष्यत्वाद्ब्रह्मा चतुर्मुख इति प्रतीतिं निवारयंस्तत्पदं तात्पर्यपूर्वकं व्याचष्टे **ब्रह्मणेति** ॥ **इति एकादशः खण्डः** ॥

## अथ द्वादशः खण्डः

## गायत्रीप्रतिपाद्यसूर्यान्तर्गतभगवदुपास्तिः

**उप.– गायत्री वा इदꣳ सर्वं भूतं यदिदं किञ्च वाग्वै गायत्री वाग्वा इदꣳ सर्वं भूतं गायति च त्रायते च ॥ १ ॥**

१. चैषेति खपाठः ।

## हयग्रीवमत्स्यादिरूपवाग्रूपानामुपासनम्

भा.– यदिदं किञ्च भूतं प्रभूतं परिपूर्णं तत्सर्वं गायत्री भगवानेव । भू बहाविति धातोः । बहुः पूर्णतायामिति च ।

यदिदं परितः पूर्णं मत्स्यकूर्मादिरूपकम् ।
तदिदं भगवान् विष्णुस्सर्वान्तःस्थित एव च ॥

तन्निःसृतत्वाद् वेदानां गायकस्त्राति चाखिलम् ।
अतो गायत्रिनामासौ वासुदेवः परः पुमान् ॥

भूमा भूतमिति प्रोक्तः पूर्णत्वात् पुरुषोत्तमः ।
अनन्यापेक्षमुद्रिक्तं सर्वस्य च नियामकम्[1] ॥

यद्यत्तत्तद्विष्णुरेव नान्यदेतादृशं क्वचित् ।
स एव भगवान् विष्णुर्वाङ्नामा वाचि संस्थितः ॥
वचनाद्धयशीर्षाख्यो गायत्र्यां च स आस्थितः ।

भाष्यविवृतिः– सूर्यान्तर्गतत्वेन भगवान् प्रकृतोऽत एव तत्प्रतिपदिका गायत्री च प्रकृता अतस्तन्नाम्नस्तन्निष्ठामस्योपास्तिमाह– **गायत्रीत्यादिना** ॥ यदिदं किं च इदं सर्वं भूतं गायत्री वै इति सर्वभूतस्य गायत्र्यात्मकत्व-प्रतीतिं निवारयन् व्याचष्टे– **यदिदमिति** ॥ यदिदं किञ्च भूतं प्रभूतं परिपूर्णं मत्स्यादिकं सर्वान्तस्थितं च तदिदं सर्वं गायत्रीनामा भगवानेव, नतु गायत्र्याः सर्वात्मकत्वमित्यर्थः । ननु भूधातोः सत्तार्थत्वप्रसिद्धेः कथं भूतं प्रभूतं परिपूर्णमित्यवतारक्रमेणापि भूतमित्यस्य परिपूर्णार्थत्वव्याख्यान-मित्यतो भूधातोः बहुत्वार्थत्वादित्याह– **भूवहाविति** ॥ ननु भूधातो-

१. ''विनियामकम्'' हृपाठः ।

बहुत्वार्थत्वेऽपि बहुत्वस्य सङ्ख्याविशेषत्वात् कथम् ? पूर्णत्वमागतमित्यतो बहुत्वस्य पूर्णत्वेन प्रसिद्धेरित्याह– **बहुरिति** ॥[१] एवं प्रथमवाक्यं स्ववाक्येन व्याख्यायाप्रतिपत्तिविप्रतिपत्ती निवारयन् प्रमाणेन व्याचष्टे– **यदिदमित्यादिना** ॥ यदिदं परितो देशतः कालतो गुणतश्च पूर्णं मत्स्यादिरूपकम् । यच्च सर्वतः स्थितं तदिदं सर्वं गायत्री नामा भगवान् विष्णुरवेति योजना ॥ केन निमित्तेन भगवान् गायत्रीनामेत्यत आह– **गायति च त्रायते चेति** ॥ तत्र गायतृत्वस्वरूपाप्रतीतेस्तद्वाक्यं व्याचष्टे– **तदिति** ॥ भूतमित्येतत् पूर्णमिति व्याख्यातं तत्कथं शब्दलब्धमित्यतस्तद्दर्शयति– **भूमेति** ॥ योजनातु पुरुषोत्तमः पूर्णत्वात् भूतमिति प्रोक्तः । कथं? भूधातुजो भूमा, भूशब्दः पूर्णत्ववाची, भूतशब्दश्च भूधातुजोऽतः पूर्णत्ववाचीति यत्पूर्णं सर्वं भगवानित्युक्तम् । तर्हि रमाऽपि पूर्णत्वाद्भगवानिति प्राप्तमित्यतः पूर्णत्वमनन्यापेक्षत्वेन विशिनष्टि– **अनन्येति** ॥ गायत्र्यनुषक्तवागादिनिष्ठतया भगवदुपास्त्यन्तराण्याह– **वाग्वै गायत्रीत्यादिना** । गायत्रीनामा भगवान् वाग्वै । कुतः इदं सर्वं भूतं प्रभूतं वाग्वै वाङ्नामकमिति योजना । तद्वाक्यतयाऽप्रतीतेर्व्याचष्टे– **स एवेति** ॥ गायत्रीनामक एवेति यावत् । वक्तीति वागिति व्युत्पत्तिं दर्शयति– **वचनादिति** ॥ वाक्स्थितमूर्त्तिविशेषमाह– **हयेति** ॥

## पृथिव्याख्यतुरीयभगवद्रूपोपासना

**उप.– या वै सा गायत्रीयं वाव सा येयं पृथिव्यस्या॑ हीद॑ सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयन्ते ॥ २ ॥**

**भा.– स एव पृथिवीनामा पृथिव्यामपि संस्थितः ॥**

---

१. तथा च पूर्णस्यैव मुख्यतो बहुशब्दवाच्यत्वेन प्रसिद्धत्वात् । मुख्यस्यैव च ग्राह्यत्वात् तत्पर्यायेणापि भूतशब्देन पूर्णमेव ग्राह्यमिति भावः ॥

**विष्णौ हि पृथिवीसंस्थे जगत्सर्वं प्रतिष्ठितम् ।**
**नातिशेते च तं कश्चित् स हि सर्वाधिको हरिः ॥**

**भाष्यविवृतिः–** या वै सा गायत्रीत्यादिप्रसिद्धपृथिवीमात्रपरत्वप्रतीतिं निवारयन् व्याचष्टे– **स एवेति** ॥ गायत्रीनामैव । गायत्रीनामा विष्णुः पृथिवीत्युक्तम् । तस्यां हीदं सर्वं प्रतिष्ठितमेतामेव नातिशीयन्ते इति वाक्यद्वयेन सर्वाश्रयत्वसर्वोत्तमत्वलक्षणहेतुद्वयेन समर्थयते । तत्स्पष्टं तथाऽप्रतीतेर्व्याचष्टे– **विष्णाविति** ॥ एवं शरीरस्य हृदयस्य च विष्णुत्वेऽस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्त इति प्राणाश्रयत्वसर्वोत्तमत्वलक्षणयुक्तिप्रतिपादकवाक्यद्वयस्य व्याख्यानं द्रष्टव्यम् ॥

## शरीराख्यपञ्चमभगवद्रूपोपासना

**उप.– या वै सा पृथिवीयं वाव सा यदिदमस्मिन् पुरुषे शरीरमस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीर्यन्ते ॥ ३ ॥**

**भा.– पृथुत्वात् पृथिवीनामा स एवान्तःशरीरगः ।**
**शरित्वादीरणाच्चैव शरीरं भगवानजः ॥**
**पुरुषो जीव उद्दिष्टस्तस्मिन्नेव स्थितो विभुः ।**[१]

**भाष्यविवृतिः–** या वै सा पृथिवीत्यादिवाक्यं विष्णोर्जीवशरीरस्थत्वतन्नामवाच्यत्वमाह । तत्तथाऽप्रतीतेर्व्याचष्टे– **पृथुत्वादिति** ॥ शरीरस्यान्तः अन्तःशरीरं पुरुषः तस्मिन् गतोऽन्तःशरीरगः । शरित्वात्सुखरतिरूपत्वात् । यदिदमस्मिन् पुरुषे शरीरमित्येतत्सामान्यतो व्याख्याय भाष्यत्वात् स्पष्टं व्याचष्टे– **पुरुष इति** ॥

---

१. "तस्मिन्नन्तःस्थितो विभुः" पाठान्तरम् ।

## हृदयाख्यषष्ठभगवद्रूपोपासना

उप.– यद्वै तत्पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे हृदयमस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥ ४ ॥

भा.– योऽसौ जीवे स्थितो विष्णुः शरीरमिति नामकः ॥

शंत्वाच्च रतिरूपत्वादीरणाच्च स एव तु ।
जीवचैतन्यरूपस्य हृदयेऽपि व्यवस्थितः ॥

अयनाद्धृदि विष्णुः स हृदयं कीर्तितो बुधैः ।

भाष्यविवृतिः– यद्वैतदिति वाक्यं भगवता हृदयाधिष्ठितत्वात्तन्नामित्वमाह ॥ तत्प्रसिद्धहृदयपरत्वप्रतीतिं निवारयन् व्याचष्टे– स एवत्विति । अयनात् स्थितेः ।

## भगवतः पादचतुष्टयविवृतिः

उप.– सैषा चतुष्पदा षड्विधा गायत्री ।

तदेतदृचाभ्यनूक्तं–

तावानस्य महिमा ततो ज्यायाꣳश्च पूरुषः ।
पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति ॥ ६ ॥

भा.– गायत्र्यां संस्थितो विष्णुः स्त्रीरूपः सूर्यसप्रभः ॥

द्वितीयश्चैव मत्स्यादिर्भूतनामावतारगः ।
तृतीयो वाचि संस्थश्च स्त्रीरूपो हयशीर्षकः ॥

चतुर्थः पृथिवीसंस्थः स्त्रीरूपः पीतवर्णकः ।
जीवस्यान्तर्गतो व्याप्य शरीरमितिनामकः ॥

पञ्चमस्तद्धृदिस्थस्तु[१] षष्ठो हृदयनामकः ।
गायत्रीनामको विष्णुरेवं षड्विध उच्यते ॥

त्रिभिः स्वरूपपादैश्च भिन्नेनैकेन चैव हि ।
गायत्रीनामको विष्णुश्चतुष्पात् संप्रकीर्तितः ॥

भिन्नपादः[२] सर्वजीवास्तस्य सादृश्यमात्रतः ।
स्वरूपपादा विष्णोस्तु त्रयो हि दिवि संस्थिताः ॥

नारायणो वासुदेवो वैकुण्ठ इति ते त्रयः ।
अनन्तशयनं चैव तथाऽनन्तासनं हरेः ॥

बहुलक्षोच्छ्रिते नित्ये विमाने संस्थिते यतः[३] ।
चित्प्रकृत्यात्मनि ततो दिवीति कथितं श्रुतौ ॥

लोकत्रयविवक्षायां परतो लक्षयोजनम् ।
सर्वं द्यौरिति विज्ञेयं ततस्ते दिविसंस्थिताः ॥

दिवः परश्च भगवान् सप्तलोकविवक्षया ।

भाष्यविवृतिः– एवं भगवतो गायत्रीभूतवाक्पृथिवीशरीरहृदय-लक्षण-षड्विधत्वं निरूप्य तदनुवदंश्चतुर्विधत्वमाह– **सैषेति** ॥ सैषा षड्विधा गायत्री चतुष्पदेति योजना ॥ तत्र षड्विधत्वपरमनुवादवाक्यं स्फुटं व्याचष्टे– **गायत्र्यामित्यादिना** ॥

---

१. "हृदिस्थश्च" पाठान्तरम् ।

२. "भिन्नपादाः" पाठान्तरम् ।

३. "विमानेनियतं स्थितः" पाठान्तरम् । "विमाने संस्थितं यतः" हृपाठः ।

सैषा गायत्री चतुष्पदा चतुःस्वरूपेत्युक्तम् । तानि चतूरूपाणि कानि कुत्र तिष्टन्तीति जिज्ञासायां प्रस्ताव्याह– **तदेतदित्यादिना** ॥ सहस्रशीर्षा पुरुष इत्यादिना अस्य पुरुषस्य तावान्महिमा उक्तः । पुरुषस्तु ततोऽपि ज्यायान् । महिम्ना ज्यायस्त्वमेवाह पादोऽस्येत्यादि समग्रपुरुषसूक्तेनेति योजना । तत्र भूतानामितरपादवत् स्वरूपपादत्वं प्रतीयत इत्यतस्तद्व्याचष्टे– **त्रिभिरित्यादिना** ॥ ननु पाद इति चतुर्थो भागस्तथा च भिन्नत्वे कथं पादत्वमित्यत आह– **तस्येति** ॥ सर्वजीवानां ज्ञानादिना तस्य सादृश्यमात्रतः पादवत्पाद इत्युक्तमित्यर्थः । किंनामानः त्रयः पादा इत्यपेक्षायामाह– **नारायण इति** ॥[१] ननु वैकुण्ठस्य सत्यलोकोपरि स्थितत्वादस्तु वैकुण्ठस्य दिविस्थितत्वं न तु नारायणवासुदेवयोः अनन्तशयनानन्तासनयोर्भूप्रदेशस्थितत्वादित्यतस्तद्घटयन्नाह– **अनन्तेति** ॥ नित्यत्वं घटयितुमुक्तं **चिदिति** । ननु विमानस्य बहुलोकोच्छ्रितत्वेऽपि ततो बहुलक्षोच्छ्रितस्य स्वर्गस्य द्युत्वादनन्तशयनानन्तासनयोः कथं दिविस्थित्वमित्यतस्तद्घटयन्नाह– **लोकेति** ।[२] उक्तरीत्या नारायणादेर्दिविस्थितत्वेऽथ यदतः परो दिवो ज्योतिर्दीप्यत इति दिवःपरत्वस्थितत्वं कथमित्यतो वैकुण्ठस्य तद्घटयन्नाह– **दिव इति** ॥

## प्रकारान्तरेण भगवतः पादचतुष्टयविवृतिः

**उप.– यद्वै तद्ब्रह्मेतीदं वाव तद्योऽयं बहिर्धा पुरुषादाकाशो यो वै स बहिर्धा पुरुषादाकाशः ॥ ७ ॥**

---

१. श्वेतद्वीपगो नारायणः, अनन्तासनगो वासुदेवः, वैकुण्ठस्थो वैकुण्ठ इति शब्दवाच्या इति शेषः ।

२. तथाच भूर्भुवःस्वरिति लोकत्रयविवक्षायां लक्षयोजनोच्छ्रितान्तरिक्षोपरितनानां श्वेतद्वीपानन्तासनवैकुण्ठानां द्युत्वात् तस्थं रूपत्रयं दिवि संस्थितमित्युपपन्नमिति भावः ।

अयं वाव स योयमन्तः पुरुप आकाशो यो वै सोन्तः पुरुप आकाशः ॥ ८ ॥

अयं वाव स योऽयमन्तर्हृदय आकाशो यो वै सोऽन्तर्हृदय आकाशस्तदेतत् पूर्णमप्रवर्ति पूर्णामप्रवर्तिनीꣳ श्रियं लभेत य एवं वेद ॥ ९ ॥ १२ ॥

भा.– परंब्रह्मेति भगवान् सर्वगः सम्प्रकीर्तितः ॥

स एव जीवस्य बहिर्हृदयाकाश आस्थितः ।
योऽयं हृदयगः सोऽथ जीवान्तर्व्याप्य संस्थितः ॥

व्याप्तो जीवान्तरे योऽसौ स जीवहृदि संस्थितः ।
एवं चापि चतुष्पात्त्वं वासुदेवस्य कीर्तितम् ॥

स एव पूर्णो भगवानप्रवर्त्यस्तथाऽखिलैः ।
अन्यैः प्रवर्त्यते योऽसौ स प्रवर्तीति गीयते ॥

अप्रवर्त्यो हरिर्नित्यस्वतन्त्रत्वात्[1] सदैव च ।
अस्य[2] प्रवृत्तिर्नास्तीति सोऽप्रवर्तीति कीर्तितः ॥

पूर्णा स्वतन्त्रा श्रीश्चास्य वेत्तुर्भवति शाश्वती ।
साक्षाद्गायत्र्युपासायां[3] योग्य एकश्चतुर्मुखः ॥

तस्मादनन्यतन्त्राऽस्य श्रीर्भवेन्नान्यथा क्वचित् ।
विष्णुतन्त्रत्वमस्य स्यात् परेषां तस्य तन्त्रता ।
यथाक्रमेण तन्त्रत्वं योग्यताक्रमतो भवेत् ॥ इति सत्तत्त्वे ।

---

१. ''नित्यः स्वतन्त्रत्वात्'' हृपाठः । २. 'अस्मिन्' हृपाठः ।

३. ''गायत्र्युपासायाः'' हृपाठः ।

**भाष्यविवृतिः**– यद्वै तद्ब्रह्मेत्यादिना गायत्रीनाम्नो भगवतः प्रकारान्तरेण चतुष्पात्व-मुच्यते। तद्ब्रह्मणः प्रसिद्धाकाशात्मकत्वमुच्यत इत्यन्यथाप्रतीतिं निवारयन् व्याचष्टे– **परमित्यादिना** ॥ एवं चतुःषड्विधतया निरूपितस्य भगवतः स्वरूपं निरूपयति– **तदेतत्पूर्णमप्रवर्तीति** । तन्न प्रवृत्तिर्यस्येत्य-प्रवृत्तिरिति प्रवृत्तिराहित्यप्रतीतिं निवारयन् व्याचष्टे– **स एवेति** ॥[१] उक्तमेवार्थं निर्वचनेनाह– **अन्यैरिति** ॥ गीयत इत्यनन्तरमस्येति योज्यम् । प्रवर्तयतीति प्रवृत्तिः प्रवर्त्तकः । निर्वचनलब्धार्थे हेतुमाह– **अप्रवर्त्य इति** ॥ एवं निरूपितगायत्रीवेत्तुः फलमाह– **पूर्णामिति** । तद्व्याचष्टे– **पूर्णेति** ॥[२] **अस्य** गायत्रीनामकस्य । एवं सामान्यतो व्याख्याय यस्य कस्यापि गोपत्न्युपासकस्य पूर्णा स्वतन्त्रा श्रीर्भवतीति प्रतीतिं निवारयन् विशेषतो व्याख्याति– **साक्षादिति** ॥ अनन्यतन्त्रमेव स्वातन्त्र्यमित्य-न्यथाप्रतीतिं निवारयन् विशदमाह– **विष्ण्विति** ॥[३] परेषामस्वतन्त्रता नैकप्रकारेणेत्याह– **यथेति** ॥ परेषामित्यनुवर्तते ।[४]

**भा.– ब्रह्मशब्दाच्च भगवानित्यवसीयते । पूर्णाप्रवृत्तित्वं च तस्मिन्नेव मुख्यम् । तावानस्य महिमेति मन्त्राच्च । पादोऽस्य विश्वा भूतानीति जीवानां चतुष्पादान्तर्भावात् । भूतं यदिदं किञ्चेति षड्विधान्तर्भूतं भूतं मत्स्याद्यवताररूपमेव ।**

---

१. यः प्राक् षड्विधत्वादिना निरूपितः पूर्णः देशतः कालतो गुणतश्च । यद्वा स एव यो जीवस्वरूपहृदयग इत्यर्थः ।

२. योग्यतापेक्षया पूर्णा ।

३. विष्णुशब्देन रमाप्युपलक्ष्यते । तथाच विष्णुव्यतिरिक्तस्वेतरानधीनत्वमेवानन्यतन्त्रत्वं विवक्षितमिति न कोऽपि दोष इति भावः ।

४. तस्य तन्त्रता तदधीनत्वम् । तथाच रुद्रादयो नविष्णुमात्रव्यतिरिक्तस्वेतराधीनाः, ब्रह्मधीनताया अपि सत्वात् । अत उक्तं फलं तस्यैवेति भावः ।

द्वाविंशेष्ववतारेषु जीवोऽप्युक्तो यथा पृथुः ।
तथा पादेषु चतुर्षु सान्निध्याज्जीव ईरितः ॥

यथा कालः पुमान् व्यक्तं प्रकृतिश्च परस्य तु ।
विष्णो रूपाणि गण्यन्ते पररूपेण वै सह ॥

एवं भूतानि गण्यन्ते भिन्नान्यपि पदैः सह ।
मूर्तामूर्ते यथा रूपे ब्रह्मणस्तु तथैव च ॥

भिन्नान्यपि तु भूतानि पदानि स्वपदैः सह ॥ इति प्राथम्ये ।

'सुदर्शनाख्यं स्वास्त्रं तु प्रायुङ्क्त दयितं त्रिपात्' इति श्रीभागवते प्रयोगाच्च न जीवो भगवत्स्वरूपम् ।

सुवर्चला यथा सूर्यपत्न्यंशः समुदाहृता ।
एवं जीवा भगवतो वस्तुभेदेऽपि सर्वदा ॥ इति च ॥१२॥

**भाष्यविवृतिः**– गायत्रीप्रशंसैवात्र क्रियत इति किन्न स्यादित्यतस्तत्र बाधकमाह– **ब्रह्मेत्यादिना** । यद्वै तद्ब्रह्मेति ब्रह्मशब्दात् । पूर्णत्वमप्रवर्तित्वं च । उक्तार्थे भगवत्परत्वेन प्रसिद्धतावानस्य महिमेति मन्त्रोदाहरणाच्च । गायत्री भगवानित्यवसीयत इत्यर्थः । गायत्री वा इदं सर्वं भूतमित्यत्र भूतं मत्स्यादीति व्याख्यातं भूतशब्दोक्ता जीवा एवेति कस्मान्नस्यादित्यतस्तथा सति पुनरुक्तिप्रसङ्गादिति तत्समर्थयते– **पाद इति** ॥[1] भिन्नपादाः

१. अयं भावः । अत्र हि गायत्र्याः षड्विधत्वं चतुष्पात्त्वं चोच्यते- **भूतमिति** ॥ षड्विधान्तर्गतं तद् यदि प्राणिजातं विवक्षितं स्यात् तदा पुनरुक्तिप्रसङ्गः । स्थावरजङ्गमात्मकसर्वजीवानां "पादोऽस्य विश्वा भूतानि" इत्यनेन चतुष्पादान्तर्भावस्योक्तत्वात् । अतोऽत्र भूतशब्देन मत्स्याद्यावताररूपमेव ग्राह्यं न प्राणिजातमिति ।

सर्वजीवा इति जीवानां भिन्नपादत्वमुक्तं तथा सत्यभिन्नपादैः सहोक्तिः कथं घटेतेत्यतो भिन्नांशानामेवाभिन्नैः सहोक्तिदर्शनादित्याह– **द्वाविंशेष्विति** ॥[१] ननु भिन्नानामभिन्नैः सहोक्तिः केन निमित्तेनेति जिज्ञासायामुक्तम् – **सान्निध्यादिति** । भगवत इति शेषः । विप्रतिपत्तेस्तत्रैव वाक्यान्तराण्युदाहरति– **यथा काल इति** ॥ **पुमान्** ब्रह्मा । एवं जीवानां भिन्नपादत्वेऽप्यभिन्नपादैः सहोक्तिं घटयित्वा भिन्नपादत्वे बाधकमाह– **सुदर्शनेति** ॥ जीवानामपि स्वरूपपादत्वे त्रिपादिति प्रयोगानुपपत्तेर्न जीवो भगवत्स्वरूपमित्यर्थः । चशब्देन द्वाविंशेष्वित्यादिकमपि बाधकमेवेत्याह । बाधकान्तरमाह– **सुवर्चलेति** ॥[२] **इति द्वादशः खण्डः** ॥

## अथ त्रयोदशः खण्डः

## (हृदयनामकपरमात्मनो द्वारपालकाः)

## पूर्वद्वारपालकः सूर्यः

**उप.– तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः स योऽस्य प्राङ्सुषिः स प्राणस्तच्चक्षुः स आदित्यस्तदेतत् तेजोऽन्नाद्यमित्युपासीत तेजस्व्यन्नादो भवति य एवं वेद ॥ १ ॥**

## दक्षिणद्वारपालकश्चन्द्रः

**अथ योऽस्य दक्षिणः सुषिः स व्यानस्तच्छ्रोत्रं स चन्द्रमास्तदेतच्छ्रीश्च यशश्चेत्युपासीत श्रीमान् यशस्वी भवति य एवं वेद ॥ २ ॥**

---

१. जीवोऽपि पृथुः हरेः सान्निध्यात् यथाऽवतारेपूक्तो 'ऋषिभिर्याचितो भेजे नवमं पार्थिवं वपुः'' इत्यादौ तथा पादेषु चतुर्षु जीवोऽपि ईरितः ।

२. सूर्यपत्नी संज्ञा ।

## पश्चिमद्वारपालको वह्निः

अथ योऽस्य प्रत्यङ्सुषिः सोऽपानः सा वाक् सोऽग्निस्तदेतद् ब्रह्म-वर्चसमन्नाद्यमित्युपासीत ब्रह्मवर्चस्व्यन्नादो भवति य एवं वेद ॥ ३ ॥

## उत्तरद्वारपालकः इन्द्रः

अथ योऽस्योदङ् सुषिः स समानस्तन्मनः स पर्जन्यस्तदेत् कीर्तिश्च व्युष्टिश्चेत्युपासीत कीर्तिमान् व्युष्टिमान् भवति य एवं वेद ॥ ४ ॥

## ऊर्ध्वद्वारपालकः प्रधानवायुः

अथ योऽस्योर्ध्वः सुषिः स उदानः स वायुः स आकाशस्तदेतदोजश्च महश्चेत्युपासीतौजस्वी महस्वान् भवति य एवं वेद ॥ ५ ॥

## द्वारपालकोपासनायाः फलम्

ते वा एते पञ्चब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः स य एतानेवं पञ्च ब्रह्मपुरुपान् स्वर्गस्य लोकस्य द्वारपान् वेद ॥ ६ ॥

अस्य कुले वीरो जायते प्रतिपद्यते स्वर्गं लोकं य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद ।

भा.– प्राणाभिमानी चक्षुश्च सूर्य एव ह्युदाहृतः ।
तेजोऽन्नाद्यभिमानी च प्राग्द्वाराधिपतिर्हरिः ॥

दक्षिणाधिपतिस्सोमो व्यानः श्रोत्राभिमानवान् ।[१]
यशोलावण्यरूपश्च पश्चिमद्वारपस्तथा ॥

---

१. ''व्यानश्रोत्राभिमानवान्'' हृपाठः ।

वागपानात्मको वह्निर्ब्रह्मतेजोऽन्नदेवता ।
उत्तरद्वारपस्त्विन्द्रः समानो मनआत्मकः ॥

कीर्त्यैश्वर्यात्मको नित्यमूर्ध्वद्वारप एव च ।
प्रधानवायुराकाशः सर्वज्ञादुन्नतेस्तथा ॥

उदान ऊर्जितत्वात् स ओजः पूर्णत्वतो महः ।
परस्य ब्रह्मणस्त्वेते पुरुषाः पञ्च कीर्तिताः ॥

द्वारपा हृदये चैव विष्णुलोके च सर्वदा ।
[१]आन्तरद्वारपा ह्येते जयाद्या बाह्यतः स्मृताः ॥

एवमेतानुपास्यैव तद्गुणांशांशभाग् भवेत् ।
विष्णुलोकं तथा गच्छेद् भवेदपि सुसन्ततिः ॥

**भाष्यविवृतिः**– यदिदमस्मिन् पुरुषे हृदयमिति योऽयमन्तः पुरुष आकाश इति हृत्पुरगतत्वेन प्रकृतस्योपास्तिं तत्पुरद्वारपमहिम्नोपास्तिं फलोक्त्याऽऽह– **तस्य हवा इत्यादिना** ॥ **हृदयस्य** हृदयकमलस्य । **देवसुषयो** देवनिर्गमद्वाराणि । तस्य हवा इति प्रस्तावोक्ताः हृदयपुरद्वारपाः । प्राणाद्याः क इत्यप्रतीतेर्व्याचष्टे– **प्राणाभिमानीत्यादिना** ॥ **प्राणः** श्वासः ।[२] श्रीरित्यस्य प्रतिपदं– **लावण्येति** । **ब्रह्मवर्चसं** वेदलब्धं तेजः । व्युष्टिरित्यस्य प्रतिपदं– **ऐश्वर्यात्मकमिति** । आकाशोदानोजोमहःशब्दानां क्रमेणार्थानाह– **आकाश इत्यादिना** ॥ ब्रह्मपुरुषाः वेदपुरुषाः इति प्रतीतिं निवारयंस्तेवा एत इत्यादि वाक्यं व्याचष्टे– **परस्येति** ॥[३] जयाद्या ननु द्वारपा इत्यत आह–

---

१. "अन्तरद्वारपाः" हृपाठः ।

२. जडरूपवायुवृत्तिः । एवमुत्तरत्रापि व्यानादिपदेन तत्तन्नामक श्वासरूप जडवायुवृत्तिरेव ग्राह्या ।

३. ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वात् मुख्यार्थस्यैव ग्राह्यत्वादिति भावः ।

आन्तरेति ॥ तेजस्व्यन्नादो भवतीत्यादिना द्वारपोपास्तिफलमुक्तम् । तस्य तत्समत्वप्रतीतिं निवारयन्नाह– **एवमिति** ॥ य एतानेवमित्यादिना पञ्चब्रह्म-पुरुषोपासकस्य फलान्तरमाह । तच्छूरत्वस्वर्गत्वप्रतीतिं निवारयन् व्याचष्टे– **विष्णुलोकमिति** ॥[१]

**उप.– अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिस्तस्यैषा दृष्टिः ॥ ७ ॥**

**यत्रैतदस्मिंच्छरीरे संस्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोति तदेतद्दृष्टं च श्रुतं चेत्युपासीत चक्षुष्यः श्रुतो भवति य एवं वेद य एवं वेद ॥ ८ ॥ १३ ॥**

भा.– योऽसौ वैकुण्ठगो विष्णुः सप्तलोकोपरिस्थितः ।
स एव सर्वलोकेषु विश्वतो ब्रह्मणस्तथा ॥

उच्चेषूत्तमलोकेषु तथा प्रत्यवरेषु च ।
पुरुषेषु च सर्वेषु स एकः संव्यवस्थितः ॥

प्राणसंस्थस्स वै विष्णुः प्राणोऽग्नौ संव्यवस्थितः ।
स्पर्शेन दृश्यते चाग्निस्तद्दृष्टिरिव सा ततः ॥

स प्राणः स्तौति तं विष्णुं सा स्तुतिः श्रूयते सदा ।
कर्णौ पिधाय तद्विद्वान् दिव्यचक्षुः सुकीर्तिमान् ॥
मुक्तो भूत्वा भवेद्यस्मादुपासीतैव सन्ततम् ॥ इति संस्तत्त्वे ।

---

१. स्वरूपभूतरमणज्ञानात्मकत्वात् स्वर्गशब्दो विष्णुलोकपर इति भावः ।

**भाष्यविवृतिः**– त्रिपादस्यामृतं दिवीति दिविस्थितस्य योऽयमन्तर्हृदय आकाश इति हृदयगतस्य च भेदप्रतीतिनिरासायाथ यदतः परो दिवा इत्यादिना दिविस्थितमनूद्येदं वाव तदिति हृदिस्थितेनैक्यमुच्यते तत्स्पष्टं भगवत्परतयाऽप्रतीतेर्व्याचष्टे– **योऽसावित्यादिना** ॥[१] विश्वत इत्यनूद्य प्रतिपदं– **ब्रह्मण इति** । भगवतो हृद्गतत्वसद्भावे स्पर्शनश्रवणप्रमाणे आह– **तस्यैषा दृष्टिरित्यादिना** ॥ कर्णावपिगृह्य वर्तमानः । ननूष्णिमा प्राणाग्नेः घोषश्च प्राणस्य तत्कथं तद्द्वयं भगवतो हृद्गतत्वे प्रमाणमित्यत-स्तद्घटयन् तद्व्याचष्टे– **प्राणसंस्थ इत्यादिना** ॥ कर्णौ पिधाय स्थितेन श्रूयते । ''चक्षुष्यः श्रुतोभवति स य एवं वेदेति'' वाक्यमल्प-फलत्व-प्रतीतिं निवारयन् व्याचष्टे– **तद्विद्वानिति** ॥

**भा.– 'दिक्षु यानाद्यशो व्याप्तं कीर्तिः प्रत्यक्षतः स्तुतिः' इति शब्दनिर्णये । सर्वतः पृष्ठेषु सर्वत उच्चेषु वैकुण्ठक्षीरसागरानन्तासनादिषु विश्वतो ब्रह्मणोऽप्युच्चेषु । तत उत्तमोऽन्यो नास्तीत्यनुत्तमाः सर्वतः स्वयमुत्तमाः ।**

**पृथिवीस्थेषु सर्वोच्चो लोकोऽनन्तासनात्मकः ।**
**अन्तरिक्षात्मकेभ्यश्च श्वेतद्वीपे स्थितो हरेः ॥**[२]

**द्यात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यते ।**
**पृथिव्यां द्यौर्महामेरुराकाशे सूर्यमण्डलम् ॥**

---

१. यदित्यनेन प्रकृतद्युस्थितपरामर्श इति दर्शयितुं ''वैकुण्ठग'' इत्युक्तम् । वैकुण्ठस्य द्युत्वेनोक्तत्वात् । उपलक्षणं चैतत् । श्वेतद्वीपानन्तासनयोरपि द्युत्वेनोक्तत्वात् तद्गतौ नारायणवासुदेवावपि ग्राह्यौ ।

२ ''स्थितो हरिः'' प्रपाठः ।

दिवीन्द्रसदनं चैव तत्परे तु दिवः परे ।
पृथिव्यां ब्रह्मणो मेरौ जयन्तं त्वन्तरिक्षगम् ॥[१]

तृतीयं सत्यलोके च[२] सदनं त्रिविधं स्मृतम् ।
तेभ्योऽनन्तासनाद्या यत्परतो विश्वतः परः ॥ इति सत्तत्त्वे ।

'निनदः समुद्रघोषः स्यान्नदथुर्मेघसम्भवः' इति सत्तत्त्वे ।

'चक्षुष्यश्चक्षुषि ब्रह्मण्येष यातीत्युपासकः' इति च ॥ १३ ॥

**भाष्यविवृतिः**– ननु यशःकीर्तिशब्दयोरेकार्थत्वात्तदेतच्छ्रीर्यशश्चेति प्रकृतयशःपदं विहाय कीर्तिपदेन व्याख्याने किं कारणमित्यतोऽर्थभेदे कारणमाह– **दिक्ष्विति** ॥ अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः-पृष्ठेषु सर्वतःपृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमन्तःपुरुषे ज्योतिरिति वाक्यं योऽसौ वैकुण्ठगो विष्णुरित्यादिना सर्वोत्तमवैकुण्ठादि-लोकगो विष्णुरेक एवोर्ध्वेष्वधरेषु च सर्वेषु लोकेषु च जीवेषु तिष्ठतीति सामान्यतो व्याख्यातमिदानीं भाष्यत्वात् स्वपदं विवृण्वन् विश्वतःपृष्ठेषु सर्वतःपृष्ठेष्वित्यनयोरेकार्थत्वप्रतीतिं निवारयन् उत्तमेष्वनुत्तमेष्वित्यनयो-र्विरोधप्रतीतिं निवारयति– **सर्वत इत्यादिना** ॥ ब्रह्मणो लोकेभ्योऽप्युच्चेषु । ततस्तेभ्यो लोकेभ्यः अनुत्तमास्तेष्विति शेषः । सर्वतः स्वयमुत्तमास्तेष्विति च । त्रयाणामपि धाम्नां सर्वतःपृष्ठेष्वित्युक्तं सर्वलोकोच्चत्वं कथं घटते । अनन्तशयनानन्तासनयोस्तदयोगादित्यतः कयाचिद्विवक्षया तद्घटयन्नाह– **पृथिवीस्थेष्विति** ॥[३] एवं विवक्षया सर्वतःपृष्ठत्वं चेद्दिवःपरत्वं कथ-

१ ''जयन्ते त्वन्तरिक्षगम्'' हृपाठः । २. ''तृतीयं सत्यलोकं च'' पाठः ।

३. तथा च सर्वतःपृष्टत्वमनन्तासने पार्थिवसर्वलोकविवक्षया, अन्तरिक्षात्मकसर्वलोक-विवक्षया श्वेतद्वीपे, द्व्यात्मकसर्वलोकविवक्षया च वैकुण्ठे उक्तमिति नानुपपत्तिरिति भावः ।

मेतेषामित्यतस्तद्घटयन्नाह– **पृथिव्यामिति ॥** तत्परे मेर्वादिभ्यः परे ।[१] एवंभूतं चेद्दिवःपरत्वं तर्हि कथमेतेषां विश्वतःपृष्ठेष्वित्युक्तं ब्रह्मलोकोच्चत्वमित्यतस्तद्घटयन्नाह– **पृथिव्यामिति ॥**[२] ध्वनिमात्रप्रतीतेरप्रतीतेश्च निनदनद्थुशब्दयोरर्थावाह **निनद इति ॥** चक्षुष्य इत्येतद्दिव्यचक्षुरिति व्याख्यातं तद्व्यवहितादिद्रष्टृत्वमिव भात्यतो विशदयति– **चक्षुष्य इति ॥**[३]
**इति त्रयोदशः खण्डः ।**

## अथ चतुर्दशः खण्डः

## हर्युपासना

**उप.– सर्वं खल्विदं ब्रह्म । तज्जलानिति शान्त उपासीत अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत ॥ १ ॥**

**मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्पः आकाश आत्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः ॥ २ ॥**

**भा.– इदं ब्रह्मातिसामीप्यात् सर्वं पूर्णगुणत्वतः ।**
**तच्च ब्रह्मजलान् साक्षाद्योऽसौ विष्णुर्जलेऽनिति[४] ॥**

---

१. तथा च पृथिव्यां महामेरोर्द्युत्वात् तत्परानन्तासनस्य दिवःपरत्वम्, आकाशे सूर्यमण्डलस्य द्युत्वात् तत्परश्वेतद्वीपस्य दिवःपरत्वम्, दिवीन्द्रसदनस्य द्युत्वात् तत्परवैकुण्ठस्य दिवःपरत्वमुपपन्नमिति ज्ञातव्यम् ।

२. तथा च विश्वतःपृष्ठत्वं मेरुस्थब्रह्मसदनापेक्षयाऽनन्तासनस्य, अन्तरिक्षगवैजयन्तापेक्षया श्वेतद्वीपस्य, सत्यलोकगसदनापेक्षया वैकुण्ठस्य विवक्षितमित्यत्रापि नानुपपत्तिरिति भावः ॥

३. ब्रह्मदष्टृत्वाभिप्रायेणैव दिव्यचक्षुरिति तात्पर्यमुक्तम् भावः ।

४. ''अनति'' हृपाठः ।

**आनीदवातमिति यं वेदवागवदत् स्फुटम् ।**
**अप्रकेते तु सलिले ब्रह्म नारायणोऽपि सः[१] ॥**

**इति शान्त उपासीत यस्माज्ज्ञानमयः पुमान् ।**
**क्रतुस्तु निश्चितं ज्ञानं[२] तद्वशः पुरुषो मृतौ ॥**

**तस्माद्विनिश्चितं ज्ञानं कुर्याद्विष्णौ महद्गुणे[३] ।**
**महाज्ञानात्मकत्वात् तु प्रोक्तो विष्णुर्मनोमयः ॥**

**यस्माद्बलशरीरोऽसावतः प्राणशरीरकः ।**
**आसमन्तात् प्रकाशात् स आकाशात्मा प्रकीर्तितः ॥**

**सर्वगन्धादिरूपश्च ........ .........**

**भाष्यविवृतिः–** हृद्गतोपास्तिप्रकारदर्शनपूर्वमिदं वावेति तद्यदिदमस्मिन्नंतःपुरुषे ज्योतिरिति हृद्गतेन बहिष्ठस्यैक्यमुक्तम् । तद्युक्तम् । हृद्गतस्याणुत्वाद्बहिष्ठस्य महत्वादणुमहतोरै[४]क्यायोगादित्यतो हृद्गतस्यापि महत्वादैक्यं युक्तमित्याह– **सर्वं खल्विदं ब्रह्मेत्यादिना** ॥ इदं सर्वं जगत् ब्रह्म खलु, कथं तस्माज्जायते तस्मिंल्लीयते तेनानितीति तज्जलान् कार्यकारणयोरैक्यादिति परव्याख्यानं तदसाधु । अप्रामाणिकत्वात् । प्रमाणविरुद्धत्वादित्याशयवान् पर्व प्रमाणेन व्याचष्टे– **इदं ब्रह्मेत्यादिना** ॥ सर्वान्तस्थत्वेनातिसामीप्यात् । तद्ब्रह्म जलान् च । यतो जलेऽनिति प्रवर्तते ब्रह्मनामकम् । योऽसौ विष्णुः साक्षाद्ब्रह्मेति योजना । विष्णुर्जले तिष्ठतीति कुत इत्यतः श्रुतिं प्रमाणयन्नाह– **आनीदिति** ॥ आनीदवातं स्वधया तदेकं इति वेदवाक् । नासदासीन्नो सदासीदित्यादिना कार्यं सर्वात्मना

१. ''नारायणो हि सः'' पाठान्तरम् । २. ''निश्चितज्ञानं'' हपाठः ।
३. ''महागुणे'' प्रपाठः । ४. अणुमहतामैक्येति खपाठः ।

नासीत् । कारणं चष्टमानं नासीत् इति प्रलये कार्यकारणाभावं निरूप्य तम आसीत्तमसा गूढमग्रे प्रकृतं सलिलं सर्वमा इदमिति जडचेतनप्रकृतिभाव-मभिधायागाधत्वेनाप्रकेते अविज्ञाते सलिले तदेकमवातं वातप्रेरणया विना स्वधया स्वेच्छयै[२]वानीदचेष्टतेति यमवदत् स ब्रह्म नारायण इति योजना ।

ब्रह्म सर्वं जलानित्युपासीत जानीयादित्युक्तम् । तथा ज्ञानं कुतः आपादनीयमित्यतो ज्ञानाधीनशुभोदयत्वात् पुरुषस्येत्याह– **अथ खलु क्रतुमयः पुरुष इति** ॥ क्रतुमयत्वमेव विशदमाह– **यथाक्रतुरिति** ॥ अप्रतीतेस्तद्व्याचष्टे– **यस्मादिति** ॥ ज्ञानसम्पादनप्रकारं प्रकारान्तरेणाह– **मनोमय इत्यादिना** ॥ तदप्रतीतेर्व्याचष्टे– **महेति** ॥ भारूप इत्यादि स्पष्टत्वान्न व्याख्यातम् । **सर्वकर्मा** सर्वकर्मकरणशक्तिरूपः । सर्वो गन्धो यस्येति प्रतीतिं निवारयन् सर्वगन्धः सर्वरस इत्येतद्व्याचष्टे **सर्वेति** ॥ सर्वमिदम् **अभ्यात्तः** प्राप्तः । लौकिक इव निरर्थकवाक्यरहितः । **नादरः** आत्मसम्भवनारहितः ।

## भगवान् अणोरणीयान् महतो महीयांश्च

**उप.– एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामकतण्डुलाद्वा एष मे आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः ॥ ३ ॥**

## भगवत्तत्त्वज्ञानिनो लभ्यफलम्

**सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः एष म आत्मान्तर्हृदय एतद्ब्रह्मैतमितः प्रेत्याभिसम्भविताऽस्मीति यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माह शाण्डिल्यः शाण्डिल्यः**

॥ ४ ॥ १४ ॥

---

२. सुखेनैववा ।

भा.– .............. ...... भोक्ता चैषां सदैव हि ।
इति निश्चयकृद्याति तमेव पुरुषोत्तमम् ॥ इति सद्गुणे ।

एकत्र सर्वगन्धादिना चिदानन्दात्मकसर्वगन्धादिरूपत्वमुच्यते । अन्यत्र तद्भोक्तृत्वम् ॥ १४ ॥

**भाष्यविवृतिः**– महता बाह्येनैकत्वघटनार्थमणुत्वमनुवदन् महत्वमाह– **एष म इत्यादिना** ॥ तत्राभ्यात्त इत्याद्यभ्यास आदरार्थः । तत्र सर्वगन्धः सर्वरस इत्येतद्व्याचष्टे– **भोक्तेति** ॥ उक्तप्रकारेण भगवज्ज्ञानमापादितवते भगवत्प्राप्तिरूपं फलमाह– **एतमितः प्रेत्येत्यादिना** ॥ इतः प्रेत्यैतमभिसम्भविता याताऽस्मीति यस्याद्धा निश्चयः स्यात् । स तं प्राप्नोत्येव तत्र विचिकित्सा संशयो नास्तीति योजना । तद्वाक्यं व्याचष्टे– **इतीति** ॥ सर्वगन्धादिरूपश्च भोक्ताचैषामिति व्याख्यातत्वेऽपि वाक्यद्वयस्य किं कस्य व्याख्यानमिति स्फुटमप्रतीतेर्विवेकार्थमाह– **एकत्रेति** ॥ सर्वगन्धादिना वाक्येनेति ग्राह्यम् । रूपित्वे अनित्यत्वप्रसङ्गं परिहर्तुमुक्तं–**चिदानन्दात्मकेति** ॥ इति चतुर्दशः खण्डः ॥

## अथ पञ्चदशः खण्डः

## विश्वाश्रयस्य हरेः शरीरम्

उप.– अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति दिशो ह्यस्य स्रक्तयो द्यौरस्योत्तरं बिलं स एष कोशो वसुधानस्तस्मिन् विश्वमिदꣳ श्रितम् ॥ १ ॥

भा.– क इत्यानन्द उद्दिष्ट उश इच्छा प्रकीर्तिता ।
आनन्देच्छास्वरूपोऽसौ कोशो विष्णुः प्रकीर्तितः ॥

तस्योदरेऽन्तरिक्षं च पृथिवी पादवुध्नयोः[१] ।
शिरोविवरगा द्यौश्च दिशो वाहुषु संस्थिताः ॥

अजरोऽयं महाविष्णुर्वसवो देवतागणाः ।
तेषां निधानं भगवांस्तस्मिन् सर्वमिदं श्रितम् ॥

**भाष्यविवृतिः–** एभ्यो लोकेभ्यो ज्यायानिति भगवान्महानित्युक्तं तत्राकाशवदशरीरो महानिति प्रतीतिनिरासाय विग्रहेण महानित्याह । **अन्तरिक्षोदर इति** ॥ अविद्यमानमेव भावनार्थमाकारवत्तयोच्यत इति प्रतीतिं निवारयन्नन्त रिक्षादेरुदरादित्वप्रतीतिनिरासाय प्रमाणेन पर्व व्याचष्टे **क इत्यादिना** ॥ स्रक्तयः शाखास्कन्धाः भुजा इति यावत् । तद्व्याचष्टे **दिश इति** ॥ विग्रहवतोऽपि नाशो नाशङ्क्य इत्युक्तम् **न जीर्यतीति** ॥ तद्व्याचष्टे **अजर इति** ॥

## दिशामाश्रयस्य भगवतो बाहवः

**उप.– तस्य प्राची दिक् जुहूर्नाम सहमाना नाम दक्षिणा राज्ञी नाम प्रतीची सुभूता नामोदीची तासां वायुर्वत्सः स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदꣳ रोदिति सोऽहमेतमेवं वायुं दिशां वत्सं वेद मा पुत्ररोदꣳ रुदम् ॥ २ ॥**

भा.– प्राचीदिक्संस्थितस्तस्य वाहुर्दक्षिण ऊर्ध्वगः ।
जुहूः स होमकर्तृत्वाद् भुङ्क्ते ह्येतेन[२] केशवः ॥

दक्षिणस्त्वधरो वाहुर्दक्षिणादिक् स्थितो विभोः ।
सहमानेति स प्रोक्तो मानं वेदात्मकं यतः ॥

१. "पादमूर्धयोः" इ.पाठः । २. "ह्येनेन" इ.पाठः ।

शङ्खो वेदात्मकः शङ्खसहितो दक्षिणाधरः ।
वाहुर्जुहोति चक्रेण शत्रूनित्यथवा जुहूः ॥

प्रतीचीदिक्स्थितस्तस्य वामवाहुस्तथोत्तरः ।
राजीयुक्तगदायुक्तो राज्ञीनामा[1] प्रकीर्तितः ॥

अधरो वामबाहुर्य उत्तरादिक्स्थितो विभोः ।
श्रिय आधारपद्मित्वात् सुभूतानामकः स्मृतः ॥

दिङ्नामानश्च ते प्रोक्ता धर्मज्ञानादिदेशनात्[2] ।
तेभ्यो जातो महावायुर्दिशां वत्सस्ततः स्मृतः ॥

धर्मज्ञानादिरूपेण विष्णोर्बाहुचतुष्टयात् ।
जातं वायुं विदित्वैव पुत्रो भूत्वा न रोदिति ॥

न जायते न म्रियते मुक्तो भूत्वा सुखी भवेत् ।
वायुं हरेः सुतं ज्ञात्वा नाहं पुत्रतयाऽरुदम् ॥

हरेः प्रसादसामर्थ्यादजरा चामरा ह्यहम् ।
अनादिकालसम्वन्धादित्युवाच परा[3] रमा ॥

भाष्यविवृतिः– दिगाश्रया भुजा इत्युक्तं कः? किं नामा? किं दिक् प्रवर्तकः? इति विवेकजिज्ञासायां विवेकमाह– **तस्येत्यादिना** ॥ तद्व्याचष्टे– **प्राचीत्यादिना** ॥[4] भगवद्बाहूनां दिगाश्रयत्वे दिशो ह्यस्य

---

१. ''राज्ञीनाम'' हृपाठः । २. ''धर्मज्ञानातिदेशनात्'' हृपाठः ।

३. ''पुरा'' हृपाठः ।

४. प्राची दिक् संस्थिता अस्मिन्निति प्राचीदिक् संस्थितः । प्राच्याश्रय इत्यर्थः ।

स्रक्तयः तस्य प्राची दिग्जुहूर्नामेत्यादि सामानाधिकरण्यप्रयोगः कथं घटतामित्यतो धर्मज्ञानादिदेशेन दिक्शब्दवाच्यत्वभावादित्याह– दिगिति ॥ दिग्वत्सवायुवेत्ता न पुत्ररोदं रोदितीति फलाभिधायकं वाक्यं पुत्रो भूत्वा न रोदितीति व्याख्यातम् । तस्य पुत्रो भवति न रोदितीत्यल्पार्थत्वप्रतीतिं निवारयन् स्ववाक्यार्थं विशदमाह– **न जायत इति** ॥ अस्ति किं? वायुं दिशां वत्सं विदित्वैतत्फलमाप्तवानित्यत आह– **सोऽहमिति** ॥ तद्व्याचष्टे- **वायुमिति** ॥ **अनादिकालसम्बन्धात्** अनादिकालत इत्यर्थः । इति ब्रुवाणा केति जिज्ञासायामाह– **इतीति** ॥

## हरेर्वाहूपासनया रमया लब्धफलनिरूपणम्

**उप.– अरिष्टं कोशं प्रपद्येऽमुनाऽमुनाऽमुना प्राणं प्रपद्येऽमुनाऽमुनाऽमुना भूः प्रपद्येऽमुनाऽमुनाऽमुना भुवः प्रपद्येऽमुनाऽमुनाऽमुना स्वः प्रपद्येऽमुनाऽमुनाऽमुना ॥ ३ ॥**

**स यदवोचं प्राणं प्रपद्य इति प्राणो वा इदꣳ सर्वं भूतं यदिदं किञ्च तमेव तत्प्रापत्सि ॥ ४ ॥**

**अथ यदवोचं भूः प्रपद्य इति पृथिवीं प्रपद्येऽन्तरिक्षं प्रपद्ये दिवं प्रपद्य इत्येव तदवोचम् ॥ ५ ॥**

**अथ यदवोचं भुवः प्रपद्य इत्यग्निं प्रपद्ये वायुं प्रपद्य आदित्यं प्रपद्य इत्येव तदवोचम् ॥ ६ ॥**

**अथ यदवोचं स्वः प्रपद्य इत्यृग्वेदं प्रपद्ये यजुर्वेदं प्रपद्ये सामवेदं प्रपद्य इत्येतदवोचं तदवोचम् ॥ ७ ॥ १५ ॥**

भा.– अविनष्टं परानन्दकामं[१] विष्णुं सदा ह्यहम् ।
प्रपद्ये तत्प्रसादेन केवलं नात्मशक्तितः ॥

१. ''अविनष्टपरानन्दं'' हृपाठः ।

प्राणं सर्वप्रणेतारं प्रपद्ये केशवं सदा ।
प्रभूतं यदिदं किञ्चित्[१] प्रादुर्भावात्मकं हरेः ॥

मत्स्याद्यं तत्प्राण एव विष्णुर्नास्त्यत्र संशयः ।
तस्मान्मत्स्यादिरूपं तं विष्णुमेव प्रपद्यथ ॥

हे जना इत्यवोचत् सा लक्ष्मीः सर्वाः प्रजाः प्रति ।
प्राणनामा वासुदेवो मोक्षं स्वान् प्रणयेद्यतः ॥

सङ्कर्षणस्तु भूर्नामा भूपयेज्ज्ञानतो यतः ।
स पृथ्व्यां पृथिवीनामा स्वात्मानं प्रथयेद्यतः ॥

अन्तरिक्षेऽन्तरिक्षाख्यो यतः साध्वन्तरीक्षते ।
दिवि द्युनामा स विभुः सर्वक्रीडाकरत्वतः ॥

प्रद्युम्नश्च भुवोनामा सृष्ट्या यद्भावयेज्जगत् ।
सोऽग्निनामा परो वह्नावत्ति सर्वं यतो हुतम् ॥

वायुनामा स वायुस्थो वात्यायुश्च यतोऽस्य तत् ।
आदित्याख्यः स आदित्ये आददात्यायुरस्य यत् ॥

स्वर्नामा त्वनिरुद्धोऽसौ परानन्दप्रदत्वतः ।
ऋग्वेदाख्यः स ऋग्वेदे ज्ञानं वेदयते यतः ॥

यजुर्वेदो यजुर्वेदे यज्ञं वेदयते यतः ।
सामवेदः सामवेदे साम्यं वेदयते ह्ययम् ॥

---

१. ''किञ्च'' पाठान्तरम् ।

एवं चतुर्विधं तत्त्वं तदवोचमहं हरेः ।
इत्युवाचेन्दिरा देवी स्तुवन्ती परमं हरिम् ।। इति च ।

'पुल्लिङ्गेनोच्यते स्त्री च पुंवच्छक्तिमती यदि' इति च ।। १५ ।।

**भाष्यविवृतिः**– किमुपास्तिबलात्तन्निरुध्यैतत्फलमाप्तवतीति शङ्कां परिहरन् भगवत्प्राप्ति लक्षणं फलान्तरमाह– **अरिष्टं कोशमित्यादिना** ।। तत्र शङ्कापरिहाराय प्राप्तममुनेति पदम्, तद्धरेः प्रसादसामर्थ्यादिति व्याख्यातमपि अप्रतीतेस्तद्वाक्यं व्याकुर्वंस्तद्विशदमाह– **अविनष्टमित्यादिना** ।। पुनरमुनेत्यादरार्थः ।[१] इत्युक्तं– **केवलमिति** ।। कश्चोशश्चेति कोशं परानन्दकाममित्यर्थः ।[२] प्राणं प्रपद्य इति वाक्यं व्याकुर्वन् प्रणयतीति प्राण इति निर्वचनमपेक्षितपूर्वं दर्शयति– **प्राणमिति** ।।[३]

प्राणं प्रपद्य इत्यादिनोक्तं स्वाभिप्रायं विवृणोति– **अथ यदवोचमित्यादिना** । तत्सर्वस्य जगतः प्राणात्मकत्वमुच्यत इत्यन्यथाप्रतीतिं निवारयन् व्याचष्टे– **प्रभूतमिति** ।। प्राणो नाम कः ? विष्णुरिति योज्यम् । तमेव तत्प्राप्स्यथेति ब्रुवन्ती केति न ज्ञायतेऽतस्तद्व्याचष्टे– **तस्मादिति** ।। प्राणभूर्भुवस्वः इतिशब्दवाच्यानि रूपाणि निर्वचनपूर्वं दर्शयन्नथ यदवोचं भूः प्रपद्य इत्यादि च व्याचष्टे– **प्राणनामेत्यादिना** ।। पृथिव्यां स्थित इति योज्यम् । एवमन्तरिक्षेऽपीत्यादावपि । वाति अस्य जगतः आयुश्च तत्तस्माद्वायुः । मा पुत्ररोदं रुदमित्यस्य (र)मावाक्यत्वे सोऽहमिति पुल्लिङ्गप्रयोगः कथमित्यतः पुंशक्तिभावादित्याह– **पुल्लिङ्गेनेति** ।। **इति पञ्चदशः खण्डः ।**

---

१. त्यादिरादरार्थः खपाठः ।

२. कशब्दः परानन्दवाची उशब्दश्चेच्छापरपर्यायकामवाचीत्यर्थः ।

३. सर्वप्रणेतृत्वोपपादनाय केशवम् इत्युक्तम् ।

## अथ षोडशः खण्डः

## जीवनं यज्ञात्मकम् – तत्र प्रातःसवनम्

उप.– पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातःसवनं चतुर्विंशत्यक्षरा गायत्री गायत्रं प्रातःसवनं तदस्य वसवोऽन्वायत्ताः प्राणा वाव वसव एते हीद॰ सर्वं वासयन्ति ॥ १ ॥

तं चेदेतस्मिन्वयसि किञ्चिदुपतपेत् स ब्रूयात् प्राणा वसव इदं मे प्रातःसवनं माध्यन्दिन॰ सवनमनुसन्तनुतेति माहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥ २ ॥

## माध्यन्दिनसवनम्

अथ यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिन॰सवनं चतुश्चत्वारिंशदक्षरा त्रिष्टुप् त्रैष्टुभं मान्ध्यन्दिन॰ सवनं तदस्य रुद्रा अन्वायत्ताः प्राणा वाव रुद्रा एते हीद॰ सर्वं रोदयन्ति ॥ ३ ॥

तं चेदेतस्मिन् वयसि किञ्चिदुपतपेत् स ब्रूयात् प्राणा रुद्रा इदं मे माध्यन्दिन॰ सवनं तृतीयं सवनमनुसन्तनुतेति माहं प्राणानां रुद्राणां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥ ४ ॥

## सायंसवनम्

अथ यान्यष्टाचत्वारि॰शद्वर्षाणि तत् तृतीयसवनमष्टाचत्वारिंशदक्षरा जगती जागतं तृतीय सवनं तदस्यादित्या अन्वायत्ताः प्राणा वाव आदित्या एते हीद॰ सर्वमाददते ॥ ५ ॥

तं चेदेतस्मिन् वयसि किञ्चिदुपतपेत् स ब्रूयात् प्राणा आदित्या इदं मे

तृतीयसवनमायुरनुसन्तनुतेति माहं प्राणानां आदित्यानां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥ ६ ॥

भा.– विष्णुपूजार्थयज्ञोऽहमित्युपासनमादरात् ।
कुर्वीत पुरुषो नित्यं तस्य यत्षोडशोत्तरम् ॥

[१]शतमायुस्तत्सवनत्रयमीरितमुत्तमम् ।
चतुर्विंशत्तु यत्पूर्वं प्रातःसवनमेव तत् ॥

प्रार्थयित्वा वसूंस्तद्वं पुमान् मृत्युमपानुदेत् ।
मध्ये चतुश्चत्वारिंशन्मध्यमं सवनं स्मृतम् ॥

रुद्राणां प्रार्थनेनात्र पुमान् मृत्युमपानुदेत् ।
ततोऽष्टचत्वारिंशत्[२] तु तृतीयं सवनं स्मृतम्[३] ॥
आदित्यानां प्रार्थनेन तद्वं मृत्युमपानुदेत् ॥ इति सर्वयज्ञे ।

**भाष्यविवृतिः**– अनेकभगवदुपास्तयः उक्ताः वक्ष्यन्तेच । तासामनुष्टानमायुषः क्षणिकत्वाद्यदिच स्थापितस्य रोगोपद्रुतत्वादशक्यमित्यत आयुर्वृध्यर्थं रोगपरिहारार्थं च पुरुषयज्ञरूपामुपास्तिमाह– **पुरुषो वाव यज्ञ इत्यादिना** ॥ तत्र सिद्धान्वाख्यानत्वप्रतीतिं[४] निवारयन् ब्रह्मसम्बन्धित्वं च दर्शयन् प्रथमवाक्यं व्याचष्टे– **विष्ण्विति** ॥ पुरुषस्य यज्ञरूपत्वे सवनैर्भाव्यं तानि कानीति जिज्ञासायां तान्याह– **तस्य यानीत्यादिना** ॥ चतुर्विंशतिवर्षादीनां प्रातःसवनत्वादिकं कथमित्यतः प्रातःसवनादि जाप्य-

---

१. ''शतमायुस्तत्तु'' हृपाठः । २. ''तत्'' हृपाठः ।

३. 'मतम्' हृपाठः ।

४. प्रसिद्धसवनत्वप्रतीतिमिति पाठः स्यादिति भाति ।

साम्यादित्याह– **चतुर्विंशाक्षरेत्यादिना** ॥ तद्देवता आह– **तदस्येत्यादिना** ॥ इदं जगदस्मिन् सवने एते वासयन्ति हि । **किञ्चित्** ज्वरादि । माध्यन्दिन-सवनं तत्पर्यंतमित्यर्थः । ततो ज्वरादेरुदेत्येव[1]ह । तदेव विवृणोति– **अगदो भवतीति** ॥ तद्वाक्यजातमपेक्षितपूर्वं व्याचष्टे– **तस्येत्यादिना** ॥ तद्रं सवनगतम् ।

## पुरुषयज्ञोपासनायाः फलम्

**उप.– एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः स किं म एतदुप-तपसि योऽहमनेन न प्रेष्यामीति स ह षोडशं वर्षशतमजीवत् प्राह षोडशं वर्षशतं जीवति य एवं वेद ॥ ७ ॥ १६ ॥**

## महिदासकृष्णकपिलाख्यजीवानां चरितम्

भा.– महिदासोऽन्यः । कृष्णश्चान्यः एव ।

**महिदासस्त्वैतरेयः कृष्णोऽन्यो देवकीसुतः ।**
**कपिलश्च द्वितीयोऽन्यस्त्रय एते पुरा नराः[2] ॥**

**सङ्गत्योच्चैस्तपस्तेपुर्ब्रह्मणे परमेष्ठिने ।**
**मातुः स्वस्य च नामैक्यं विष्णुना स्यादिति ह्युभौ ॥**

**स्वात्मशिष्यप्रशिष्याणां नामैक्यं कपिलस्तथा ।**
**एवमेव च वेदोक्ता भवेमेति त्वतन्द्रिताः ॥**

**तान् वरान् प्रददौ तेषां ब्रह्मा लोकपितामहः ।**
**तस्मात्[3] तन्नामिनश्चासंस्त्रयस्ते मुनयोऽपि हि ॥**

१. उद्गच्छत्येव हीत्यर्थः । २. ''पुरातनाः'' इ.पाठः ।

३. ''तन्नामिनस्त्वासन्'' इ.पाठः ।

महिदासस्त्वैतरेयो बह्वृचोपनिषद्गतः ।
साक्षात् स भगवान् विष्णुस्तन्नामैको मुनिर्ह्यभूत् ॥

कृष्णस्तु वासुदेवाख्यः परमात्मैव केवलम्[१] ।
तन्नामा देवकीपुत्रस्त्वन्योऽप्यभवदञ्जसा ॥

कपिलो वासुदेवाख्यः साक्षान्नारायणः प्रभुः ।
तन्नामा कपिलोऽन्यस्तु शिष्यनाम्ना सहाभवत् ॥

स षोडशशतञ्जीवी महिदासोऽपरस्त्वृषिः ।
घोरशिष्यस्तथा कृष्णः कपिलश्च कुशास्त्रकृत् ॥

त्रय एते वरं प्राप्य ब्रह्मणः परमेष्ठिनः ।
कृतकृत्याः प्रमुमुदुस्तन्नामानश्च तेऽभवन् ॥ इति कालकीये
॥ १६ ॥

**भाष्यविवृतिः**– यज्ञत्वेन पुरुषोपास्त्या निर्विघ्नमायुः प्राप्तवानस्ति किम् ? इति जिज्ञासायामस्तीत्याह– **एतद्धस्मेत्यादिना** । हे गद स त्वं मे एतच्छरीरं किं किमर्थमुपतपसि ? योऽहं वेदानेन तापेन न प्रेष्यामीति योजना । अत्रोक्तमहिदासस्य, प्रसङ्गात् द्वितीयखण्डोक्तकृष्णस्य च भगवदवतारमहिदासकृष्णत्त्वप्रतीतिं निवारयितुमाह– **महिदास** इति । अत्रोक्तमहिदासो भगवदवतारान्महिदासादन्य एव । निरन्तरोत्तरखण्डोक्तः कृष्णश्च भगवदवतारकृष्णादन्य एवेति योजना । कुत एतत् । भगवदवतारमहिदासस्यायुर्वृध्यर्थं यज्ञकरणायोगात् । भगवदवतारकृष्णस्य च निरीश्वरत्वेन कुत्सितकापिल कृत्वाभावात् । भवेदेतत् । भगव-

१. 'केवलः' इ्पाठः ।

दवतारातिरिक्तमहिदासकृष्णसद्भावे । तदेव कुत इत्यतस्तत्सद्भावे प्रमाणमाह– **महिदास इति** ॥ अन्यश्च महिदासोऽस्तीत्यादि योज्यम् । तर्हि कथं भगवन्मात्रातन्मात्रोस्तयोश्च भगवता नामैक्यमित्यतस्तपक्ष्सेत्याह– **त्रय एत इति** । तस्माद्धीति हिशब्दसम्बन्धः । मुनयोऽप्यासन् भगवदवतारातिरिक्तैतरेयादेर्वेदाद्युक्तत्वे तत्र त एव ग्राह्याः किमित्यतो विवेकमाह– **महिदास इति** । **शिष्यनाम्ना** कपिलाख्यभगवच्छिष्यनामवच्छिष्यैः । बह्वृचोपनिषद्गतत्ववासुदेवादिविशेषणत्वेन ते ग्राह्या इति भावः । **इति षोडशः खण्डः** ॥

## अथ सप्तदशः खण्डः

## पुरुषयज्ञस्य दीक्षोपसदादीनां विचारः

**उप.– स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षाः ॥**

**अथ यदश्नाति यत्पिवति यद्रमते तदुपसदैरेति ॥ २ ॥**

**अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेति ॥ ३ ॥**

**अथ यत्तपो दानमार्जवमहिंसा सत्यवचनमिति ता अस्य दक्षिणाः ॥ ४ ॥**

**तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य तन्मरणमेवास्यावभृथः ॥ ५ ॥**

**तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाचापिपास एव स बभूव सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राणशꣳसितमसीति ।**

भा.– स्वरूपभूतयज्ञस्य क्षुत्पिपासाऽरतिस्तथा ।
दीक्षा भोजनपाने च रतिश्चोपसदः स्मृताः ॥

व्यवायहासभक्षास्तु स्तुतशस्त्रात्मकाः[१] स्मृताः ।
तपो दानार्जवाहिंसाः सत्यमप्यस्य दक्षिणाः[२] ॥

सोष्यत्यसोष्टेति ततो यज्ञवत्पुत्रजन्मनि ।
आहुर्हि पुनरुत्पत्तिं प्रसवः प्रथमा पितुः ॥

यज्ञस्नानं तु मरणं तदा ध्यायेत् त्रयं पुमान् ।
भगवन्नक्षयोऽसि त्वमच्युतोऽसि गुणैः सदा ॥
प्राणाच्च सुखितो नित्यमाधिक्येनेति[३] चिन्तयेत् ॥

इति सत्तत्त्वे ।

**भाष्यविवृतिः–** ननु प्रसिद्धयज्ञे दीक्षा उपसदस्तुतशस्त्राणि दक्षिणात्वेन च सन्ति । आयुर्यज्ञे तानि कानीति जिज्ञासायां तान्याह– **स यदि-त्यादिना ॥ अशिशिशिषति** भोक्तुमिच्छति । **पिपासति** पातुमिच्छति । **उपसदैः** यजमानव्यापारविशेषैः । **जक्षति** भक्षयति । **स्तुतशस्त्रैः** सामगानैर्मन्त्रैश्च । **तस्मात्** आयुषो यज्ञसादृश्यात् । तन्मातुः सकाशाज्जन्म यजमानस्य पुनरुत्पादनस्थानीयम् । तदेतत् । आयुर्यज्ञे प्रकारमुक्त्वा वक्ष्यमाणं भगवदुपासनाप्रकारं चोवाच । सोऽपि पिपासादिदीक्षादिमांश्च बभूवैव । **प्रतिपद्येत** प्रतिपद्यते । तद्वाक्यजातमप्रतीतेर्व्याचष्टे– **स्वरूपभूत-यज्ञस्येत्यादिना ॥** जीवस्यायुः स्वरूपभूतयज्ञस्य । प्रसवो मातुरिति शेषः ।[४] तर्हि प्रथमोत्पत्तिः केति जिज्ञासायामाह– **प्रथमेति ॥** उत्पत्तिरित्यनुवर्तते । आयुर्यज्ञप्रकारं निरूप्य तत्र भगवदुपास्तिप्रकारमाह– **सोऽन्तेत्यादिना** । तदप्रतीतेरेकार्थत्वप्रतीतेश्च व्याचष्टे– **तदेत्यादिना ॥**

---

१. ''स्तुति शस्त्रात्मकाः'' हृपाठः । २. 'दक्षिणा' पाठान्तरम् ।

३. ''सुखतो नित्यमधिकश्चेति'' हृपाठः ।

४. प्रसवो मातुरिति शेषः । इति वेदीशाये अन्वेत्वित्यनेन अस्यैव ग्रहणं कृतम् ।

## भगवदुपासनया अपरोक्षज्ञानम्, भगवत्प्राप्तिश्च

उप.– तत्रैते द्वे ऋचौ भवतः ॥ ६ ॥

आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् ।
परो यदिध्यते दिवा ॥

उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । स्वः पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ इत्यगन्म ज्योतिरुत्तममिति
॥ ७ ॥ १७ ॥

भा.– आदित् तस्मादेव तत्प्रसादादेव । प्रत्नस्य पुरातनस्यानादेर्भगवतो रेतसः रतिरूपस्य ज्योतिः पश्यन्ति[१] । वासेन रमयतीति वासरम् । दिवःपरतो वैकुण्ठे यदिध्यते । ऋद्धतममेव सर्वदा । 'अथ यदत परः' इत्युक्तत्वाच्च । न चादित्यमण्डलं दिवः परतः । उत्तरं ज्योतिः पश्यन्तः स्वरानन्दरूपं परिपश्यन्तो वयं तमस उदगन्म । उत्तरं ज्योतिः पश्यन्तस्तदेवोत्तरं स्वश्च पश्यन्तः । द्विरुक्तिस्तात्पर्यार्था[२] । उदाख्यं ज्योतिरुत्तमं तमसः सकाशादगन्म प्राप्ताः स्मेत्यर्थः । 'तस्योदितिनाम' इति श्रुतेः । देवत्रादेवं देवविषयेऽपि देवं देवानां देवमित्यर्थः । सूरिभिः प्राप्यत्वात् सूर्यम् ।

रतिरूपं परं ज्योतिरनादेः केशवस्य यत् ।
तत्प्रसादेन पश्यन्ति हृदि वासाद्रतिप्रदम् ॥

यत्पूर्णं सर्वदा भाति वैकुण्ठे परतो दिवः ।
तदुदाख्यं प्रपश्यन्तो निर्गत्य तमसो वयम् ॥

---

१. ''प्रपश्यन्ति'' हृपाठः ।

२. ''तात्पर्यार्थे'' हृपाठः ।

**ज्योतिरानन्दसद्रूपमुत्तमोत्तमसूत्तमम् ।**
**देवानां दैवतं साक्षात्सूरिप्राप्यं परं पदम् ॥**
**प्राप्ताः स्म वासुदेवाख्यमिति मन्त्रदृगब्रवीत् ॥**
**इति नारायणीये ॥ १७ ॥**

**भाष्यविवृतिः–** उक्तप्रकारेण भगवदुपास्त्या चोपासकस्य किं भवतीत्यपेक्षायां तदपरोक्षज्ञानं तेन च तत्प्राप्तिर्भवति इत्यभिप्रयन्नभिप्रेतार्थद्वये ऋचौ प्रमाणत्वेन प्रस्ताव्य इमे एवोदाहरति– **तत्रैते** इत्यादिना ॥ अप्रतीतेः सूर्यपरत्वप्रतीतेश्च ऋगृद्वयं क्रमेणानूद्य व्याकुर्वन् ज्ञानार्थां प्रथमां व्याचष्टे– **आदिदित्यादिना ॥ दिवा परः** दिवः[1] परतः ऊर्ध्वं वैकुण्ठं वैकुण्ठ इति योज्यम् । इध्यत इति वर्तमानधर्मुक्तेः ऋद्धिः कादाचित्कीति प्रतीतिं निवारयन्नाह– **ऋद्धतममेवेति** ॥[2] भगवतो दिवः परतः स्थितिः कुतः सिद्धेत्यतस्तामुक्तां स्मारयन् समर्थयते– **अथेति** ॥ एधमानमादित्यमण्डलमेव कुतो नाङ्गीकार्यम् । किं भगवत्परत्वकल्पनयेत्यतो बाधकमाह– **न चेति** ॥ तस्य दिवोऽर्वाक्त्वादिति शेषः ।[3]

उद्वयन्तममिति द्वितीयां ऋचमन्वयक्रमेण व्याचष्टे– **उत्तरमित्यादिना** ॥ ज्योतिः पश्यन्तः स्वः पश्यन्त इत्युक्त्वा ज्योतिःस्वशब्दोक्तयोर्भेदप्रतीतिं निवारयति– **उत्तरमिति** ॥ ज्योतिरेव चेत् स्वः तर्हि ज्योतिः पश्यन्तः स्वः पश्यन्त इति दृशि द्विरुक्तिः किमर्थमित्यत आह– **द्विरुक्तिरिति** ॥ तमसः उदगन्म उद्गताः स्म इति योजितं पूर्वमिदानीमर्थान्तरपूर्वमुत्तरवाक्यं योजयति– **उदाख्यमिति** ॥ तमसः सकाशादुद्गत्येति शेषः[4] ।

१. "दिवा" इति तृतीया पञ्चम्यर्थेति भावेन दिवः इत्युक्तम् ।

२. यद्यपि ऋद्धतममेव सर्वदा, तथाऽपि लोकदृष्ट्या इध्यते इत्युच्यत इति भावः ।

३. तस्यान्तरिक्षगतत्वादिति वा भावः ।

४. अथवा तमसो दुर्गायाः उत्तममिति सम्बन्धः ।

भगवत उन्मामत्वं कुतः? येन तथा व्याख्यानं युक्तमित्यतः श्रुत्या समर्थयते– **तस्येति** ।। ऋचोर्भगवत्परत्वे सूर्यमगन्मेति श्रुतिर्बाधिकेत्यतो भगवति योगरूढिं दर्शयति– **सूरिभिरिति** ।। एवं ऋग्द्वयं स्ववाक्येन व्याख्याय तद्दार्ढ्याय तद्व्याख्यानरूपं प्रमाणं पठति– **रतिरूपमिति** ।।[1] एधवृद्धौ इन्धीदीप्ताविति धातुद्वयस्य रूपमिध्यते इत्येतदित्याशयेनोक्तम्– **यत्पूर्णं सर्वदा भातीति** ।। उत्तरमुत्तरमुत्तममित्यस्यार्थः– **उत्तमोत्तमसूत्तममिति** ।।

**इति सप्तदशः खण्डः ।।**

## अथ अष्टादशः खण्डः

### अध्यात्माधिदैवतयोः भगवदुपासना

**उप.– मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेत्युभयमादिष्टं भवत्यध्यात्मं चाधिदैवतं च ।। १ ।।**

### अध्यात्माधिदैवतयोर्हरे रूपचतुष्टयम्

**तदेतच्चतुष्पाद्ब्रह्म वाक्पादः प्राणः पादश्चक्षुःपादः श्रोत्रं पाद इत्यध्यात्ममथाधिदैवतमग्निः पादो वायुः पाद आदित्यः पादो दिशो पाद इत्युभयमेवादिष्टं भवत्यध्यात्मं चाधिदैवतं च ।। २ ।।**

### वागिन्द्रिये वासुदेवः

वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ।। ३ ।।

### प्राणेन्द्रिये सङ्कर्षणः

प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिपा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ।। ४ ।।

१. हृदि पश्यन्ति ।

## चक्षुरिन्द्रिये प्रद्युम्नः

**चक्षुरेव ब्रह्मणश्चतुर्थः पादः स आदित्येन ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ५ ॥**

## श्रोत्रेऽनिरुद्धः

**श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः स दिग्भिर्ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद य एवं वेद ॥ ६ ॥ १८ ॥**

भा.– **मनःसंस्थस्तु यो देवः साक्षान्नारायणः प्रभुः ।**
**स एवाकाशसंस्थश्च मन आकाशनामकः ॥**

**मननान्मन आकाश आसमन्तात् प्रकाशनात् ।**
**वासुदेवादिभेदेन स वागादिषु संस्थितः ॥**

**अग्न्यादिषु च तन्नामा वागादिस्थः स एव तु ।**
**अग्न्यादिस्थैः सहैवेशो भाति दुष्टांस्तपत्यथ ॥**

**एवं विद्वांस्तमीशेशं यशोज्ञानसुखात्मताम् ।**
**कीर्तिं च ब्रह्मसम्प्राप्त्या[१] वरतां मुक्तिगामपि ॥**
**प्राप्य भाति तपत्यद्धा स्वाज्ञानादिकमेव च ॥ इति च ॥१८॥**

**भाष्यविवृतिः–** लब्धायुषः पुरुषस्य तत्सार्थक्यार्थमध्यात्ममधिभूतं भगवादुपास्तिं तत्फलं चाह– **मनो ब्रह्मेत्यादिना ॥**[२] अत्रह्मैव मनआदि ब्रह्मेत्युपासीतेति प्रतीकोपास्तिप्रतीतिं निवारयन् व्याचष्टे– **मनःसंस्थ**

---

१. ''ब्रह्म सम्प्राप्य'' इपाठः । २. अधिदैवं ।

इत्यादिना ॥[१] तदेतच्चतुष्पादित्याद्यप्रतीतेर्व्याचष्टे– **वासुदेवेति** ॥ परब्रह्मणो वासुदेवादिभेदेन वागादिस्थत्वे वाक् पाद इति समानाधिकरणप्रयोगः कथमित्यतो वागादिनामत्वादित्याह– **तन्नामेति** ॥[२] एवं मनो ब्रह्म आकाशो ब्रह्मेति समानाधिकरणप्रयोगघटनाय मन आकाशनामक इत्युक्तमिति द्रष्टव्यम् । वागेव ब्रह्मणश्चतुर्थः पाद इत्यादि व्याचष्टे– **वागादिस्थ इति** ॥ यशःकीर्तिशब्दयोरेकार्थत्वप्रतीतिं निवारयन् भातीत्यादिफलाभिधायकं वाक्यं व्याचष्टे– **एवमिति** ॥ यश इत्यनूद्य प्रतिपदं– **ज्ञानसुखात्मकमिति** ॥ ब्रह्मवर्चसेत्यस्य प्रतिपदं– **ब्रह्मसम्प्राप्त्येति** ॥ वेदप्राप्तिलब्धतेजसेत्यर्थः । इति **अष्टादशः खण्डः** ॥

## अथ एकोनविंशः खण्डः

## आदित्ये भगवदुपासना

**उप.– आदित्यो ब्रह्मेत्यादेशस्तस्योपव्याख्यानमसदेवेदमग्र आसीत् तत्सदासीत् तत्समभवत् तदाण्डं निरवर्तत तत्संवत्सरस्य मात्रामशयत तन्निरभिद्यत ते आण्डकपाले रजतं च सुवर्णं चाभवताम् ॥ १ ॥**

**तद्यद्रजतं सेयं पृथिवी यत्सुवर्णं सा द्यौर्यज्जरायु ते पर्वता यदुल्बं स मेघो नीहारो या धमनयस्ता नद्यो यद्वास्तेयमुदकꣳ स समुद्रोऽथ यत्तदजायत सोऽसावादित्यस्तं जायमानं घोषा उलूलवोऽनूदतिष्ठन् सर्वाणि च भूतानि च सर्वे च कामास्तस्मात् तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनूत्तिष्ठन्ति सर्वाणि च भूतानि सर्वे चैव कामाः ॥ ३ ॥**

---

१. साक्षादनन्याधीनत्वेन मनःसंस्थो न रुद्रादिरिवेति । तथा चाध्यात्मं मनोनामकस्य भगवतोऽधिदैवमाकाशे मनआकाशनामकं रूपद्वयमस्तीति उक्तं भवति ।

२. तत्तन्नामेत्यर्थः ।

स य एतदेवं विद्वानादित्यं ब्रह्मेत्युपास्तेऽभ्याशो ह यदेनꣳ साधवो घोषा आ च गच्छेयुरुप च निम्रेडेरन्निम्रेडेरन् ॥ ४ ॥ १९ ॥

॥ इति श्रीमच्छान्दोग्योपनिषदि तृतीयोऽध्यायः ॥

भा.– अगम्यत्वादसन्नाम ब्रह्म नारायणाभिधम् ।
प्रलये वासुदेवाख्यं गम्यं सदभवद्विदाम् ॥

तत्प्रकृत्या समभवत् तत आण्डमजायत ।
तस्मिन्नादित्यनामासावभवत् सूर्यमण्डले ॥

नियन्तैव च सूर्यस्य भगवान् पुरुषोत्तमः ।
तस्मादादित्यनामानमादित्यस्थं जनार्दनम् ॥
ब्रह्मोपासीत परमं सर्ववेदज्ञता ततः ॥ इति ब्रह्मतत्त्वे ।

उलूलव उरूरव । अतिमहान्तो गायत्र्यादिघोषाः उप च निम्रेडेरन् । मुक्ते तस्मिन्नेव वसेयुः ।

सूर्यबिम्बस्थिते विष्णौ जायमाने परात्मनि ।
गायत्रीपूर्वकैर्वेदैर्ब्रह्माद्यास्समुपस्थिताः ॥

उपतिष्ठन्त्यतो नित्यं गायत्र्यादिभिरञ्जसा ।
तद्विद्वान् मुक्त आवासो वेदानां सर्वदा भवेत् ॥
इति च ॥ १९ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमच्छन्दोग्योपनिषद्भाष्ये तृतीयोऽध्यायः ॥

**भाष्यविवृतिः**– यत्प्राप्त्या पुरुषस्य कीर्तिर्ब्रह्मवर्चोयशःशब्दोक्तज्ञान-सुखात्मताच भवति तेषां वेदानां प्राप्तिसंपादिकां आदित्यनिष्ठां काञ्चन भगवदुपास्तिमाह– **आदित्य इति ॥** आदित्यो ब्रह्मेत्यादेश उपदेशः । आदित्यं ब्रह्मतयोपासीतेत्यर्थः । अब्रह्मण आदित्यस्य कथं ब्रह्मतयो-पास्तिर्घटत इत्यतस्तद्धटनाय प्रलयप्रकारं निरूपयन् आदित्यस्योत्पत्ति-प्रकारमाह– **तस्योपव्याख्यानमित्यादिना ॥** तस्योपपत्यर्थे[1] **व्याख्यानं** सृष्टिनिरूपणं क्रियत इत्यर्थः । इदमिति विभक्तिप्रतिरूपकाव्ययस्यापि भावादव्ययस्य सर्वविभक्त्यर्थत्वादस्य जगतोऽग्रेऽसदेवासीदित्यर्थः । तत्तस्मादसतः । **समभवत्** सम्भोगमकरोत् । **निरवर्तत** अजायत । **संवत्सरस्य मात्रां** संवत्सरपर्यन्तमित्यर्थः ।

तद्यद्रजतं सेयं पृथिवीति रजताण्डकपाले पृथिवी तिष्ठतीत्यर्थः । एवं द्यौरित्यस्यापि । **सर्वाणि च भूतानि** ब्रह्मादयः । सर्वेच देवा इति यावत् । सर्वे च कामाः सर्वैः मङ्गल-द्रव्यैरिति यावत् । उरुभिर्गायत्र्यादि-वेदघोषैर्जायमानं तमनूदतिष्ठन् यस्मात्तस्माद्यतनानिच भूतानि पुष्पा-क्षतादिकामैर्गायत्र्यादिभिर्वेदैस्तस्योदयं प्रति अयनम् अस्तदर्शनं च प्रति प्रत्यनुतिष्टन्तीत्यर्थः । एतद्विद्यावेत्तुः फलमाह– **स य इत्यादिना ॥**

आदित्यस्य ब्रह्मत्वप्रतीतिं प्रलये शून्यावस्थितिप्रतीतिमप्रतीतिं निवारयन् असदेवेदमग्र आसीदित्यादि व्याचष्टे– **अगम्यत्वादित्यादिना ॥ विदां** विदुषां सद्यते गम्यते ज्ञायते इति सदिति व्युत्पत्तिसूचनाय सदित्यनूद्य गम्यमिति व्याख्यातम् । आदित्यनामा भगवानभवदित्युक्तम् । स किं प्रसिद्धः सूर्य एव? नेत्याह– **नियन्तेवैति ॥**[2] यस्माद्ब्रह्मादीनि भूतानि

१. आदित्यान्तर्गतस्य भगवतः उपास्यत्वोपपत्यर्थं इत्यर्थः ।

२. तथाच ''तदधीनत्वात्''इति न्यायेन तत्र तच्छब्दप्रयोग इत्युक्तं भवति ।

जायमानं तं समन्त्रैरर्हणैरनूदतिष्ठंस्तस्मादादित्यनामानमुपासीतेति हेतुपूर्वमादित्यो ब्रह्मेत्यादि साध्यांशं व्याचष्टे– **तस्मादिति** ॥ साधवो घोषा आगच्छेयुरित्यस्यार्थः– **सर्ववेदज्ञतेति** ॥ उलूलव इति पदमप्रतीतेरनूद्य व्याचष्टे– **उलूलव इति** ॥ उरुः रवः उरूरव इति यावत् । तथा च उलूलवो घोषा इत्यस्य कोऽर्थः सम्पन्न इत्यत आह– **अतीति** ।[१] अप्रतीतेरुपनिम्रेडरन्नित्यस्यानूद्यापेक्षितापूर्वमर्थमाह– **उपचेति** ॥ बुध्यारोहार्थं तज्जायमानमित्यादि स्पष्टप्रमाणेन व्याचष्टे– **सूर्येति** ॥ इति **एकोनविंशः खण्डः** ॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितछन्दोगोपनिषद्भाष्यटीकायां जयतीर्थपूज्यचरणशिष्यव्यासतीर्थविरचितायां तृतीयोऽध्यायः ॥**

---

१. तेषामतिमहत्वमानन्त्यं, व्याप्तत्वं वा । ''अनन्ता वै वेदा'' ''यावद् ब्रह्म विष्ठितं तावती वाक्'' इति श्रुतेः ।

# अथ चतुर्थोऽध्यायः

## प्रथमः खण्डः

### जानश्रुतेरुपाख्यानम्

उप.– जानश्रुतिर्हि पौत्रायणः श्रद्धादेयो बहुदायी बहुवाक्य आस । स ह सर्वत आवसथान् मापयाञ्चक्रे सर्वत एव मेऽत्स्यन्तीति ॥ १ ॥

अथ ह हꣳसा निशायामतिपेतुस्तद्धैवꣳ हꣳसो हꣳसमभ्युवाद हो होऽयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योति-राततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीरिति ॥ २ ॥

तमु ह परः प्रत्युवाच कम्वर एनमेतत्सन्तꣳ सयुग्वानमिव रैक्कमात्थेति यो नु कथꣳ सयुग्वा रैक्क इति ॥ ३ ॥

यथा कृताय विजितायाधरेयाः संयन्त्येवमेनꣳ सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति ॥ ४ ॥

### रैक्कमुनेरन्वेषणम्

तदु ह जानश्रुतिः पौत्रायण उपशुश्राव स ह सञ्जिहान एव क्षत्तार-मुवाचाङ्गारे ह सयुग्वानमिव रैक्कमात्थेति यो नु कथꣳ सयुग्वा रैक्क इति ॥ ५ ॥

यथा कृताय विजितायाधरेयाः संयन्त्येवमेनꣳ सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स सर्वं मयैतदुक्त इति ॥ ६ ॥

स ह क्षत्ताऽन्विष्य नाविदमिति प्रत्येया तꣳ स होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमृच्छेति ॥ ७ ॥

**सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश त१ँ हाभ्युवाद त्वं नु भगवः सयुग्वा रैक्व इत्यह१ँ ह्यरा३ इति ह प्रति जज्ञे स ह क्षत्ताऽन्विप्याविदमिति प्रत्येयाय ॥ ८ ॥ १ ॥**

**भा.– भल्लाक्ष मन्दाक्ष । यथा कृते जिते त्रेतादिजयफलं च तस्यैव भवति । एवमन्येषां पुण्यफलं प्राधान्येन तस्यैव भवति । अरे अङ्ग इष्ट । सयुग्वा रैक्वो ज्ञातव्यः । अहं ह्यरा३ इति प्लुतिः पामकषणभावेन ॥ १ ॥**

**भाष्यविवृतिः**– मनोब्रह्मेत्यादिखण्डे भाति च तपति चेत्यदिनोक्त-भावादिफलविद्योक्ता । अत्र सार्वज्ञ्यादिसंपादकसंवर्गविद्यामाख्यायिकया त्रिभिः पर्वभिराह ॥ जनश्रुतेः पुत्रो– **जानश्रुतिः** । पुत्रायणस्य गोत्रा-पत्यं– **पौत्रायणः** । श्रद्धया देयं यस्य स– **श्रद्धादेयः** । **बहुवाक्यः** बहुमानवाक्यवान् बहुश्रुतो वा । **सर्वतः** सर्वत्र **आवसथान्**[1] गृहान् । **मापयांचक्रे** कारयामास । **मे अन्नमत्स्यन्तीति** अद्युरिति बुध्या । निशायां प्रासादतले मञ्चे शयानं हंसा अतिपेतुः । तद्ध तदाह– **होहोयि** भो भो **दिवासमं** द्युलोकपर्यन्तम् । एवमुक्तः परो हंसः प्रत्युवाच । कं किं प्रभावं तं मत्वा एतत्सन्तमत्र सन्तमेनं प्रत्यात्थ । सयुग्वानं रैक्वमिवेति योजना । **कथं नु** किं महिमावान् । स रैक्व इति जिज्ञासायामाहस **यथा** वक्ष्यमाण-दृष्टान्तो यथेत्यादिना । अधरेयास्त्रेतादयः । संयन्ति जितफलाः संवभवन्ति । एनं संवर्गविद्यावेत्तारं रैक्वम् । कोऽपि वेदितव्यं[2] वेद तत्सर्वं स वेद स मयैतेन प्रकारेणोक्तः । **संजिहान एव** तल्पादुत्तिष्ठन्नेव । तत्तत्रैनमृच्छ मृगय[3] मृगयन् सः । शकटस्याधस्तात् । स्थितं **अभ्युवाद** उवाच । **प्रतिजज्ञे** प्रत्युवाच ।

१. आवसन्ति एपु इत्यावसथाः तान् । २. 'यज्ज्ञातव्यं' गपाठान्तरं

३. मृगयस्व इति घपाठान्तरं

अर्थाप्रतीतेर्भल्लाक्षपदं प्रतिपदेन व्याचष्टे **भल्लाक्षेति** ।।[१]

विभक्तिव्यत्यासेनार्थाप्रतीतेः स यथा कृतायेत्यादि व्याचष्टे– **यथेति** ।।[२] सम्यक् कर्मकरणेन कृते जिते ।[३] महतां ब्रह्मादीनामपि पुण्यसद्भावात् कथमन्येषां पुण्यं तस्य[४] भवतीत्युक्तिरित्यत उक्तम्– **प्राधान्येनेति** ।। केषाञ्चित् स्थूलानां पुण्यफलं विनेत्यर्थः ।

अङ्ग अरे इत्येतद्व्याकुर्वंस्तस्योपर्यध्याहार्यभागमाह– **सयुग्वा रैक्वो ज्ञातव्य इति ।।** तस्योपरिच कस्मादसौ मार्गयितव्य इति कारण-जिज्ञासायामुत्तरत्वेन हंसा निशायामित्यादेरप्युपलक्षकं सयुग्वानमिव रैक्वमित्यादि प्राप्तमिति ज्ञातव्यमित्यर्थः ।

---

१. अत्र भद्रं सारासाराभिज्ञम् अक्षं इन्द्रियं यस्यासौ भद्राक्ष इति कश्चित् । तदसत् । श्रुतहानाश्रुतकल्पनाप्रसङ्गात् । भल्लाक्षेत्यस्यैवायमर्थ इत्यङ्गीकारे निन्दाप्रकरण-विरोधात् । भल्लाक्षेतिमन्ददृष्टित्वं सूचयन्नाह'' इति त्वद्भाष्यविरोधाच्च । जानश्रुतेर्ज्योतिरतिक्रम्य गमने तव प्राप्तं दाहं न जानासीति भावेन मन्दाक्ष इति सम्बोधित इति भावः । तथाचोक्तं गीतामाहात्म्ये प्रकाशमानं पुरतस्तेजःपुञ्जं न पश्यथ । जानश्रुतेर्महीभर्तुः पुण्यकीर्तेरिति स्फुटम् ।। इति ।

२. यथा कृताय इत्यादिकमेवं व्याचक्षते । द्यूते प्रवृत्तानां ये दीर्घदन्तादिमया अक्षास्तेषु चतसृषु दिक्षु चत्वारोऽङ्का भवन्ति । एकाङ्को द्व्यङ्कस्त्र्यङ्कश्चतुरङ्क इति । ते चैकाधिकत्वसामान्यात् कलिद्वापरादिनामानः । तथाच द्यूते कृताय चतुरङ्काय विजितायाधरेयास्त्रिद्व्येकाङ्कास्त्रेतादिनामानः संयन्त्यन्तर्भवन्ति इति तदसत् । कृतशब्दस्य सिद्धकृतयुगार्थत्वग्रहणे बाधकाभावेन द्यूताभिनिवेशेनैवं श्रुतिव्याख्यानायोगात् । परित्यज्यान्यानि निदर्शनानि द्यूतदृष्टान्तग्रहणायोगच्च । नचाक्षेपु शौण्डा राजानोऽतोऽक्षगतचतुरङ्कनिदर्शनेनैव जानश्रुतिबोधनाय हंसो हंसं सम्बोधितवानिति वाच्यम् । जानश्रुतेः परमधार्मिकत्वेनाक्षासक्तत्वाभावात् । हंसाश्च देवा वा ऋषयो वा जानश्रुतिकृतान्नदानेन तुष्टाः समागता इति त्वयाऽपि व्याख्यातत्वेन तेषामज्ञाना-सम्भवाच्चेति ।

३. कृतयुगधर्मे प्राप्तफले सति, अनेन चतुर्थी सप्तम्यर्थेत्युक्तं भवति ।

४. युक्तं इति पाठान्तरम् ।

अरा इति प्लुत्युक्तेर्भावमाह– अहमिति ॥[1] इति प्रथमः खण्डः ॥

## अथ द्वितीयः खण्डः

## रैक्वस्य वैराग्यम्

उप.– तदु ह जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे तꣳ हाभ्युवाद ॥ १ ॥

रैक्वेमानि षट् शतानि गवामयं निष्कोऽयमश्वतरीरथो नु म एतां भगवो देवताꣳ शाधि यां देवतामुपास्स इति ॥ २ ॥

तमु ह परः प्रत्युवाचाह हारेत्वा शूद्र तवैव सह गोभिरस्त्विति तदुह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे ॥ ३ ॥

तꣳ हाभ्युवाद रैक्वेदꣳ सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायाऽयं ग्रामो यस्मिन्नास्सेऽन्वेव मा भगवः शाधीति ॥ ४ ॥

तस्या ह मुखमुपोद्गृह्णन्नुवाचाजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथा इति ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास तस्मै होवाच ॥ ५ ॥ २ ॥

## शूद्रशब्दव्याख्यानम्

भा.– शुचाऽऽद्रवणाच्छूद्रः ।

राजा पौत्रायणः शोकाच्छूद्रेति मुनिनोदितः ।
प्राणविद्यामवाप्यास्मात् परं धर्ममवाप्तवान् ॥ इति पाद्मे ॥ २ ॥

---

१. अहं ह्यरा३ इति प्लुतिरनादरे इति व्याख्यानमसत् । अनहंकारेण मुनिना वृथा विनयोपागततदनादरणकरणायोगादिति ।

**भाष्यविवृतिः**– निष्कं हाररूपं अश्वतरीभिर्युक्तमश्वतरीरथम् । अश्वतराश्वाश्वैर्गर्दभीषु जाताः । भगवो मे एतां देवतामनुशाधि । हे शूद्र हारेत्वा हारेण सहितो रथो गोभिः सह तवैवास्तु । तदुह तस्माद्धा एव मुक्तत्वाद्धि । **अभ्युवाद** उवाच । तस्याः राजकन्यायाः । हे शूद्रेमा आजहार सम्यक् स्वीकृतवान् । त्वं श्रुश्रूषया विनाऽनैनेव मुखेन हारादिमुखेनैव मामालापयिष्यथाः ननु । ते एते राजदत्ता ग्रामा महावृषेषु देशेषु[१] रैक्वपर्णा नाम हि । यत्र येषु ग्रामेषु रैक्वः अस्मै राजार्थमुवास । उवाच संवर्गविद्याम् ।

शूद्र इत्युक्त्या पौत्रायणस्य शूद्रत्वप्रतीतिं निवारयन्नाह– **शुचेति** ।[२] तस्य शूद्रत्वाच्छुद्रेत्युक्तमिति किं न स्यात् । इत्यतो राजत्वं प्रतिजानीते **राजेति** ॥[३] पौत्रायणस्य राजत्वं तस्य शुचा आद्रवणाच्छूद्रत्वं च कुतोऽवगतं? काचोक्ता तस्य संवर्गविद्या नामेत्यतस्तत्र प्रमाणमाह– **राजेति** ॥ शोकाद्रवणात् । **इति द्वितीयः खण्डः** ॥

## अथ तृतीयः खण्डः

## रैक्वोपदिष्टसंवर्गविद्या

**उप.– वायुर्वाव संवर्गो यदा वा महाप्रलये अग्निरुद्वायति वायुमेवाप्येति यदा सूर्योऽस्तमेति वायुमेवाप्येति यदा चन्द्रोऽस्तमेति वायुमेवाप्येति ॥ १ ॥**

---

१. काश्मीरापरपर्यायेषु इत्यर्थः ।

२. दीर्घस्वरार्थत्वेन आद्रवणादित्युक्तम् । शुग्द्र एव शूद्रो रुद्र इतिवत् । शुचाऽऽ-द्रवणादेव शूद्रेति सम्बोधितो नतु वर्णावरत्वाभिप्रायेणेत्यर्थः । शुगस्य हंसकृताना-दरश्रवणादुत्पन्नेति भावः । तथाच "शुगस्य तदनादरश्रवणात् तदाद्रवणात् "इति ।

३. "अयमश्वतरीरथः" इति रथित्वलिङ्गात् । क्षत्रसम्बन्धाच्च । बाधकवशात् रूढि-परित्याग इति भावः ।

यदाऽऽप उच्छुष्यन्ति वायुमेवापियन्ति वायुर्ह्येवैतान् सर्वान् संवृङ्क्त इत्यधिदैवतम् ॥ २ ॥

अथाध्यात्मं प्राणो वाव संवर्गः स यदा स्वपिति प्राणमेव वागप्येति प्राणꣳ चक्षुः प्राणꣳ श्रोत्रं प्राणं मनः प्राणो ह्येवैतान् सर्वान् संवृङ्क्त इति ॥ ३ ॥

तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु ॥ ४ ॥

## वायुरेव संवर्गः अस्मिन् विषये ऐतिह्यम्

अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे तस्मा उ ह न ददतुः ॥ ५ ॥

स होवाच महात्मनश्चतुरो देव एकः कः सो जगार भुवनस्य गोपास्तं कापेय नाभिपश्यन्ति मर्त्या अभिप्रतारिन् बहुधा वसन्तं यस्मै वा एतदन्नं तस्मा एतन्न दत्तमिति ॥ ६ ॥

तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयायात्मा देवानां जनिता प्रजानाꣳ हिरण्यदꣳष्ट्रो बभसोऽनसूरिर्महान्तमस्य महिमानमाहुरनद्यमानो यदनन्नमत्तीति वै वयं ब्रह्मचारिन्निदमुपास्महे दत्तास्मै भिक्षामिति ॥ ७ ॥

तस्मा उ ह ददुस्ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतं तस्मात् सर्वासु दिक्ष्वन्नमेव दश कृतꣳ सैषा विराडन्नादी तयेदꣳ सर्वं दृष्टꣳ सर्वमस्येदं दृष्टं भवत्यन्नादो भवति य एवं वेद य एवं वेद ॥ ८ ॥ ३॥

भा.– संवृङ्क्ते सर्वदेवान् यद्वायुः संवर्ग ईरितः ।
महिमाऽस्य महानेष यदनद्योऽत्ति देवताः ॥ इति प्रभञ्जने ।

'दशेति वै सर्वम्' इति श्रुतेः । कृतस्य च पूर्णात्मकत्वादध्यात्माधिदैवतभेदेन[१] पञ्चदेवता दशभूताः कृतम् । तस्माद्वायुना सह दशसङ्ख्यापूरणात् सर्वदिक्षु स्थिता देवता वायुना सहान्नमेव । अन्नादी देवता विराड् विष्णुरेव । अनद्यमान इत्यन्यैरनद्यमानः ।

**वायुस्तु सर्वदेवात्ता वायोरत्ता जनार्दनः ।**
**न तस्य कश्चिदत्ताऽस्ति स विराडधिराजनात् ॥** इति च

॥ ३ ॥

**भाष्यविवृतिः**– तेन प्रोक्तामधिदैवतमध्यात्मञ्च संवर्गविद्यां संवर्गस्वरूपं निरूपयन् प्रपञ्चेनाह– **वायुरिति ।** संवर्ग इत्युक्तं संहर्तृत्वमेव विशदमाह– **यदा वा इत्यादिना ॥ वायुः** भूतवायुः । **वायुं** मुख्यवायुम् । **उद्वायति** नश्यति । **संवृङ्क्ते** संहरति । प्राणस्य संवर्गत्वप्रकारमाहस **यदेति ।** स जीवः । अधिभूतमध्यात्मं च प्रधानवायुः संवर्ग इत्युक्तमर्थमाख्यायिकयोपपादयति– **अथ ह शौनकमिति ॥** शुनकस्यापत्यं शौनकः । कपेरपेत्यं कापेयः । प्रतारणान्नामतोऽभिप्रतारिणम् । कक्षसेनस्यापत्यं काक्षसेनिः । **परिविष्यमाणौ** अन्नं परिवेषयन्तौ । **बिभिक्षे** याचितवान् । यो भुवनस्य गोपायतीति गोपाः । गोप्तेति यावत् । एको देवश्चतुरो महात्मनो[२] **जगार** गृनिगरणे जग्रास । यं च तं मर्त्यो बहुधा वसन्तम् । नाभिपश्यन्ति । कापेय अभिप्रतारिन् । स कः? यस्मै वा । यस्य वै । शौनकः तत्पृष्टं दैवतं प्रतिमन्वनः विचारयन् प्रत्येयाय व्यजानात् । उवाच चात्मेत्यादि । **बभसो** भक्षकः । अनश्चेष्टकत्वेनासौ सूरिर्ज्ञानीचेत्यनेन अनसूरिः । त्वत्पृष्टः सर्वभक्षकः प्राण इत्यर्थः । महिमानमेवाह– **अनद्यमान इति ॥**[३]

१. ''अधिदैव भेदेन हृपाठः ।  २. अधिदैवमग्न्यादीनध्यात्मं वागादीन् ।

३. मुद्रिते वेदीशीये ''अनद्यमानोऽन्नम्'' इति वर्तते परं तत्र ''अनद्यमानः अनन्नम्'' इति भवितव्यम् । उपनिषदि अनद्यमानो यदनन्नम् इत्यस्ति । तथैव परिमळाचार्यविरचिते खण्डार्थेऽपि ''अनन्नमित्येव वर्तते ।

**अनन्नम्** अन्यैरत्तुमशक्यमिति । एवं मुख्यवायोः संवर्गत्वमुक्तम् ! नहिं प्राण एव सर्वमुत्पाद्य संहर्त्तेत्यतो नेत्याह– **तेवा इति** ॥ त वा एते अध्यात्माधिदैवतभेदेन पञ्चान्ये पञ्चान्ये दश सन्तः[१] तत्कृतं कस्यचिदन्नमतो नोक्तप्रसङ्ग इत्यर्थः । अध्यात्माधिदैवभेदनाप्यग्न्यादीनामष्टत्वात् कथं दशत्वमित्यत आह– **तस्मात्सर्वासु दिक्ष्वन्नमेव दश कृतमिति** ॥ एते दश यस्यान्नं स क इत्यत आह– **सैषा विराडिति** ॥ सर्वज्ञत्वाभावे कथं सर्वात्तृत्वमतस्तदस्तीत्याह– **तयेदमिति** ॥ संवर्तकविद्योपासकस्य सार्वज्ञ्यं फलमाह– **सर्वमस्येति** ॥[२]

यदावा अग्निरुद्वायतीत्यादेर्वायोः स्फुटं संवर्तकत्वप्रतिपादकत्वाप्रतीतेरनद्यमान इत्यादेर्महान्तमित्युक्तमहिमोक्तित्वाप्रतीतिं च निवारयन् तद्वाक्यजातं तात्पर्योक्त्या व्याचष्टे– **संवृङ्क्त इति** । अग्न्यादेरेव वागादित्वेन पञ्चत्वात् कथं दशत्वमिति शङ्कां परिहरन् कृतपदस्यावतारक्रमेणोपपादयन् अर्थमाह– **दशेति** ॥ दशेति वै सर्वमिति श्रुतेर्दशत्वस्य सर्वात्मकत्वात् । सर्वस्य च सर्वं पूर्णमिहोच्यत इत्युक्तेः पूर्णात्मकत्वात् । कृतस्य च तदात्मकत्वात् पञ्चदेवताः अध्यात्माधिदैवभेदेन दशभूताः कृतं पूर्णमन्नमित्यर्थः । तस्मात् सर्वास्विति वाक्यं स्फुटं दशत्वपूर्णत्वाप्रतीतेर्व्याचष्टे– **तस्मादित्यादिना** ॥ यस्मादध्यात्माधिदैवभेदेन द्विरूपस्य वायोस्तेषु प्रवेशस्तस्माद्वायुना सहैद्दशसङ्ख्यापूरणात् । वायुना सह सर्वासु दिक्षु स्थिताः दशदेवताः कृतमन्नमेवेत्यर्थः । प्राणाद्यन्नादी विराट् क इति न ज्ञायते । अतस्तद्व्याचष्टे– **अन्नादीति** ॥ नन्वनद्यमान इत्युक्तत्वात् कथं वायोर्विष्ण्वन्नत्वमित्यतस्तद्घटनाय तदनूद्यार्थमाह– **अनद्यमान इति** ॥

१. अग्न्याद्याः वागादयश्च ।

२. योऽधिकारी एवं सर्वज्ञत्वेनान्नादित्वेन च विराडाख्यं विष्णुं वेदोपास्ते । अस्यानेनोपासकेनेदं स्वयोग्यं सर्वं दृष्टं भवति । सोऽन्नादश्च भवति ।

विष्णोरन्यैः । सर्वदेवात्तुर्वायोर्भगवदद्यत्वं कुत इत्यत आह– वायुरिति ॥
इति तृतीयः खण्डः ॥

## अथ चतुर्थः खण्डः

## जावालसत्यकामोपाख्यानम्

उप.– सत्यकामो ह जाबालो जवालां मातरमामन्त्रयाञ्चक्रे ब्रह्मचर्यं भवति विवत्स्यामि किंगोत्रो न्वहमस्मीति ॥ १ ॥

सा हैनमुवाच नाहमेतद्वेद तात यद्गोत्रस्त्वमसि बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साऽहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि स सत्यकाम एव जाबालो ब्रुवीथा इति ॥ २ ॥

स ह हारिद्रुमन्तं गौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तमिति ॥ ३ ॥

तꣳ होवाच किं गोत्रो नु सोम्यासीति स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्म्यपृच्छं मातरꣳ सा मा प्रत्यब्रवीद् बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साऽहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसीति सोहꣳ सत्यकामो जावालोऽस्मि भो इति ॥ ४ ॥

तꣳ होवाच नैतदब्राह्मणो विवक्तुमर्हति समिधꣳ सोम्याऽऽहरोप त्वा नेष्ये न सत्यादगा इति तमुपनीय कृशानामवलानां चतुःशतं गा निराकृत्योवाचेमाः सोम्यानु संव्रजेति ता अभिप्रस्थापयन्नुवाच नासहस्रेणावर्तयेति स ह वर्षगणं प्रोवाच ता यदा सहस्रꣳ सम्पेदुः ॥ ५ ॥४॥

भा.– आर्जवं ब्राह्मणे साक्षाच्छूद्रोऽनार्जवलक्षणः ।
गौतमस्त्विति विज्ञाय सत्यकाममुपानयत् ॥
इति सामसंहितायाम् ॥ ४ ॥

**भाष्यविवृतिः**– पूर्वं तदेतच्चतुष्पाद्ब्रह्म वाक् पाद इत्यादिना वासुदेवादिचतुर्मूर्तिविद्योक्ता । इदानीं प्रत्येकं चतूरूपाणां वासुदेवादीनामेव विद्यामाख्यायिकया षड्भिः पर्वभिराह– **सत्यकाम इत्यादिभिः** ॥ **आमन्त्रयांचक्रे** सम्बोधितवान् । **चरन्ती** कुर्वन्ती । **अब्राह्मणः** त्रैवर्णिकेतरः । एतद्विवक्तुं नार्हतीति मत्वा उप त्वा नेष्यामि समिधमाहरेत्युवाच । **निराकृत्य** निष्काल्य ।

नाहमेतद्वेद भो यद्गोत्रोऽहमस्मीति ऋजूक्त्याऽपि कथं गौतमस्य तद्ब्राह्मणत्वनिश्चयो येन तदुपनयनकरणं घटत इत्यतस्तत्स्वरूपं निरूपयन् घटयते– **आर्जवमिति** ॥ इति चतुर्थः खण्डः ॥

## अथ खण्डपञ्चकम्

## ऋषभरूपिवायुना वासुदेवाख्यरूपोपदेशः

**उप.– अथ हैनमृषभोऽभ्युवाद सत्यकामा ३ इति भगव इति ह प्रतिशुश्राव प्राप्ताः सोम्य सहस्रꣳ स्मः प्रापय न आचार्यकुलम् ॥ १ ॥**

**ब्रह्मणश्च ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच प्राची दिक्कला प्रतीची दिक्कला दक्षिणा दिक्कलोदीची दिक्कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम ॥ २ ॥**

**स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते प्रकाशवानस्मिꣳल्लोके भवति प्रकाशवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳ श्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ॥ ३ ॥ ५ ॥**

## अग्निना सङ्कर्षणाख्यभगवद्रूपोपदेशः

अग्निष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥

तमग्निरभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच पृथिवी कलाऽन्तरिक्षं कला द्यौः कला समुद्रः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम ॥ ३ ॥

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते अनन्तवानस्मिꣳल्लोके भवति अनन्तवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते ॥ ४ ॥ ६ ॥

## हंसरूपिणा चतुर्मुखब्रह्मणा प्रद्युम्नाख्यभगवद्रूपोपदेशः

हꣳसस्ते पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥

तꣳ हꣳस उपनिपत्याभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै हो-वाचाग्निः कला सूर्यः कला चन्द्रः कला विद्युत् कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम ॥ ३ ॥

भा.– आर्जवं ब्राह्मणे साक्षाच्छूद्रोऽनार्जवलक्षणः ।
गौतमस्त्विति विज्ञाय सत्यकाममुपानयत् ॥
इति सामसंहितायाम् ॥ ४ ॥

**भाष्यविवृतिः**– पूर्वं तदेतच्चतुष्पाद्ब्रह्म वाक् पाद इत्यादिना वासुदेवादिचतुर्मूर्तिविद्योक्ता । इदानीं प्रत्येकं चतूरूपाणां वासुदेवादीनामेव विद्यामाख्यायिकया षड्भिः पर्वभिराह– **सत्यकाम इत्यादिभिः** ॥ **आमन्त्रयांचक्रे** सम्बोधितवान् । **चरन्ती** कुर्वन्ती । **अब्राह्मणः** त्रैवर्णिकेतरः । एतद्विवक्तुं नार्हतीति मत्वा उप त्वा नेष्यामि समिधमाहरेत्युवाच । **निराकृत्य** निष्काल्य ।

नाहमेतद्वेद भो यद्गोत्रोऽहमस्मीति ऋजूक्त्याऽपि कथं गौतमस्य तद्ब्राह्मणत्वनिश्चयो येन तदुपनयनकरणं घटत इत्यतस्तत्स्वरूपं निरूपयन् घटयते– **आर्जवमिति** ॥ इति चतुर्थः खण्डः ॥

## अथ खण्डपञ्चकम्

## ऋषभरूपिवायुना वासुदेवाख्यरूपोपदेशः

**उप.– अथ हैनमृषभोऽभ्युवाद सत्यकामा ३ इति भगव इति ह प्रतिशुश्राव प्राप्ताः सोम्य सहस्रꣳ स्मः प्रापय न आचार्यकुलम् ॥ १ ॥**

**ब्रह्मणश्च ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच प्राची दिक्कला प्रतीची दिक्कला दक्षिणा दिक्कलोदीची दिक्कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम ॥ २ ॥**

**स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते प्रकाशवानस्मिꣳल्लोके भवति प्रकाशवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳ श्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ॥ ३ ॥ ५ ॥**

## अग्निना सङ्कर्षणाख्यभगवद्रूपोपदेशः

अग्निष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥

तमग्निरभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच पृथिवी कलाऽन्तरिक्षं कला द्यौः कला समुद्रः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम ॥ ३ ॥

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते अनन्तवानस्मिꣳल्लोके भवति अनन्तवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते ॥ ४ ॥ ६ ॥

## हंसरूपिणा चतुर्मुखब्रह्मणा प्रद्युम्नाख्यभगवद्रूपोपदेशः

हꣳसस्ते पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥

तꣳ हꣳस उपनिपत्याभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाचाग्निः कला सूर्यः कला चन्द्रः कला विद्युत् कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम ॥ ३ ॥

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः ज्योतिष्मानित्युपास्ते ज्योतिष्मानस्मिꣳल्लोके भवति ज्योतिष्मतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ॥ ४ ॥ ७ ॥

## मद्गुरूपिवरुणेनानिरुद्धोपदेशः

मद्गुः ते पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥

मद्गुरुपनिपत्याभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच प्राणः कला चक्षुः कला श्रोत्रं कला मनः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणो आयतनवान्नाम ॥ ३ ॥

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः आयतनवानित्युपास्ते आयतनवानस्मिꣳल्लोके भवति आयतनवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः आयतनवानित्युपास्ते ॥ ४ ॥ ८ ॥

प्राप हाचार्यकुलं तमाचार्योऽभ्युवाद सत्यकामा३ इति भगव इति ह प्रतिशुश्राव ॥ १ ॥

ब्रह्मविदिव वै सोम्य भासि को नु त्वाऽनुशशासेत्यन्ये मनुष्येभ्य इति ह प्रतिजज्ञे भगवांस्त्वेव मे कामे ब्रूयात् ॥ २ ॥

श्रुतꣳ ह्येव मे भगवद्दृशेभ्य आचार्याद्ध्येव विद्या विदिता साधिष्ठं प्रापयतीति तस्मै हैतदेवोवाचात्र ह न किञ्चन वीयायेति वीयायेति ॥ ३ ॥ ९ ॥

भा.– वायुर्वृषभरूपः सन्नग्निर्हंसश्चतुर्मुखः ।
मद्गुरूपश्च वरुणः सत्यकामाय होचिरे ॥

प्रकाशानन्ततेजोवत्स्थानवत्सञ्ज्ञिका[1] हरेः ।
वासुदेवादिका मूर्तीः प्रत्येकं चतुरात्मनः ॥

दिगादिषु स्थितास्तेषामधिपाश्च तदाख्यकाः ।
नाचार्यबुध्या तैरुक्तमतोऽनुज्ञां गुरोरगात् ॥

उत्तमाचार्यसम्प्राप्त्यै नावराचार्यतः क्वचित् ।
इच्छेदनुज्ञां श्रुत्वाऽपि नानुज्ञां प्रार्थयेत् ततः ॥

ऋषिभ्यस्तूत्तमा देवा देवेभ्यो वायुरुत्तमः ।
वायोश्च भगवान् विष्णुर्न तस्मादुत्तमो गुरुः ॥

इत्याचार्यसंहितायाम् ।

अत्र ह न किञ्चन वीयाय । देवेभ्यः श्रुत्वा न च ते काचिद्धा-निरभवदित्यर्थः ॥ ८–९ ॥

**भाष्यविवृतिः– आचार्यकुलं** तद्गृहम् । **मद्गुः** जलवायसः[2] । तर्हि मयाऽनुशासितव्यं नास्तीत्यत आह– **भगवानिति** ॥ मे कामे मदभि-लषितसिद्ध्यर्थं भगवांस्त्वेव ब्रूयात् । कुतो मयैव वक्तव्यमित्यत आह– **श्रुतं ह्येवेति** ॥ **साधिष्ठं** स्थिरत्वं साधुत्वं प्राप्नोति । पुनर्य एतमेवं विद्वां-श्चतुष्कलमित्याद्युक्त्या प्रकाशवतो ह लोकान् जयतीत्याद्युक्तफलान्तरवान् भवतीत्याह । तदेवहि वृषभाद्युक्तमेवहि । तस्मा उवाच । गुरुभ्योऽन्येभ्यः

१. ''सञ्ज्ञका'' हृपाठः ।

२. तद्रूपी वरुण इत्यर्थः ।

श्रवणेनापराधो मम जातः किमिति भावयन्तं प्रत्याह– **अत्र हीति** ।। न किञ्चन वीत्यायेत्युक्तमेव निश्चिनोति **वीयायेतीति** ।।

नचाग्नेर्जडत्वादृषभहंसादेः पशुपक्षित्वात्कथं ब्रह्मोपदेष्टृत्वं घटत इत्यतस्तत्स्वरूपं निरूपयन् घटयति– **वायुरिति** ।। दिगादीनामब्रह्मत्वात् प्राचीदिक्कलेत्याद्युक्तैष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नामेत्यादिना ब्रह्मपदत्वोक्तेरयुक्तत्वप्रतीतिं निवारयन्नाह– **प्रकाशेति** ।। ननु वाय्वादीनां गौतमादुत्तमत्वात् कथं भगवांस्त्वेव मे ब्रूहीति प्रार्थनं कथं चात्र न[1] किञ्चन वीयायेति गौतमाद्वाय्वाद्यनुज्ञाप्राप्तिश्चेत्येतत् कारणोक्त्या घटयते– **नाचार्येति** ।। तानाचार्यत्वेन स्वीकृत्यैव[2] पश्चाद्गौतमादनुज्ञामवाप्येति किं न स्यादित्यतः शिक्षामुत्तरमाह– **उत्तमेति** ।। उत्तमेभ्यः श्रुत्वाऽपि ततः अधमादनुज्ञां न प्रार्थयेदित्येतदेवात्रोपयोगि । ननु वाय्वादीनां गौतमादुत्तमत्वमेव कुतः? येन तेषां गुरुत्त्वेनावृतत्वात् गौतमप्रार्थनमुपपन्नं स्यादित्यतस्तत्र प्रमाणमाह– **ऋषिभ्य इति** ।। अत्र न किञ्चन वीयायेत्येतदनुज्ञाप्रदानवचनमप्रतीतेरनूद्य व्याचष्टे– **अत्रेति** ।। इति **खण्डपञ्चकम्** ।। ५–९ ।।

## अथ दशमः खण्डः

## उपकोसलोपाख्यानम्

**उप.– उपकोसलो ह वै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास तस्य ह द्वादश वर्षाण्यग्नीन् परिचचार स ह स्मा अन्यानन्तेवासिनः समावर्तयꣳस्तꣳ ह स्मैव न समावर्तयति ।। १ ।।**

---

१. कथं च नात्र'' इति खपाठः ।

२. खपाठे एवकारो न पठितः ।

तं जायोवाच तप्तो ब्रह्मचारी कुशलमग्नीन् परिचचारीन् मा त्वाऽग्नयः परिप्रवोचन् प्रब्रूह्यस्मा इति तस्मै हाप्रोच्यैव प्रवासाञ्चक्रे ॥ २ ॥

## अग्निभिः कृतः मुख्यप्राणपरब्रह्मोपदेशः

स ह व्याधिनाऽनशितुं दध्रे तमाचार्यजायोवाच ब्रह्मचारिन्नशान किं नु नाश्नासीति स होवाच बहव इमेऽस्मिन् पुरुषे कामा नानात्यया व्याधिभिः परिपूर्णोऽस्मि नाशिष्यामीति ॥ ३ ॥

अथ हाग्नयः समूदिरे तप्तो ब्रह्मचारी कुशलं नः पर्यचचारीद्धन्तास्मै प्रब्रवामेति तस्मै होचुः ॥ ४ ॥

प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति स होवाच विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामीति ते होचुर्यद्वाव कं तदेव खं यदेवं खं तदेव कमिति प्राणं च हास्मै तदाकाशं चोचुः ॥ ५ ॥ १० ॥

भा.–प्राणो ब्रह्म बलरूपं ब्रह्म । कमानन्दरूपं खं ज्ञानरूपम् ॥

अपरं ब्रह्म[१] स प्राणः साक्षाद्यो वलदेवता ।
ज्ञानानन्दात्मकं पूर्णं परम्ब्रह्म स्वयं हरिः ॥

नैजानन्दवलोद्रेकः कमित्युक्तो मनीषिभिः ।
बलज्ञानसमाहारः पूर्णः खमिति शब्दितः[२] ॥

तदात्मकः परो विष्णुराकाश इति कीर्तितः ।
एवं प्राणस्तथाऽऽकाशो ब्रह्मणी द्वे प्रकीर्तिते ॥ इति च ।

(१. ''अपरब्रह्म'' पाठान्तरम् ।)

(२. ''शब्दितम्'' हृपाठः ।)

**प्राणशब्दस्य वायुरर्थः प्रसिद्धः । कखयोर्भिन्नार्थत्वाशङ्कया कं च खं च न विजानामीत्याह। अत एवैक्याभिप्रायेण यद्वाव कं तदेव खं यदेव खं तदेव कमित्यूचुः ॥ १० ॥**

**भाष्यविवृतिः**–प्रकारान्तरेण च चतुर्मूर्तिविषयविद्यां ज्ञानिनो ज्ञातव्यमपवर्गकाले तद्गन्तव्यमार्गं च निरूपयिष्यंस्तावदुपयुक्तां परापरब्रह्मनिष्ठां विद्यामाख्यायिकमा(याऽ)ह– **उपकोसल इत्यादिकया** ॥ कमलायनस्यापत्यं– **कामलायनः । ब्रह्मचर्यं** ब्रह्मप्राप्त्यर्थं चरणम् । **अन्तेवासिनः** शिष्यान् **समवर्तयिष्यन्** अनुजानन् । **परिचचारीत्** पर्यचारीत् । **माच त्वाच** माश्च त्वाश्च पर्यचरत् । उपकोसलाय ब्रह्माब्रुवाणं सत्यकाममग्नयोऽस्मै ब्रह्म प्रब्रूहीति **परि** सर्वप्रकारेण प्रावोचन् । **व्याधिना** महताऽधिना । मनो दध्रे । **नानात्ययाः** नानामुखाः । हंतास्मै ब्रह्मचारिणे ब्रह्म प्रब्रवामेति परस्परं **समूदिरे** समूचुः । अग्नयः किमुपदिदिशुरित्यपेक्षायां वेदपुरुषस्तदुपदिष्टं स्वयमाह– **प्राणं चेति** ॥

प्राणो ब्रह्म कं बह्म खं ब्रह्मेति तदप्रतीतेरनूद्य व्याचष्टे– **प्राणेत्यादिना** ॥ प्राणो ब्रह्मेत्युपदिष्टमेव कं ब्रह्म खं ब्रह्मेति उपदिष्टमिति प्रतीतिं समत्वप्रतीतिं च निवारयन्नाह– **अपरमिति** । बलदेवताऽपि सुखज्ञानरूपं भवत्यतस्तस्मात् परब्रह्मणः को विशेष इत्यतः करवशब्दार्थोक्त्या विशेषमाह– **नैजेति** ॥ एतेन बलरूपत्वं च सिद्धं परब्रह्मणः । करवमित्युक्तं परं ब्रह्म परो विष्णुरित्ययुक्तम् । तदाकाशं चोचुरिति तत्राकाशशब्दप्रयोगादित्यतस्तद्धटयन्नाह– **परो विष्णुरिति** ॥ परो विष्णुरासमन्तात् काशनादाकाश इति कीर्तितः प्राणं चेत्यादि वेदपुरुषवाक्यमपेक्षितपूर्वं व्याचष्टे– **एवमिति** ॥ परं ब्रह्म हरिरित्युक्त्या परं ब्रह्म विष्णुरित्यागतम् । अपरं ब्रह्म प्राणः क इति जिज्ञासायामाह– **प्राणेति** ॥ ननु जानाम्यहं

प्राणो ब्रह्मेत्युक्त्या प्राणशब्दार्थं जानन् करवशब्दार्थं जानात्येव । अतः कथं कश्च खश्च न विजानामीत्यवददित्यतस्तथा वदतो भावमाह– **कखयोरिति** ॥ प्राणशब्दविदित्यादौ ग्राह्यम् । करवशब्दार्थयोर्भेद-शङ्कयैवमाहेति कुतोऽवगतमित्यतो ज्ञापकमाह– **अत एवेति** ॥ इति दशमः खण्डः ॥

## अथ एकादशः खण्डः

## गार्हपत्याग्निना पृथिव्यादिस्थभगवदुपदेशः

**उप.– अथ हैनं गार्हपत्योऽनुशशास पृथिव्यग्निरन्नमादित्य इति य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥**

**स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्ते उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥ ११ ॥**

## अथ द्वादशः खण्डः

## अन्वाहार्यपचनाग्निना जलादिस्थभगवदुपदेशः

**अथ हैनमन्वाहार्यपचनोऽनुशशासापो दिशो नक्षत्राणि चन्द्रमा इति य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥**

**स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्ते उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥ १२ ॥**

## अथ त्रयोदशः खण्डाः

### आहवनीयाग्निना प्राणादिस्थ भगवदुपदेशः

अथ हैनमाहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्ते उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥ १३ ॥

भा.– पृथुत्वात् पृथिवी विष्णुरग्निश्चाप्यङ्गनेतृतः ।
अन्नमत्तृत्वतो नित्यमादित्यश्चादिरूपतः ॥

आप आपालनाच्चैव देशनाद्दिश एव च ।
अनन्यराजो नक्षत्रमानन्दत्वाच्च चन्द्रमाः ॥

प्राणोऽसौ वलरूपत्वादाकाशः पूर्तिहेतुतः ।
द्यौः प्रकाशस्वरूपत्वाद् वेदनाद्विद्युदेव च ॥

यः सोमसूर्यविद्युत्सु[१] तत्तन्नामा हरिः परः ।
अहेयत्वादहंनामा गार्हपत्यादिसंस्थितः ॥

इति तत्त्वसंहितायाम् ।

### "सोऽहमस्मि" इति वाक्यस्य जीवब्रह्मैक्यपरत्वनिरासः

जीवैक्यपक्षे 'आदित्ये पुरुषं चन्द्रमसि विद्युतीति' भेदव्यपदेशो न युज्यते । "पृथिव्यग्निरन्नमादित्यः," "आदित्ये पुरुषः" इत्यादिना

---

१. 'सूर्यसोमविद्युत्सु' हपाठः ।

आदित्यादिशब्दवाच्यौ प्रथमार्थः सप्तम्यर्थश्च द्वौ प्रतीयेते । अतो नैक्यमुच्यते । स एवाहमस्मीत्यन्तर्यामिणोः सर्वविशेषाभावज्ञापनार्थम्[1] । पूर्वं सोऽहमस्मीत्यभेदे तात्पर्याधिक्यज्ञापनाय ।

अहमस्म्यादिकाः शब्दा अन्तर्यामिणि मुख्यतः ।
तत्सम्बन्धाज्जीवगाश्च तस्माद्भेदगता हरौ ॥

अस्मच्छब्दोदितोऽन्तःस्थ आत्मा व्याप्तो जनार्दनः ।
अग्नयो द्विविधं विष्णुमवोचन्नुपकोसले: ॥

इति सामसंहितायाम् ।

**नास्यावरपुरुषाः क्षीयन्ते भृत्यवानेव भवति । लोकी भगवल्लोकी भवति ॥ १३ ॥**

**भाष्यविवृतिः**— एवमग्निभिः सम्भूयोक्तां परापरब्रह्मनिष्टां विद्यां निरूप्य पृथगुक्तां चतुर्मूर्तिनिष्टां निरूपयति त्रिभिः पर्वभिः । पृथिवी ब्रह्मेत्यनुशशासेत्यादि सम्बन्धो ज्ञातव्यः । पृथिव्यादेर्ब्रह्माभेदप्रतीतिं निवारयन् अग्न्याद्यन्तर्याम्युपलक्षणतया स्वान्तर्यामिण आदित्यान्तर्यामिण ऐक्यमाह— **य एष इत्यादिना** ॥ एवमुत्तरवाक्ययोरपि योजना प्रयोजनोक्तिश्च ज्ञातव्या ॥

ब्रह्मविद्यात्वाप्रतीतेः पृथिव्यादिशब्दानां भगवति प्रवृत्तिप्रकारं निरुच्य दर्शयति— **पृथुत्वादित्यादिना** ॥ न विद्यतेऽन्यो राजा नियन्ता यस्यासावनन्यराजः । य आदित्ये पुरुषः सोऽहमस्मीत्यादिगार्हपत्यादेरादित्यादिनैक्यार्थत्वप्रतीतिं निवारयन् व्याचष्टे— **य इति** ॥ यो हरिः परः स्थितः । अहेयत्वात्प्रत्यक्त्वाच्चाहं नामेति योज्यम् । तथा च सोऽहमस्मीत्यस्य द्विकर्तृकत्वात् गार्हपत्याद्यन्तर्यामी भगवान् स्वस्यादित्याद्यन्तर्यामिणैक्य-

---

१. ज्ञापनार्थः पाठान्तरम् ।

माह। गार्हपत्यादिः स्वान्तर्यामिण आदित्याद्यन्तर्यामिणैक्यमाहेत्यर्थ इत्यर्थः । गार्हपत्यादिजीवः स्वस्यादित्यादिजीवेनैक्यमाहेत्यर्थः किं न स्यादित्यतो भेदव्यपदेशं बाधकमाह– **जीवेति** ॥[१] बाधकं भेदव्यपदेशमेव विशदमाह– **पृथिवीति** ॥ जीवैक्यार्थत्वे य एष आदित्यः सोऽहमस्मीति स्यात्। अतो गार्हपत्यादेर्नादित्यादिनैक्यमत्रोच्यत इति भावः । सोऽहमस्मीत्यनेनैव गार्हपत्याद्यन्तर्यामिणः सूर्याद्यन्तर्यामिणैक्यसिद्धेः पुनः स एवाहमस्मीति व्यर्थमित्यतः प्रयोजनमाह– **स एवेति** ॥ तर्ह्यनेनैव निर्विशेषाभेदसिद्धेः सोऽहमस्मीति पूर्वं व्यर्थमित्यतस्तस्यापि प्रयोजनमाह– **पूर्वमिति** ॥

ननु पृथिव्यग्निरन्नमादित्य इत्यादेरप्यात्मविद्यात्वात् सोऽहमस्मीत्यस्याप्यन्तर्यामिणोरैक्यपरत्वेनात्मविद्यात्वेऽस्मद्विद्याचात्मविद्याचोक्तेत्युपर्युक्तिरयुक्तेत्यतः परिहारं वक्तुमुपयुक्तमाह– **अहमिति** ॥ **तत्सम्बन्धात्** भगवद्दत्ताल्पशब्दप्रवृत्तिनिमित्तसम्बन्धात् । अस्त्वहमस्म्यादिशब्दा वेदगता हरौ वर्तन्त इति । तथाऽपि प्रकृते किमायातमित्यतो तस्थबाह्यस्थविषयत्वेन तथोक्तिरित्याह– **अस्मादिति** ॥ नास्यापरपुरुषाः क्षीयन्त इति फलाभिधायकं वाक्यमनूद्य व्याचष्टे– **नास्येति** ॥ **पापकृत्यां** पापकर्म । सर्वेषामपि लोकित्त्वाल्लोकीभवतीत्यस्य फलत्वं कथमित्यतस्तद्घटयंस्तदर्थमाह– **लोकीति** ॥[२] **इति एकादश–द्वादश–त्रयोदशखण्डाः** ॥

---

१. जीवैक्यपक्षे गार्हपत्यादिजीवानां आदित्यादिजीवानां चैक्यपक्षे । यद्युक्तरीत्या जीवैक्यमत्र विवक्षितं स्यात् तर्हि "य एष आदित्यः पुरुषः" इत्यादिप्रथमानिर्देशः स्यात् । नत्वादित्य इत्यादिसप्तमीनिर्देशः । तेनादित्यादिस्थपुरुषैक्यलाभेऽपि नादित्याद्यैक्यं लभ्यते । आदित्यादिशब्दानां च तत्तन्मण्डलपरत्वाङ्गीकारे वृथा मुख्यार्थत्यागः इति भावः ।

२. मुख्यासम्भव एवामुख्याश्रयणमिति भावः ।

## अथ चतुर्दशः खण्डः

### उपकोसलमुखे ब्रह्मवर्चः

उप.– ते होचुरुपकोसलैषा सोम्य तेऽस्मद्विद्यात्मविद्या चाचार्यस्तु ते गतिं वक्तेत्याजगाम हास्याचार्यस्तमाचार्योऽभ्युवादोपकोसला ३ इति
॥ १ ॥

भगव इति ह प्रतिशुश्राव ब्रह्मविद इव सोम्य ते मुखं भाति को नु त्वानुशशासेति को नु माऽनुशिष्याद्भो इतीहापेव निह्नुत इमे नूनमी-दृशा अन्यादृशा इतीहाग्नीनभ्यूदे किं नु सोम्य किल तेऽवोचन्निति
॥ २ ॥

### चक्षुरन्तःस्थभगवदुपासनम्

उप.– इदमिति ह प्रतिजज्ञे लोकान् वाव किल सोम्य तेऽवोचन्नहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवं विदि पापं कर्म न श्लिष्यत इति ब्रवीतु मे भगवानिति तस्मै होवाच
॥ ३ ॥ १४ ॥

भा.– इह च अव च इहावे । इहेति मनुष्यलोकस्था उच्यन्ते अवेति पातालस्थाः । मानुषासुरौ भगवन्तं निह्नुत एव न वक्तुं समर्थौ । अतो देवा एव मामनुशासुरित्यर्थः । ईदृशा इति वर्णतो ज्वालावर्णा इति । अन्यादृशाश्च करशिरश्चरणादिमन्तः । चन्द्रादिसर्वनामवत्त्वात् । 'यो देवानां नामधा एक एव' इति श्रुतेर्विष्णोरेव सर्वनामानि ॥ १४ ॥

भाष्यविवृतिः– अग्निभिः पृथक् पृथक् उपदिश्य सम्भूयोक्तं स्व-निरूपितं विद्यास्वरूपाद्याह– ते होचुरित्यादिना ॥ गम्यते प्राप्यते इति गतिर्भगवत्स्वरूपं गच्छत्यस्मिन्निति गतिर्मार्गस्वरूपं च । कोनु त्वाऽनु-

शशासेति प्रश्ने शासकभावेऽपि कोनु माऽनुशिष्यादिति मृषोक्तिः कथमरे इत्यतः स्वोक्त्यभिप्रायं विवृण्वन् स्वोपदेष्टृन् व्यावर्त्यपूर्वकमाह–इहावेवे-त्यादिना ॥ इमे मदुपदेष्टारः । कानुपदेष्टृनाहेति जिज्ञासायां वेदपुरुष-स्तदुक्तान् स्वयमाह– **अग्नीनिति** ॥ इदं पृथिव्यग्निरन्नमित्यादि । **लोकान्** लोकनामकभगवद्रूपाणि । आदावेव वक्ष्यमाणब्रह्मविद्यायां रुचिजननाय पापासङ्गतत्वसाधनत्व लक्षणमहिमानमाह– **यथा पुष्करेत्यादिना** ।

इहावेव निह्नुत इत्यस्यार्थाप्रतीतेर्विगृह्य पदार्थपूर्वकं वाक्यार्थमह इह-**चेत्यादिना** ॥[1] तथाऽपि त्वदनुशासकाः क इत्यत इमे ईदृशा इत्युत्तरत्वेन प्राप्तवाक्यतात्पर्यमाह– **अत इति** ॥ ईदृशा अन्यादृशा इति पदद्वयस्य विरोधप्रतीतिं निवारयन् अनूद्यार्थमाह– **ईदृशा इति** ॥ पृथुत्वादित्यादिना पृथिव्यग्न्यादिशब्दाभिधेयो भगवानित्युक्तम् । तद्युक्तं रूढेर्योगस्य दुर्बल-त्वादित्यत आह– **चन्द्रेति** ॥ मैवं रूढ्याचेत्यादि योज्यम् । रूढ्याऽपि चन्द्रादिसर्वदेवनामवत्वं भगवतः कुतः सिद्धमित्यतस्तत्र श्रुतिं पठति– **य इति** ॥ **इति चतुर्दशः खण्डः** ॥

## अथ पञ्चदशः खण्डः

## चक्षुरन्तःस्थभगवद्विद्या

**उप.– य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृत-मभयमेतद्ब्रह्मैतस्मिन्न किञ्चन श्लिष्यति तद्यदस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति ॥ १ ॥**

---

१. "कोऽनु माऽनुशिष्याद् भो इतीहावेव निह्नुतः" इति वाक्यस्य को नु माऽनुशिष्यात् त्वयि प्रोषित इत्यपनिह्नुत इवेति व्याख्यानमसत् । गुरुं प्रति सोल्लुण्ठवचनायोगातत् । शाखान्तरे इहापेति पाठः । तस्याप्ययमेवार्थः ।

## चक्षुरन्तःस्थभगवन्नामानि

एतꣳ संयद्वाम इत्याचक्षत एतꣳ हि सर्वाणि वामान्यभिसंयन्ति सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेद ॥ २ ॥

एष उ एव वामनिरेष हि सर्वाणि वामानि नयति सर्वाणि वामानि नयति य एवं वेद ॥ ३ ॥

एष उ एव भामनिरेष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेद ॥ ४ ॥

## अर्चिरादिमार्गः

अथ यदु चैवास्मिंच्छव्यं कुर्वन्ति यदु च नार्चिषमेवाभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासाꣳस्तान् मासेभ्यः संवत्सरꣳ संवत्सरादादित्यमादित्यात् चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एनान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन खलु प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते नावर्तन्ते ॥ ५ ॥ १५ ॥

भा.– असङ्गभगवत्स्थानत्वाच्चक्षुषोऽसङ्गत्वमुच्यते ।
यत्स्थानत्वादिदं चक्षुरसङ्गं सर्ववस्तुषु ।
तस्मै नमो भगवते वामनाय परात्मने ॥ इति च महाकौर्मे ।

इमं मानवमावर्तं नावर्तन्ते । मानवा यत्रावर्तन्ते स मानवावर्तः । तं मानवावर्तं प्रति नावर्तन्ते ।

चक्षुस्थं वामनं वेद स पुनर्नैव जायते ।
मुक्तो दुस्तरसंसाराद्वामनं प्राप्नुतेऽचिरात् ॥ इति च ॥ १५ ॥

**भाष्यविवृतिः**– प्रशंसितां तस्मादुपदिष्टां विद्यामेव निरूपयति– **य एष इत्यादिना** ॥ दृश्यते दिव्यदृष्ट्या आदानादिकर्तृत्वेनात्मनामा । तस्य गुणान्तराण्यप्याह– **एतदिति** ॥ **ब्रह्म** पूर्णम् । चक्षुषि भगवत्सद्भावे ज्ञापकापेक्षायामाह– **तस्मादिति** ॥ वर्त्मनी पर्यन्ते । तस्य महिमानमेव नामान्तरनिर्वचनेनाह– **एतमित्यादिना** ॥ चाक्षुषपुरुषवेत्तुर्महिमानं प्रकाशयंस्तद्गम्यमार्गविद्यां निरूपयति– **अथ यदुचेत्यादिना** ॥ **यदुच** यद्यपि । **अस्मिन्** ज्ञानिनि मृते । **शव्यं** शवसम्बन्धिदहनादि । मृतो ज्ञानी अर्चिरादिनां मध्ये यान् संविशत्येव । यान् षण्मासानादित्य उदङ्ङेति तानाप्नोति । विद्युतं विद्युन्नामकवायुपत्नीलोकं तत्पुरस्तस्या भर्ता मानवो वायुस्तमेति । अवधारयति– **नावर्तन्त इति** ॥

तद्यद्यस्मिन्नित्यस्य प्रकृतासङ्गतत्वप्रतीतिं निवारयन् अभिप्रेतार्थमाह **असङ्गेति** ॥ यस्मादेवं तमर्थं प्रमाणोक्त्या द्रढयति– **यदिति** ॥ एतेन मार्गेण प्रतिपद्यमाना इत्यादिमार्गप्रशंसावाक्ये इमं मानवमावर्तन्त इत्येतद-प्रतीतेरनूद्य व्याचष्टे– **इममिति** ॥[१] अनेन मानवमावर्तत इत्यलुक्समास इति सूचितं भवति । चक्षुस्थवामनवेत्ता मानवावर्तं नावर्तन्त इत्युक्तं विशदयंस्तर्हि किमाप्नोतीत्यपेक्षायामाह– **चक्षुस्थमिति** ॥ **इति पञ्चदशः खण्डः** ॥

## अथ षोडशः खण्डः

## यज्ञनामकवायुदेवस्य पादपूजा

**उप.– एष ह वै यज्ञो योऽयं पवत एष यन्निदᳫं सर्वं पुनाति यदेष यन्निदᳫं सर्वं पुनाति तस्मादेष एव यज्ञस्तस्य मनश्च वाक्च वर्तनी** ॥ १ ॥

---

१. इमं मानवमावर्तं नावर्तन्ते इत्यस्य इमं मानवं मनुसंबन्धिनमावर्तं संसारं नावर्तन्त इत्यर्थ इत्यसत् । मनुसंबन्धिसंसाराप्राप्तावप्यन्यसंसारप्रसक्तेः ।

तयोरन्यतरां मनसा सꣳस्करोति ब्रह्मा वाचा होताऽध्वर्युरुद्गाताऽन्यतराꣳस यत्रोपाकृते प्रातरनुवाके पुरा परिधानीयाया ब्रह्मा व्यपवदति ॥ २ ॥

अन्यतरामेव वर्तनीꣳ संस्कुर्वन्ति हीयतेऽन्यतरा स यथैकपाद् व्रजन्रथो वै केन चक्रेण वर्तमानो रिष्यत्येवमस्य यज्ञो रिष्यति यज्ञꣳ रिष्यन्तं यजमानोऽनुरिष्यति स इष्ट्वा पापीयान् भवति ॥ ३ ॥

अथ यत्रोपाकृते प्रातरनुवाकेन पुरा परिधानीयाया ब्रह्मा व्यवदत्युभे एव वर्तनी सꣳस्कुर्वन्ति न हीयतेऽन्यतरा ॥ ४ ॥

स यथोभयपाद् व्रजन् रथो वोभाभ्यां चक्राभ्यां वर्तमानः प्रतितिष्ठत्येवमस्य यज्ञः प्रतितिष्ठति यज्ञं प्रतितिष्ठन्तं यजमानोऽनुप्रतितिष्ठति स इष्ट्वा श्रेयान् भवति ॥ ५ ॥ १६ ॥

भा.– यज्ञाभिमानी यज्ञाख्यो वायुर्यज्ञे प्रतिष्ठितः ।
ज्ञ शुद्धभाव इत्यस्माद्यन्नयं पावयेद्यतः ॥

अतो वायुर्यज्ञनामा तत्पादौ वाङ्मनःस्थितौ ।
दक्षिणोऽस्य मनःसंस्थो ब्रह्मर्त्विक्तस्य पूजकः ॥

होत्राद्या वाचि संस्थश्च वामपादस्य पूजकाः ।
तस्मात् प्रातरनूवाकपरिधान्योर्यदन्तरा ॥

ब्रह्मा चेदुत्सृजेद्वाचं यज्ञपाल्लोपकृद्भवेत् ।
वाङ्मनःपादयज्ञाख्यप्रतिमो वायुरीरितः ॥

ध्यायन् वायुं हरिं चैव ततो ब्रह्मा मुनिर्भवेत् ॥ १६ ॥

**भाष्यविवृतिः**–वायुर्वाव संवर्ग इत्यादिना वायुविषयसंवर्गविद्योक्ता । वायोरपरब्रह्मत्वात्तद्विषयामपरामपि यज्ञविद्यामाह– **एष हेत्यादिना** ॥ वायोः यज्ञशब्दप्रवृत्तिनिमित्तजिज्ञासायां वायुस्वभावं निरूपयति– एष **(ह) यन्निति** ॥ वायोरेवं स्वभाववत्त्वेऽपि यज्ञशब्दप्रवृत्तिनिमित्तं किमुक्तमित्यत आह– **यदेष इति** ॥ **यन्** गच्छन् । यज्ञनामकस्य वायोः पादावस्थितिस्थानमाह– **तस्येति** ॥ पादयोः पूजकानाह– **तयोरित्यादिना** ॥ **मनसा संस्करोति** मौनेन पूजयति । वाचा मन्त्रैर्होमेन गानेनान्यतरां वामं पदं स्वं संस्कुर्वन्तीत्यर्थः । ब्रह्मणः कदा मौनं तद्भङ्गे च किमित्यपेक्षायां तद्वदन् मौनं नियमयति । **स यत्रेत्यादिना** ॥ **स** ब्रह्मा **यत्र** यदि प्रातरनुवाके उपक्रान्ते परिधानीयायाः कर्मसमापिकान्त्यऋचो जपात् पूर्वं वा वदति । होत्राद्या अन्यतरामेव वर्तनीम् पादं संस्कुर्वन्ति तदा हीयते । अन्यतरान्यः पादः यज्ञपादहान्याच भवन्तमनर्थं दृष्टान्तपूर्वमाह– **यथेत्यादिना** । **वर्तमानः** तिष्ठन् । मौनभङ्गेतु किं भवतीत्यपेक्षायामाह– अथ **यत्रेत्यादिना** ॥

क्रियाकलापरूपत्वाद्यज्ञस्य वायुः कथं यज्ञ इत्यतस्तद्घटयन्नाह– **यज्ञेति** ॥ यदेष यन्निदं सर्वं पुनातीति पुनातृत्वं च यज्ञशब्दार्थतयोक्तं तत्कथं यज्ञशब्दार्थ इत्यतो धातुपाठेन तद्दर्शयति– **ज्ञेति** ॥[1] तस्य मनश्च वाक् च वर्तनी इत्येतद्वाङ्मनसयोरेव पादत्वप्रतीतिं निवारयन् व्याचष्टे– **तदिति** ॥ **तयोरन्यतरामिति** ॥ कं पादमित्यपेक्षायां तद्दर्शयंस्तद्वाक्यं व्याचष्टे– दक्षिण इति ॥ स यत्रेत्याद्यर्थाप्रतीतेर्व्याकुर्वन् हीयतेऽन्यतरेति यज्ञपादलोपप्रतीतिं निवारयति– **तस्मादिति** ॥ मौनेन पूजकत्वादिति यावत् । मौनभङ्गेन यज्ञपादलोप एव किं न स्यात् । न स्यात् । यज्ञस्य वायुत्वादित्याह– **वागिति** ॥ **वाङ्मनस्थपादवान्** यज्ञाख्यप्रतिमावान् । वाङ्मनःपाद-

१. धातोर्ज्ञशब्दः पावनार्थोऽवगम्यते यत इत्यर्थः ।

यज्ञाख्यप्रतिमावान् । स यत्रोपाकृत इत्यादेस्तात्पर्यमाह– ध्यायन्निति ॥[1]
ततः मौनतद्भङ्गयोर्लाभहानिभावात् ॥ इति षोडशः खण्डः ॥

## अथ सप्तदशः खण्डः

### व्याहृतित्रयस्य महिमा

उप.– प्रजापतिर्लोकानभ्यतपत् तेषां तप्यमानानाꣳ रसान् प्रावृहदग्निं पृथिव्या वायुमन्तरिक्षादादित्यं दिवः ॥ १ ॥

स एतास्तिस्रो देवता अभ्यतपत् तासां तप्यमानानाꣳ रसान् प्रावृहदग्नेर्ऋचो वायोर्यजूꣳषि सामान्यादित्यात् ॥ २ ॥

स एतां त्रयीं विद्यामभ्यतपत् तस्यास्तप्यमानाया रसान् प्रावृहद्भूरित्यृग्भ्यो भुव इति यजुर्भ्यः स्वरिति सामभ्यः ॥ ३ ॥

### ऋत्विजां कर्मभङ्गे व्याहृतिहोमः प्रायश्चित्तम्

तद्यद्यृक्तो रिष्येद् भूः स्वाहेति गार्हपत्ये जुहुयाद् ऋचामेव तद्रसेनर्चां वीर्येणर्चां यज्ञस्य विरिष्टिꣳ सन्दधाति ॥ ४ ॥

अथ यदि यजुष्टो रिष्येद् भुवः स्वाहेति दक्षिणाग्नौ जुहुयाद् यजुषामेव तद्रसेन यजुषां वीर्येण यजुषां यज्ञस्य विरिष्टिꣳ सन्दधाति ॥ ५ ॥

अथ यदि सामतो रिष्येत् स्वः स्वाहेत्याहवनीये जुहुयात् साम्नामेव तद्रसेन साम्नां वीर्येण साम्नां यज्ञस्य विरिष्टिꣳ सन्दधाति ॥ ६ ॥

तद्यथा लवणेन सुवर्णꣳ सन्दध्यात् सुवर्णेन रजतꣳ रजतेन त्रपु त्रपुणा सीसꣳ सीसेन लोहं लोहेन दारु दारु चर्मणा ॥ ७ ॥

१. ध्यायन्नेव हरिं चेत्यनेनास्या विद्यायाः शास्त्रदृष्ट्या भगवत्परत्वं उक्तं भवति ।

एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण यज्ञस्य विरिष्टिँ सन्दधाति भेषजकृतो ह वा एष यज्ञो यत्रैवंविद् ब्रह्मा भवति ॥ ८ ॥

एष ह वा उदक्प्रवणो यज्ञो यत्रैवंविद् ब्रह्मा भवत्येवंविदँ ह वा एषा ब्रह्माणमनुगाथा यतो यत आवर्तते तत्तद्गच्छति ॥

मानवो ब्रह्मैवैकर्त्विक् कुरूनश्वाभिरक्षत्येवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वाँश्चर्त्विजोऽभिरक्षति तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदं नानेवंविदम् ॥ १० ॥

॥ इति श्रीमच्छान्दोग्योपनिषदि चतुर्थोऽध्यायः ॥

भा.– अग्निर्नासिक्यवायुश्च सूर्यो लोकरसाह्वयः ।
अग्ने रसस्तु ऋग्वेदमानी ब्रह्मा प्रकीर्तितः ॥

नासिक्यवायोस्तु रसो यजुर्वेदात्मको हरः ।
सामवेदाभिमानी तु वायुः सूर्यरसः स्मृतः ॥

वराहसिंहकपिलास्तेषां भूरादिनामकाः ।
व्याहृतीभिस्ततो जुह्वन् ब्रह्मैवंविद्भिरिष्टितः ।
सर्वान् स ऋत्विजो रक्षेद् ब्रह्मैवंवित् ततो भवेत् ॥ इति च ।

उदक्प्रवण ऊर्ध्वप्रवणः ऊर्ध्वलोकानुसारी । यज्ञस्य दुरिष्ट्या यतो यतः स्थानादावर्तते तत्तत्स्थानमेवंविदा ब्रह्मणा गच्छति । तद्ब्रह्मैवैकर्त्विक् । कुरून् कर्तॄन् यजमानादीनभिरक्षति । अश्वा आशुज्ञानी । वा गतिगन्धनयोरिति धातोः । गतिशब्दश्चावगतौ भवति । 'दीर्घबिन्दुविसर्गादीनां लोपो वा' इति सूत्रादाशुर्वैवाश्वा ॥ १७ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमच्छन्दोग्योपनिषद्भाष्ये चतुर्थोऽध्यायः ॥

**भाष्यविवृतिः**– प्रमादात् ब्रह्मादिऋत्विजां मौनादिनियमभङ्गे प्रसक्त-यज्ञपादलोपसन्धायकव्याहृतिहोमं वक्ष्यन् कथं व्याहृतिहोमस्य प्रसक्तयज्ञ-पादसन्धायकत्वमित्यतः क्रमेण व्याहृतिमहिमाभिधानपूर्वकं ताभिर्होम-प्रकारमाह– **प्रजापतिरित्यादिना** । **अभ्यतपत्** विचारयामास । **तप्य-मानानां** विचार्यमाणानाम् । **प्रावृहत्** उद्बबर्ह ।[१] यत् यदि रक्तो रिष्येत् । ऋग्जपाङ्गमौनादिहान्या यज्ञो वैकल्यं प्राप्नुयात्तर्हि भूः स्वाहेत्युक्त्वा गार्हपत्ये जुहुयात् । **ऋचां रसेन** ऋचां वीर्येण । तद्भूरित्यनेन होमे कृते ऋचां यज्ञस्य **विरिष्टिं सन्दधात्येव** । एवमुत्तरवाक्ययोरपि योजनाप्रकारो द्रष्टव्यः ।

उक्तमेव विरिष्टिसन्धानं दृष्टान्ताभिधानपूर्वकमनुभवारूढं करोति– **तद्यथालवणेनेत्यादिना** ॥ **वीर्येण** भूरादिना । एवं साधितो यज्ञः सम्यक् समाप्तः यज्ञवत्फलं दद्यात् किं नेति भावेनाह– **भेषजेति** ॥ **एवंवित्** यज्ञपादभङ्गपरिहारज्ञानी । भेषजकृतश्चेत् फलं न दद्यादेव किमित्यपेक्षायां दद्यादित्याह– **एष हवेति** ॥ मौनादिनियमभङ्गात् भग्नमपि यज्ञं साधित्वा यजमानादेः स्वर्गादिप्रदं करोति ब्रह्मेत्यत्र गाथा चास्तीत्याह– **एवंविदं** भग्नयज्ञसन्धानविदमिति । गाथामेव पठति– **यतोयत इति** ॥ गाथां वेदपुरुषो व्याचष्टे– **एवंविदित्यादिना** ॥ **तस्माद्** भग्नयज्ञसन्धायकत्वात् ।

ऋगादीनामेवाग्न्यादिभ्यो रसत्वप्रतीतिं निवारयन् प्रजापतिर्हेत्यादि व्याचष्टे– **अग्निरित्यादिना** ॥[२] तेषां भूरादिनामका वराहादयो रसा इति योज्यम् । तद्यद्रक्त इत्यादि पूर्वशेषं तात्पर्यार्थोक्त्या व्याचष्टे– **व्याहृतीभि-रित्यादिना** ॥ तस्माद्व्याहृतीनां सर्वसां रसानां भूतभगवन्मूर्त्यभिधायक-त्वात् ॥ एवं पूर्वशेषतात्पर्यार्थमुक्त्वा ज्ञायमानपदार्थानि पदान्यनूद्य

---

१. निष्कृष्य ज्ञातवानिति यावत् ।

२. प्रधानवायुग्रहणे वायोर्यजूंषि इत्युक्तमनुपपन्नमिति भावः ।

व्याचष्टे– **उदक् प्रवण इत्यादिना** ॥ यज्ञकरणेन प्राप्तुं प्रसक्ताद्यतो यतः स्थानात् दुरिष्ट्या निवर्तन्ते । तत्तत्स्थानं मानवो यजमानो ब्रह्मणा गच्छति । आशुज्ञानी झडिति भग्नयज्ञानुसन्धानज्ञानवान् । धातोर्गत्यर्थत्वेऽपि कथं ज्ञानमागतमित्यत आह– **गतिशब्दश्चेति** ॥ आशुज्ञानार्थत्वे आशुवेति स्यात् । नत्वश्वेति । न भवति च दीर्घोकारयोर्लोप इत्यतोऽनुशासनेन घटयते **दीर्घेति** ॥ आदिग्रहणेनोकारो गृह्यते ।[१]

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितच्छन्दोगोपनिषद्भाष्यटीकायां जयतीर्थपूज्यचरणशिष्यव्यासतीर्थविरचितायां चतुर्थोऽध्यायः ॥**

१. आदिपदेन स्वरादीनां वा ग्रहणम् ।

# अथ पञ्चमाऽध्यायः

## अथ प्रथमः खण्डः

## इन्द्रियाभिमानिनां मुख्यप्राणाधीनत्वनिरूपणम्

उप.– यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च ॥ १ ॥

यो ह वै वसिष्ठं वेद वसिष्ठो ह स्वानां भवति वाग्वाव वसिष्ठः ॥ २ ॥

यो ह वै प्रतिष्ठां वेद प्रति ह तिष्ठत्यस्मिꣳश्च लोकेऽमुष्मिꣳश्च चक्षुर्वाव प्रतिष्ठा ॥ ३ ॥

यो ह वै सम्पदं वेद सर्वꣳ हास्मै कामाः सम्पद्यन्ते दैवाश्च मानुषाश्च श्रोत्रं वाव सम्पत् ॥ ४ ॥

यो ह वा आयतनं वेदायतनꣳ ह स्वानां भवति मनो ह वा आयतनम् ॥ ५ ॥

अथ ह प्राणा अहꣳ श्रेयसि व्यूदिरेऽहꣳ श्रेयानस्म्यहꣳ श्रेयानस्मीति ॥ ६ ॥

ते ह प्रजापतिं पितरमेत्योचुर्भगवन् को नः श्रेष्ठ इति तान् होवाच यस्मिन् व उत्क्रान्त इदꣳ शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठ इति ॥ ७ ॥

सा च वागुच्चक्राम सा संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा अकला अवदन्तो प्राणन्तः प्राणेन पश्यन्तः

चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह वाक्
॥ ८ ॥

चक्षुर्होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा अन्धा अपश्यन्तः प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह चक्षुः ॥ ९ ॥

श्रोत्रꣳ होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा बधिराः अशृण्वन्तः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा ध्यायन्तो मनसैवमिति प्रविवेश ह श्रोत्रम् ॥ १० ॥

मनो होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा बाला अमनसः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति प्रविवेश ह मनः ॥ ११ ॥

अथ ह प्राणः उच्चिक्रमिषन् स यथा सुहयः पड्वीशशङ्कून् सङ्खिदेदेवमितरान् प्राणान् समखिदत् तꣳ ह अभिसमेत्योचुर्भगवन्नेधि त्वं नः श्रेष्ठोऽसि मोत्क्रमीरिति ॥ १२ ॥

अथ हैनं वागुवाच यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसीत्यथ हैनं चक्षुरुवाच यदहं प्रतिष्ठाऽस्मि त्वं तत्प्रतिष्ठोऽसीति ॥ १३ ॥

अथ हैनꣳ श्रोत्रमुवाच यदहꣳ संपदस्मि त्वं तत्सम्पदसीत्यथ हैनं मन उवाच यदहमायतनमस्मि त्वं तदायतनमसीति ॥ १४ ॥

न वै वाचो न चक्षूꣳपि न श्रोत्राणि न मनांसीत्याचक्षते प्राणा इत्येवाचक्षते प्राणो ह्येवैतानि सर्वाणि भवति ॥ १५ ॥ १ ॥

भा.– यः श्रेष्ठं ज्येष्ठमखिलदेवानां[१] वायुमञ्जसा ।
वेद स स्वसमानानां ज्येष्ठः श्रेष्ठो विमुक्तिगः ॥

समीपे वसतां श्रेष्ठो वसिष्ठस्यैव वेदनात् ।
एकस्थाने स्थितिस्तु स्यात् प्रतिष्ठाङ्गस्य चेच्छतः ॥

सम्पद्धेतुस्सम्पदः स्युर्गृहं चायतनं विदः ।
ज्येष्ठः श्रेष्ठो वसिष्ठश्च सम्पदायतनं तथा ॥

वायुरेव महांस्तस्य प्रसादादग्निरेव तु ।
उपचारतो वसिष्ठः स्यात् प्रतिष्ठैवं रविस्ततः ॥
सम्पदिन्द्रस्तथैवोक्तो रुद्र आयतनं तथा ॥ इति प्रभावे ॥

सर्वेन्द्रियाणां व्यापारान् प्राण एव करोत्ययम् ।
इन्द्रियस्थः पृथक्चासौ शक्तोऽपि स्वयमेव तु ॥

## इन्द्रियनियामकतया मुख्यप्राणस्यावश्यकता

षण्मासात् पूर्वबालानां केवलप्राणतो भवेत् ।
व्यापार्यं मनसा सर्वमतः पश्चादसंस्मृतिः ॥

तुरीयायामवस्थायां प्राणादेव विबोधनम् ।
तथापि संस्मृतिस्तत्र प्राणवश्यतया भवेत् ॥

प्राणस्य वश्यतानाम तद्भक्त्या स्यात् तत्प्रसादतः ।
प्राणे वश्ये मनो वश्यमिन्द्रियाणि च सर्वशः ॥ इति च ।

भाष्यविवृतिः– संवर्गविद्यायामग्र्यादिसर्वभक्षकतया यज्ञविद्यायां च

१. ''श्रेष्टज्येष्टमखिलदेवानां'' हृपाठः ।

सर्वशुद्धिकर्तृत्वेन वायुः प्रकृतः । मुमुक्षोस्तत्प्रसादस्य सर्वथाऽपेक्षितत्वात्तद्विषयां प्राणविद्यामाह– **योहवा इत्यादिना** ।। वायोः सर्वसंहर्त्तृत्वनियामकत्वोपयुक्तं अतिबलिष्ठत्वं प्राणमीमांसयाऽऽह– **अथ ह प्राणा इत्यादिना** ।। **व्यूदिरे** विरुद्धमवदन् । अहं श्रेयसीत्येतद्विशदमाह[१]– अहं **श्रेयानस्मीति** ।। मे इदं शरीरम् । **अकलाः** मूकाः । **अमनसः** प्राणेतरमनोभिमान्यनधिष्ठितमनोवन्तः । प्राणाधिष्ठितमनोवन्त इति यावत् । **पड्वीशाः** हयबन्धकरज्जुः । **समखिदत्** उद्बबर्ह । **एधि** भव आस्व । न केवलं **त्वन्नः श्रेष्ठ** इत्येव । अस्माकं वसिष्टत्वादिकमपि त्वदधीनमित्याहुरित्याह– **अथ हैनमित्यादिना** ।। वागादीनां वसिष्टत्वादिकं प्राणाधीनमित्यत्र ज्ञापकमाह– **न वै वाच इत्यादिना** ।। प्राणा इत्युक्त्यभिप्रायं विशदयति– **प्राणा** इति ।। **इति प्रथमः खण्डः** ।।

प्राणस्य तद्वेदितुश्चोक्तं ज्येष्टत्वं श्रेष्ठत्वं च केभ्यः कदेति न ज्ञायते तद्व्याचष्टे– **य इति** ।।[२] भवेदिति योज्यम् । वसतां श्रेष्टो वसिष्ठः । तत्कथं घटते सर्वेषामपि वसिष्टत्वादित्यतस्तद्घटयन् व्याचष्टे– **समीप इति** ।।[३] सर्वेषामपीदमदोलोकस्थितिभावात् । प्रतिष्ठावेत्तुस्तत्फलं कथं घटत इत्यतस्तद्घटयन् व्याचष्टे– **एकेति** ।। **प्रतिष्ठाज्ञस्य** प्रतिष्ठां जानतः । यथेच्छायमिपीष्टस्थानेऽस्माकं स्थितिर्नि सम्भवति न तथा तस्येत्यर्थः । कामशब्दस्यानेकार्थत्वात् व्याचष्टे– **सपद्वेत्तुरिति** ।। आयतनविदो न केवलं स्वानामायतनत्वमाश्रयत्वं भवतीति किं त्विष्टं प्रासादादि गृहं च भवति । वागादिभिः स्ववसिष्ठत्वादिकं प्राणाय दत्तम् । तत्किं तर्हि प्राणस्यैव? वागादीनां नास्त्येव? उभयत्र समं वा वर्त्तत इत्याशङ्कां निवारयन्

१. विशदयति इति खपाठः ।

२. श्रेष्टं गुणतः, ज्येष्टं वयसा इत्यर्थः ।

३. दूरे वसतां श्रैष्ठ्यं न शोभावहमिति समीपे इत्युक्तम् ।

वागादयः के इत्यपेक्षायामाह– **ज्येष्ट इति** ॥ **उपचारतः** अमुख्यतः । ततः अमुख्यतः । न वै वाच इत्यादि तात्पर्यार्थोक्त्या व्याचष्टे– **सर्वेति** । अग्र्याद्यधिष्ठितेन्द्रियस्थः तर्ह्यग्र्याद्यनपेक्षस्तत्तदिन्द्रियव्यापारकरणे अशक्तः किमित्यपेक्षायामाह– **पृथक्केति** ॥ अग्र्यादिनिरपेक्षं तत्तदिन्द्रियव्यापार-शक्तत्वमेव तदनपेक्षात् तत्करणेन समर्थयते– **पण्मासात्** षष्ठान्मासा-दिति ॥ अतः षष्ठान्मासात्पूर्वं रुद्रादेर्मनोऽनधिष्ठितत्वादेव खलु तदानीमनु-भूतस्य पश्चादसंस्मृतिः ।[१] संसारे षण्मासबालस्य प्राणादेव सर्वेन्द्रिय-बोधस्ततःपरं प्राणाधिष्ठिताग्र्यादिभिरित्युक्तम् । मोक्षे कथं मुक्तस्येन्द्रियै-र्विषयावबोध इति जिज्ञासायामाह– **तुरीयायामिति** ॥ तुरीयावस्थायां प्राणादेव बोधश्चेत् संसारेऽनुभूतस्य तदानीं स्मृतिर्न स्यात् । संसारावस्थायां मनआदिप्रवर्तकानां तदानीमभावादित्यतस्तद्धटयन्नाह– **तथाऽपीति** ॥ प्राणस्य वश्यता प्राणवश्यता । तया प्राणवश्यतया । तथाऽपि मुक्तौ वागादीतरेन्द्रियाभिमानाभावेऽपि मुक्तस्य तत्र मोक्षे संसारानुभूतस्मृतिः प्राणवश्यतया भवेत् । ननु प्राणस्य भगवदेकवशत्वात् कथमन्यवशतेत्यस्त-त्स्वरूपं निरूपयति– **प्राणस्येति** ॥ तत्प्रसादतः तत्प्रसादः । एवं च चोद्यस्य किमुत्तरमुक्तमित्यत इदमुक्तमित्याह– **प्राण इति** ॥ प्राणस्य संसारे वागाद्यधिष्ठात्रध्यक्षत्वेन स्थितेः प्राणे वश्ये संसारानुभूतस्मृतिर्घटत इत्यर्थः ।

## अथ द्वितीयः खण्डः

## अस्माभिरद्यमानं सर्वं मुख्यप्राणस्यान्नसमर्पणमेव

**उप.– स होवाच किं मेऽन्नं भविष्यतीति यत्किञ्चिदिदं आश्वभ्य आ शकुनिभ्य इति होचुस्तद्वा एतदनस्यान्नमनो ह वै नाम प्रत्यक्षं न ह वा एवंविदि किञ्चनानन्नं भवतीति ॥ १ ॥**

---

१. अन्यथा पूर्वानुभूतपदार्थस्मरणापात इत्यर्थः ।

**भा.– अक्षेषु प्रति प्रति स्थितत्वादनः प्रत्यक्षम् ।**

## रुद्रस्यैव मुख्यतया सर्वभोक्तृत्ववर्णनम्

**प्राणविज्ञानयोग्यस्तु रुद्रो मुख्यतया स्मृतः ।**
**तस्मात् स सर्वभोक्ता स्यात् तदन्येषां स्वयोग्यतः ॥**

**इति च ।**

**भाष्यविवृतिः–** नालं त्वं नः श्रेष्ठोऽसीत्याद्युक्त्या मेऽन्नं कल्पतामित्याह– **स होवाचेति** ॥ श्वपक्षिपर्यन्तं प्राणिजातम् । यत्किञ्चिदिदं योग्यमन्नमत्ति तत्तेऽन्नं भविष्यतीति प्राणैर्दत्तमन्नं पूर्वमतदीयं किमित्यपेक्षायां तदीयमेवेत्याह– **तद्वा इति** ॥ कुतः पूर्वमपि तत्तदन्नमित्यतः सर्वेन्द्रियाधिष्ठितत्वादित्वादिति आह– **अनो हवै नाम प्रत्यक्षमिति** ॥ **वासो** वाससः **लम्बुको** लब्धा । इयं प्राणविद्या परंपरागता चेत्याह– **तद्धैतदिति** ॥ एतत्प्राणविद्यां गोश्रुतये उक्त्वा फलं चोवाच । उक्तफलमेव विशदमाह– **यद्यप्येन(त)दिति** ॥

प्राणोपास्त्यङ्गभूतमहत्वापादक होमद्रव्यमन्त्रहोम प्रकारादिपूर्वमाह– **अथ यदीत्यादिना** ॥ **सर्वौषधस्य** सर्वधान्यसमुदायस्य । आलोडितं पिष्टं **मन्थम्** । **दधिमधुनोः** दधिमधुभ्याम् । **उपमथ्य** संमिश्र्य **आज्यस्य** आज्यम् । **सम्पादनं** पातनम् । **प्रतिसृप्य** सम्प्राप्य । **जपति** जपेत् । **कंसं**[1] **चमसं** मन्थपात्रं **निर्णिज्य** प्रक्षाल्य । **अप्रसाहः** स्त्रीरहितः । **समृद्धं** सफलम् । स्त्रीदर्शने कर्मसमृद्धौ श्लोकं प्रमाणयन् पठति **तदेष इति** ॥ स्वप्नाख्यनिदर्शनम् ।

देवैः प्राणस्य दत्तमन्नं पूर्वं तदीयमेवेत्यस्योपपादकतयोक्तस्यानो ह वै नाम प्रत्यक्षमित्यस्य स्फुटं तथा प्रतीतेस्तत्स्फोरणायाप्रतीतेः प्रत्यक्ष-

१. कांस्यमित्यर्थः ।

शब्दार्थमाह– **अक्षेष्विति** ॥ पूर्वमप्यतृतयेत्यादौ योज्यम् ॥ नह वा एवं-विदीत्यादि यस्यकस्यापि प्राणस्य सर्वात्तृत्ववेत्तुः सर्वात्तृत्वं भवतीति प्रतीतिं निवारयन् व्याचष्टे– **प्राणेति** ॥ **इति द्वितीयः खण्डः** ॥

## भोजनपूर्वोत्तरयोरापोशनं प्राणवेदस्य वस्त्रसमर्पणम्

**उप.– स होवाच किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको ह वासो भवत्यनग्नो ह भवति ॥ २ ॥**

भा.– **सिद्धमेवान्नवस्त्राद्यं विष्णोः स्वातन्त्र्यतः सदा ।**
**स्वार्थं समर्पयेद्विष्णौ यथा प्राणे सुराः पुरा ॥**
**इति कर्मानुपूर्व्याम् ।**

**प्राणस्य वस्त्रबुद्ध्या तु भोजनोभयतः पिबन् ।**
**स्वर्गे मुक्तौ तथा दिव्यवस्त्रलाभी भवत्यलम् ॥**
**इति प्रभञ्जने ।**

**भाष्यविवृतिः**– तदीयमेव कथं तस्मै अर्पयितुं युक्तं इत्यतस्तद्-दृष्टान्तोक्त्या घटयते– **सिद्धमिति** । स्वातन्त्र्यतः कारणाद्विष्णोः सदा सिद्धमेवान्नवस्त्राद्यं **स्वार्थं** स्वप्रयोजनसिद्ध्यर्थं विष्णौ समर्पयेद्यथा लोकस्तथा सुराः पुरा प्राणस्य पूर्वमेव सिद्धमन्नं प्राणे समार्पयन्निति योजना । भोजनोभयतः पीयमनं वारि प्राणस्यैव वस्त्रमिति जानन् यादृशतादृशवस्त्र-वान् भवति। सर्वथा नग्नो जीवर्णवस्त्रो वा न भवतीति प्रतीतिं निवारयंस्तद्व्याचष्टे– **प्राणस्येति** ॥

## प्राणतत्वज्ञानस्य मोक्षसाधनत्वनिरूपणम्

उप.– तद्धैतत् सत्यकामो जावालो गोश्रुतये वैयाघ्रपद्यायोक्त्वोवाच

यद्यप्येतच्छुष्काय स्थाणवे ब्रूयाज्जायेरन्नेवास्मिञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ३ ॥

भा.– योग्यस्य प्राणविद्यायां[1] स्थाणोरपि हि तच्छ्रुतेः ।
पलाशाद्यं भवेदत्र परतो मुक्तिरेव च ॥
विष्णोर्ज्ञानमनुप्राप्य भवेन्नास्त्यत्र संशयः ॥
इति प्राणसंहितायाम् ।

भाष्यविवृतिः– यस्य कस्यापि स्थाणोः प्राणविद्याश्रवणे पलाशादिभावत्वप्रतीतिं तन्मात्रफलत्वप्रतीतिं च निवारयंस्तद्व्याचष्टे– योग्यस्येति ॥ तच्छ्रुतेस्तस्य विद्यायाः श्रवणात् ।[2]

## मन्थहोमेन महत्वप्राप्तिकथनम्

उप.– अथ यदि महज्जिगमिषेदमावास्यायां दीक्षित्वा पौर्णमास्याꣳ रात्रौ सर्वौषधस्य मन्थं दधिमधुनोरुपमथ्य ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् ॥ ४ ॥

वसिष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् प्रतिष्ठायै स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् सम्पदे स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमनयेदायतनाय स्वाहेत्यग्नावाज्यास्य हुत्वा मन्थे सम्पातमवनयेत् ॥ ५ ॥

भा.– ज्येष्ठश्रेष्ठादिकैर्हुत्वा प्राणायात्र परत्र च ।
ज्येष्ठः श्रेष्ठः समानेभ्यो भवेन्नात्र विचारणा ॥ इति च ।

---

१. 'प्राणविद्यायाः' हृपाठः । २. किमुयोग्यस्य जङ्गमस्येति कैमुत्यर्थोऽपि शब्दः ।

भाष्यविवृतिः– अथ यदि महज्जिगमिषेदित्यस्य सर्वेभ्यो महत्वेच्छा-प्रतीतिं च निवारयन् स मा ज्यैष्ठ्यमित्यादिना प्रार्थितं च ज्यैष्ठ्यादि सर्वेभ्य इति प्रतीतिं निवारयंस्तद्वाक्यजातं व्याचष्टे– **ज्येष्ठेति** ॥

**उप.– अथ प्रतिसृप्याञ्जलौ मन्थमाधाय जपत्यमो नामास्यमा हि ते सर्वमिदꣳ स हि ज्येष्ठः श्रेष्ठो राजाधिपतिः स मा ज्यैष्ठꣳ श्रैष्ठꣳ राज्यमाधिपत्यं गमयत्वहमेवेदꣳ सर्वमसानीति ॥ ६ ॥**

**अथ खल्वेतयर्चा पच्छ आचामति तत्सवितुर्वृणीमह इत्याचामति वयं देवस्य भोजनमित्याचामति श्रेष्ठꣳ सर्वधातममित्याचामति तुरं भगस्य धीमहीति सर्वं पिबति निर्णिज्य कꣳसं चमसं वा पश्चादग्नेः संविशति चर्मणि वा स्थण्डिले वा वाचंयमोऽप्रसाहः स यदि स्त्रियं पश्येत् समृद्धं कर्मेति विद्यात् ॥ ७ ॥**

**तदेष श्लोकः– यदा कर्मसु काम्येषु स्त्रियꣳ स्वप्नेऽभिपश्यति ।**
**समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने ॥**

**तस्मिन् स्वप्न निदर्शन इति ॥ ८ ॥**

भा.– सवितुर्जगत्प्रसवितुर्विष्णोः सकाशाद्वयं भोजनं रक्षां सर्व-भोगांश्च वृणीमहे । भगस्य समग्रैश्वर्यादिसर्वगुणस्वरूपस्य विष्णोः । पुरुषं तुरं वायुं श्रेष्ठं सर्वधातॄणां उत्तमं च धीमहि ।

नारायणीयं तं वायुं चिन्तयित्वोत्तमोत्तमम् ।
जगत्प्रसवितुर्विष्णोः सकाशाद्भोगमाप्नुमः ॥

इति च ॥ १–२ ॥

भाष्यविवृतिः– तत्सवितुरित्यृचं प्रकृतासङ्गतत्वप्रतीतिमप्रतीतिं च

निवारयन् व्याचष्टे– सवितुरित्यादिना ॥[1] विष्णोः सकाशाद्भोजनप्राप्त्यर्थं च भगस्थं पुरुषं धीमहि । उक्तमेवार्थं दृढयन् प्रमाणेनाह– नारायणीय-मिति ॥ इति द्वितीयः खण्डः ॥

## अथ खण्ड सप्तकम्

## देवयानपितृयाणनिरूपणम्

उप.– श्वेतकेतुर्ह आरुणेयः पञ्चालानाँ समितिमेयाय तँ ह प्रवाहणो जैवलिरुवाच कुमारानु त्वाऽशिषत् पितेत्यनु हि भगव इति ॥ १ ॥

वेत्थ यदितोऽधि प्रजाः प्रयन्तीति न भगव इति । वेत्थ यथा पुनरा-वर्तन्ता३ इति न भगव इति वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना ३ इति न भगव इति ॥ २ ॥

वेत्थ यथाऽसौ लोको न सम्पूर्यता३ इति न भगव इति वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति इति नैव भगव इति ॥ ३ ॥

अथ नु किमनुशिष्टोऽवोचथा यो हीमानि न विद्यात् कथँ सोऽनु-शिष्टो ब्रवीतेति स हाऽऽयस्तः पितुरर्धमेयाय तँ होवाचाननुशिष्य वाव किल मा भगवानब्रवीदनु त्वाऽशिषमिति ॥ ४ ॥

पञ्च मा राजन्यबन्धुः प्रश्नानप्राक्षीत् तेषां नैकञ्च नाशकं विवक्तुमिति स होवाच यथा मा त्वं तदैतानवदो यथाऽहमेषां नैकञ्च न वेद यद्यह-मिमानवेदिष्यं कथं ते नावक्ष्यमिति ॥ ५ ॥

---

१. ननु प्राणदेवताकं यागमुपक्रम्य कथं सावित्रमन्त्रविनियोगकथनमित्यतः प्राणमादित्यं चैकीकृत्येदं प्रवृत्तम् । ततश्च पूर्वोत्तरार्धयोः सामानाधिकरण्येव योजनेत्यन्ये । तदसदिति भावेन ऋगर्धं प्रमाणेन दृढयति ।

स ह गौतमो राज्ञोऽर्धमेयाय तस्मै ह प्राप्तायार्हाञ्चकार स ह प्रातः सभाग उदेयाय तꣳ होवाच मानुषस्य भगवान् गौतम वित्तस्य वरं वृणीथा इति स होवाच तवैव राजन् मानुषं वित्तं यामेव कुमारस्यान्ते वाचमभाषथास्तामेव मे ब्रूहीति ॥ ६ ॥

स ह कृच्छ्री बभूव तꣳ ह चिरं वसेत्याज्ञापयाञ्चकार तꣳ होवाच यथा मा त्वं गौतमावदो यथेयं न प्राक् त्वत्तः पुरा विद्या ब्राह्मणान् गच्छति तस्मादु सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूदिति तस्मै होवाच ॥ ७ ॥ ३ ॥

## पञ्चाग्निविद्या

असौ वाव लोको गौतमाग्निः तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिः चन्द्रमा अङ्गारा नक्षत्राणि विष्फुलिङ्गाः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति ॥ २ ॥ ४ ॥

पर्जन्यो वा गौतमाग्निः तस्य वायुरेव समिदभ्रं धूमो विद्युदर्चिरशनिरङ्गारा ह्रादुनयो विष्फुलिङ्गाः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवाः सोमꣳ राजानं जुह्वति तस्या आहुतेः वर्षः सम्भवति ॥ २ ॥ ५ ॥

पृथिवी वाव गौतमाग्निः तस्य संवत्सर एव समित् आकाशो धूमो रात्रिरर्चिर्दिशो अङ्गारा अवान्तरदिशो विष्फुलिङ्गाः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेः अन्नꣳ सम्भवति ॥ २ ॥ ६ ॥

निवारयन् व्याचष्टे– सवितुरित्यादिना ॥[1] विष्णोः सकाशाद्भोजनप्राप्त्यर्थं च भगस्थं पुरुषं धीमहि । उक्तमेवार्थं दृढयन् प्रमाणेनाह– नारायणीयमिति ॥ इति द्वितीयः खण्डः ॥

## अथ खण्ड सप्तकम्

## देवयानपितृयाणनिरूपणम्

उप.– श्वेतकेतुर्ह आरुणेयः पञ्चालानाꣳ समितिमेयाय तꣳ ह प्रवाहणो जैवलिरुवाच कुमारानु त्वाऽशिषत् पितेत्यनु हि भगव इति ॥ १ ॥

वेत्थ यदितोऽधि प्रजाः प्रयन्तीति न भगव इति । वेत्थ यथा पुनरावर्तन्ता३ इति न भगव इति वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना ३ इति न भगव इति ॥ २ ॥

वेत्थ यथाऽसौ लोको न सम्पूर्यता३ इति न भगव इति वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति इति नैव भगव इति ॥ ३ ॥

अथ नु किमनुशिष्टोऽवोचथा यो हीमानि न विद्यात् कथꣳ सोऽनुशिष्टो ब्रवीतेति स हाऽऽयस्तः पितुरर्धमेयाय तꣳ होवाचाननुशिष्य वाव किल मा भगवानब्रवीदनु त्वाऽशिषमिति ॥ ४ ॥

पञ्च मा राजन्यबन्धुः प्रश्नानप्राक्षीत् तेषां नैकञ्च नाशकं विवक्तुमिति स होवाच यथा मा त्वं तदैतानवदो यथाऽहमेषां नैकञ्च न वेद यद्यहमिमानवेदिष्यं कथं ते नावक्ष्यमिति ॥ ५ ॥

---

१. ननु प्राणदेवताकं यागमुपक्रम्य कथं सावित्रमन्त्रविनियोगकथनमित्यतः प्राणमादित्यं चैकीकृत्येदं प्रवृत्तम् । ततश्च पूर्वोत्तरार्धयोः सामानाधिकरण्येव योजनेत्यन्ये । तदसदिति भावेन ऋगर्थं प्रमाणेन दृढयति ।

स ह गौतमो राज्ञोऽर्धमेयाय तस्मै ह प्राप्तायार्हाञ्चकार स ह प्रातः सभाग उदेयाय त१ँ होवाच मानुषस्य भगवान् गौतम वित्तस्य वरं वृणीथा इति स होवाच तवैव राजन् मानुषं वित्तं यामेव कुमारस्यान्ते वाचमभाषथास्तामेव मे ब्रूहीति ॥ ६ ॥

स ह कृच्छ्री बभूव त१ँ ह चिरं वसेत्याज्ञापयाञ्चकार त१ँ होवाच यथा मा त्वं गौतमावदो यथेयं न प्राक् त्वत्तः पुरा विद्या ब्राह्मणान् गच्छति तस्माद् सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूदिति तस्मै होवाच ॥ ७ ॥ ३ ॥

## पञ्चाग्निविद्या

असौ वाव लोको गौतमाग्निः तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिः चन्द्रमा अङ्गारा नक्षत्राणि विष्फुलिङ्गाः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति ॥ २ ॥ ४ ॥

पर्जन्यो वा गौतमाग्निः तस्य वायुरेव समिदभ्रं धूमो विद्युदर्चिरशनिरङ्गारा ह्रादुनयो विष्फुलिङ्गाः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवाः सोम१ँ राजानं जुह्वति तस्या आहुतेः वर्षः सम्भवति ॥ २ ॥ ५ ॥

पृथिवी वाव गौतमाग्निः तस्य संवत्सर एव समित् आकाशो धूमो रात्रिरर्चिर्दिशो अङ्गारा अवान्तरदिशो विष्फुलिङ्गाः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेः अन्न१ँ सम्भवति ॥ २ ॥ ६ ॥

पुरुषो वाव गौतमाग्निः तस्य वागेव समित् प्राणो धूमो जिह्वाऽर्चि-श्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गाः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुतेः रेतः सम्भवति ॥ २ ॥ ७ ॥

योषा वाव गौतमाग्निः तस्या उपस्थ एव समित् । यदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गाः ॥१॥

तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेः गर्भः सम्भवति ॥ २ ॥ ८ ॥

इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति स उल्वावृतो गर्भो दश वा मासानन्तः शयित्वा यावद्वाथ जायते ॥ १ ॥

स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यत एवेतो यतः सम्भूतो भवति ॥ २ ॥ ९ ॥

## नारायणादिपञ्चभगवद्रूपाण्येव पञ्चाग्नयः

भा.– नारायणादयः पञ्च क्रमात् पञ्चाग्नयः स्मृताः ।
अदनादङ्गनेतृत्वा[१]न्नितरामचलत्वतः ॥

समेधनात् समिद्विष्णुर्धूत्काराद्धूम उच्यते ।
अरञ्चितत्वादर्चिश्च सोऽङ्गारोऽङ्गरतेरपि ॥

विविधं स्फुरणाच्चैव विस्फुलिङ्ग इतीरितः ।
पुनर्नारायणाद्यात्मा प्रत्येकं पञ्चरूपवान् ॥

१. 'अगनेतृत्वात्' पाठान्तरम् ।

आदित्यस्स तथाऽऽदानाद् रश्मिः स रतिरूपतः ।[1]
तमसाऽहननीयत्वादहश्चन्द्रः परं सुखम् ॥

अनन्यराजो नक्षत्रं वायुर्ज्ञानायुरूपतः ।
अभ्रमभ्भरणाद्विष्णुर्विद्युद्विद्योतनादपि ॥

अशनादशनिश्चैव निर्ह्रादाद् ह्रादुनिस्तथा ।
संवत्सरो वासनाच्च स आकाशः प्रकाशनात् ॥

रात्रिश्च रतिदानात् स दिशतीति दिशः स्मृतः ।
अवान्तरं दिशोद्यस्मादवान्तरदिगुच्यते ॥

वचनाद् वाक् तथा प्राणस्त्वननाच्चक्षुरुच्यते ।
दर्शनाच्छ्रवणाच्छ्रोत्रं जिह्वा वै होमतः स्मृतः ॥

उपस्थितेरुपस्थः स उपमन्त्रकृदेव सः ।
योनिर्युनक्ति यस्मात् स सर्वान्तःकृच्च नन्दनः ॥

असौ लोकः प्रकाशत्वात् प्राणस्थत्वाच्च केशवः ।
पर्जन्यो जनको यस्मात् पृथिवी प्रथितत्वतः ॥
पुरुषः पुरु यस्मात् स योषा जोष्यो यतोऽखिलैः ॥

इति सामसंहितायाम् ।

भाष्यविवृतिः– यो ह वै ज्येष्ठं चेत्यादिना स्वसामानाधिक्यापादक-विद्योक्ता । सर्वपापालेपपुण्यलोकापादकपञ्चाग्निविद्यां च सोपाद्धात-माख्यायिकयाऽष्टभिः पर्वभिराह । **अनुशिषत्** अन्वशिषत् । अशिक्षयत् । **अनुहि** अन्वशिषद्धि ॥ यदधिकृत्य **इतः** लोकात् प्रजाः **प्रयन्ति**

1. 'रश्मी रतिशरूपतः' पाठान्तरम् ।

पुरुषो वाव गौतमाग्निः तस्य वागेव समित् प्राणो धूमो जिह्वाऽर्चिश्चक्षुरङ्गाराः श्रोत्रं विष्फुलिङ्गाः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुतेः रेतः सम्भवति ॥ २ ॥ ७ ॥

योषा वाव गौतमाग्निः तस्या उपस्थ एव समित् । यदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विष्फुलिङ्गाः ॥१॥

तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेः गर्भः सम्भवति ॥ २ ॥ ८ ॥

इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति स उल्वावृतो गर्भो दश वा मासानन्तः शयित्वा यावद्वाथ जायते ॥ १ ॥

स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यत एवेतो यतः सम्भूतो भवति ॥ २ ॥ ९ ॥

### नारायणादिपञ्चभगवद्रूपाण्येव पञ्चाग्नयः

भा.– नारायणादयः पञ्च क्रमात् पञ्चाग्नयः स्मृताः ।
अदनादङ्गनेतृत्वा[१]न्नितरामचलत्वतः ॥

समेधनात् समिद्विष्णुर्धूत्काराद्धूम उच्यते ।
अरञ्चितत्वादर्चिश्च सोऽङ्गारोऽङ्गरतेरपि ॥

विविधं स्फुरणाच्चैव विष्फुलिङ्ग इतीरितः ।
पुनर्नारायणाद्यात्मा प्रत्येकं पञ्चरूपवान् ॥

१. 'अगनेतृत्वात्' पाठान्तरम् ।

आदित्यस्स तथाऽऽदानाद् रश्मिः स रतिरूपतः ।[१]
तमसाऽहननीयत्वादहश्चन्द्रः परं सुखम् ॥

अनन्यराजो नक्षत्रं वायुर्ज्ञानायुरूपतः ।
अभ्रमभ्भरणाद्विष्णुर्विद्युद्विद्योतनादपि ॥

अशनादशनिश्चैव निर्हादाद् ह्रादुनिस्तथा ।
संवत्सरो वासनाच्च स आकाशः प्रकाशनात् ॥

रात्रिश्च रतिदानात् स दिशतीति दिशः स्मृतः ।
अवान्तरं दिशोद्यस्मादवान्तरदिगुच्यते ॥

वचनाद् वाक् तथा प्राणस्त्वननाच्चक्षुरुच्यते ।
दर्शनाच्छ्रवणाच्छ्रोत्रं जिह्वा वै होमतः स्मृतः ॥

उपस्थितेरुपस्थः स उपमन्त्रकृदेव सः ।
योनिर्युनक्ति यस्मात् स सर्वान्तःकृच्च नन्दनः ॥

असौ लोकः प्रकाशत्वात् प्राणस्थत्वाच्च केशवः ।
पर्जन्यो जनको यस्मात् पृथिवी प्रथितत्वतः ॥
पुरुपः पुरु यस्मात् स योपा जोप्यो यतोऽखिलैः ॥

इति सामसंहितायाम् ।

भाष्यविवृतिः– यो ह वै ज्येष्टं चेत्यादिना स्वसामानाधिक्यापादक-विद्योक्ता । सर्वपापालेपपुण्यलोकापादकपञ्चाग्निविद्यां च सोपाद्घात-माख्यायिकयाऽष्टभिः पर्वभिराह । **अनुशिपत्** अन्वशिषत् । अशिक्षयत् । **अनुहि** अन्वशिषद्धि ॥ यदधिकृत्य **इतः** लोकात् प्रजाः **प्रयन्ति**

१. 'रश्मी रतिशारूपतः' पाठान्तरम् ।

गच्छन्ति ॥ **व्यावर्तना** मध्ये प्राप्यानि । **यथा** येन कारणेन । आहुतौ हुतायां **आपः** अबादिसर्वभूतावृताः जीवाः । **अथनु** एवमपि किमर्थमनुशिष्टोऽस्मीत्यवोचथाः । **आयस्तः** सस्वेदः ।[1] **अर्धं** स्थानम् । राजश्रेष्ठोऽपि राजन्यबन्धुः राजाधम इत्युक्तः कोपात् । **प्रश्नान्** प्रश्नार्हान् प्रमेयान् ॥ हे तात त्वं मा तान् । यथा यथावद्वक्तुमवदः । अहंतु एषामेकं च यथावन्न वेद । **पृष्टस्य** गोप्यत्वात्कृच्छ्रीबभूव । नासंवत्सरवासिने प्रब्रूयादिति शिक्षाभावाच्चिरंवसेति । हे गौतम त्वं यां विद्यां यथावद्वक्तुमवदः इयं तु विद्या त्वत् प्राक् ब्राह्मणान् यथावन्नगच्छति । पुरा नागच्छत् । तत्र हेतुमाह– **तस्मादिति** ॥ उवाच पञ्चाग्निविद्याम् ।

**श्रद्धां** श्रद्धापूर्वम् यज्ञादिकर्तारम् । **सोमोराजा सम्भवति** सोमं राजानमाप्नोति । **सोमं राजानं** सोमराजं प्राप्तम् । **वर्षः** वर्षान्तर्गतः । **रेतः** रेतोऽन्तर्गतः । दशमासा इति न नियम इत्याह**यावद्वा स्थातव्यं तावच्छयित्वेति** ॥ **दिष्टं** दिष्टसहितम् । यत इमं लोकमितो यतः सम्भूतस्त एवाग्रयस्तं दिष्टं प्रेतमितो हरन्तीति योजना ॥

असौ वाव लोको गौतमाग्निरित्यादिना स्वर्गादेरग्नित्वकल्पनोच्यत इति प्रतीतिमब्रह्मविद्यात्वप्रतीतिं निवारयति– **नारायणादय इति** ॥ लोकाद्यग्रयो नारायणादयश्चेत् कथं तेष्वग्निशब्दोपपत्तिरित्यतो योगेनेत्याह– **अदनादिति** ॥[2] स्वर्गादयस्तु होमाधिकरणत्वेनाग्निवदग्नय इति ज्ञेयम् । तस्य आदित्य एव समिदित्यादिनाऽऽदित्यादीनां समित्वादिकल्पनोक्तिप्रतीतिं निवारयन् नारायणादिषु समिदादिशब्दान्निर्वक्ति– **समेधनादिति** ॥ **विविधं** मत्स्यादिरूपेण **स्फुरणात्** प्रतीतेः । वक्ष्यमाणनिर्वचनेन नारायणादयः पञ्च पञ्चस्थानगतादित्यादिशब्देरिता इति च ग्राह्यमित्यर्थः ।

१. प्रवाहणेनायासितः निरुत्तरितः, अप्रतिष्ठित इति यावत् ।

२. अदनादत्तृत्वात् । अत्तेः कर्तरि निप्रत्ययो, दस्य गः ।

ननु नारायणादीनां पञ्चत्वादादित्यादिशब्दानां पञ्चविंशत्वात् कथं ते तच्छब्देरिता इत्यतस्तद्धटयन्नाह– **पुनरिति** ॥ नारायणादयः पञ्च प्रत्येकं पञ्चरूपवन्त इत्यर्थः । तत्रादिपञ्चके आदित्यादिशब्दान्निर्वक्ति– **आदित्य इत्यादिना** ॥ द्वितीयपञ्चके वाय्वादिशब्दान्निर्वक्ति **वायुरित्यादिना** ॥ **निह्लादात्** आनन्दात् । तृतीयपञ्चके संवत्सरादिशब्दान्निर्वक्ति **संवत्सर इत्यादिना** ॥ चतुर्थपञ्चके वागादिशब्दान्निर्वक्ति **वचनादिति** ॥ पञ्चमपञ्चके उपस्थादिशब्दान्निर्वक्ति– **उपस्थितेरित्यादिना** ॥ पञ्चस्थानगत-लोकपर्ज्यन्यपृथिवीपुरुषयोषाशब्दान्निर्वक्ति– **असावित्यादिना** ॥ इति खण्डसप्तकार्थः ॥ (३-९)

## अथ दशमः खण्डः

## ज्ञानिनां देवयानेन ब्रह्मप्राप्तिः

**उप.– तद्य इत्थं विदुर्ये चेमे अरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् यान् पड्डुदङ् एति मासाᳪ स्तान् ॥ १ ॥**

**मासेभ्यः संवत्सरᳪ संवत्सरादादित्यं आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एतान् ब्रह्म गमयति एष देवयानः पन्था इति ॥ २ ॥**

## काम्यकर्मिणां पितृयाणेन स्वर्गप्राप्तिः

**अथ य इमे ग्रम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति धूमात् रात्रिᳪ रात्रे परपक्षपक्षमपरपक्षाद्यान् पड् दक्षिणैति मासाᳪ स्तान्नैते संवत्सरमभिप्राप्नुवन्ति ॥ ३ ॥**

मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति ॥ ४ ॥

तस्मिन् यावत् सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशं आकाशाद्वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति ॥ ५ ॥

अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते । ततो वै खलु दुर्निष्प्रपतनं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति ॥ ६ ॥

तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽथ य इह कपूयचरणाः अभ्याशो ह एते कपूयां योनिमापद्येरंञ्छ्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा ॥ ७ ॥

अथैतयोः पथोर्नैकतरेण च न तानीमानि क्षुद्रमिश्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयꣳ स्थानं तेनासौ लोको न सम्पूर्यते तस्माज्जुगुप्सेत तदेषश्लोकः ॥ ८ ॥

स्तेनो हिरण्यस्य सुरां पिबꣳश्च गुरोस्तल्पमावसन् ब्रह्महा च ।

एते पतन्ति चत्वारः पञ्चमश्चाचरꣳस्तु तैरिति ॥ ९ ॥

अथ ह य एतानेवं पञ्चाग्नीन् वेद न स ह तैरप्याचरन् पाप्मना लिप्यते शुद्धः पूतः पुण्यश्लोको भवति य एवं वेद य एवं वेद ॥ १० ॥

भा.– अभ्रधूमादिभावस्तु जीवस्याभ्रादिसंस्थितिः ।
अभ्रादिमानिरूपं तु ज्ञानप्राप्यं[1] यतो भवेत् ॥ इति च ।

१. 'ज्ञानिप्राप्यं' पाठान्तरम् ।

परम् अस्य जन्यमिति पर्जन्यः ।

**पञ्च पञ्च स्वरूपेण सूर्यादौ संस्थितो हरिः ।**
**स्वर्गादौ चापि तन्नामा तद्योगान्नामिनः परे ॥**

इति च ॥ १० ॥

**भाष्यविवृतिः**– देवयानस्य पितृयानस्य च व्यावर्तना आह– **तद्य इत्थं विदुरित्यादिना ॥ श्रद्धातप इति** । श्रद्धापूर्वं तपआदि । यान् षण्मासानादित्य उदङ्ङेति तानेति । यान् षण्मासानादित्यो दक्षिणैति दक्षिणा एति तान्मासानेति मासेभ्यः संवत्सरादिति यावत् । **आकाशं** विनायकलोकं । **तत्** प्रसिद्धममृतमन्नं । **प्रवर्षति** वर्षगतो भवति । **ते** वर्षान्तर्गता इतीत्यादिकं । **ततः** व्रीह्यादिप्राप्त्यनन्तरं । **दुष्प्रयतनं** दुष्टं पतनम् । दुष्टं पतनमेव विशदमाह– **यो य इति ॥** यद्भूस्तन्मयः । रमणीयं चरणं येषां ते रमणीयचरणाः ।[१] कपूयं कष्टं चरणं येषां ते कपूयचरणाः ।[२] अथय इहेत्यादिनोक्तमेव विशदमाह– **अथैतयोरित्यादिना** । कतरेण न गच्छन्तीति शेषः । **क्षुद्राणि** केवलं दुःखरूपाणि । **मिश्राणि** सुखदुःखमिश्राणि च । जायस्व म्रियस्व । पुनः पुनर्जायन्ते । पुनर्म्रियन्ते । स्वर्गापवर्गापेक्षयैतत्तृतीयं स्थानम् । कपूयचरणाः के इति जिज्ञासायां श्लोकेन वदन्नाह– **तदेष इति ॥** स्वयं शुद्धः पावयत्यन्यानिति **पूतः** । स्वर्गादिरग्निः । अर्चिरादिर्व्यावर्तना । स्वर्गमधिप्रयन्ति । दिष्टक्षयात् पुनरावर्तन्ते । अत एवासौ लोको न संपूर्य इति परिहार उक्तो भवति ।

वायुर्भूत्वेत्यादौ वाय्वादित्वप्रतीतिं निवारयंस्तद्व्याचष्टे **अभ्रेति ॥** कुत एवं व्याख्येयं इत्यत आह– **अभ्रेति ॥** तद्योग्यज्ञानप्राप्यम् । पर्जन्यो जनको यस्मादित्यत्र स्फुटं निर्वचनेनार्थाप्रतीतेः निरुच्य दर्शयति–

---

२. साधुयज्ञादिमन्तः । ३. असाधुयज्ञादिमन्तः ।

परमिति ॥ अस्तीति ग्राह्यं । ननु स्वर्गाद्यादित्यादिशब्दानां स्वर्गादित्यादिषु रूढत्वात् रूढार्थहान्या मुख्ययौगिकार्थस्वीकारोऽन्याय्य इत्यतो भगवानेव रूढार्थोऽपीत्याह– पञ्चेति ॥ इति दशमः खण्डः ॥

## अथ एकादशः खण्डः

## वैश्वानरविद्याज्ञातारो दुर्लभाः

उप.– प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्वतराश्विस्ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमांसाञ्चक्रुः को न आत्मा किं तद्ब्रह्मेति ॥ १ ॥

ते ह सम्पादयाञ्चक्रुरुद्दालको वै भगवन्तोऽयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति तꣳ हाभ्याजग्मुः ॥ २ ॥

स ह सम्पादयाञ्चकार प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियास्तेभ्यो न सर्वमिव प्रतिपत्स्ये हन्ताहमन्यमभ्यनुशासानीति ॥ ३ ॥

तान् होवाचाश्वपतिर्वै भगवन्तोऽयं कैकेयः सम्प्रतीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति तꣳ हाभ्याजग्मुः ॥ ४ ॥

तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयाञ्चकार स ह प्रातः सञ्जिहान उवाच न मे स्तेनो जनपदे न कदर्यो न मद्यपो नानाहिताग्निर्नाविद्वान् न स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तोऽहमस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भगवन्त इति ॥ ५ ॥

ते होचुर्येन हैवार्थेन पुरुषश्चरेत् तꣳहैव वदेदात्मानमेवेमं वैश्वानरꣳ सम्प्रत्यध्येषि तमेव नो ब्रूहीति ॥ ६ ॥

**तान् होवाच प्रातर्वः प्रतिवक्तास्मीति ते ह समित्पाणयः पूर्वाह्ने प्रतिचक्रमिरे तान् हानुपनीयैवैतदुवाच ॥ ७ ॥ ११ ॥**

भा.– **प्रत्यब्दयज्ञकृत्सम्यङ्महाशालः प्रकीर्तितः ।**
**वेदवेदार्थवित् सम्यङ्महाश्रोत्रिय उच्यते ॥**

**भाष्यविवृतिः**– सर्वपापविधूननेन पुण्यलोकाप्तिकारणपञ्चाग्निविद्योक्ता । सर्वलोकगतसर्वजीवाद्यन्नात्तृत्वोपपादक वैश्वानरविद्यामाख्यायिकयाऽऽह– **अष्टभिः पर्वभिः** ॥ मन्योरपत्यः **औपमन्यवः** । पुलुषस्यापत्यं **पौलुषिः** । भल्लवाया अपत्यं **भाल्लवेयः** । शर्कराक्षस्यापत्यं **शार्कराक्ष्यः** । अश्वतराश्वस्यापत्यं– **आश्वतराश्विः** । **समेत्य** मिलित्वा । आत्मसु परस्परं विचारेणापि निर्णयमलभमानास्ते निर्णयार्थमुद्दालकं सम्पादयाञ्चक्रुः । उद्दालक इत्याद्यूचुश्च । **अध्येति** अधिकं जानाति तेभ्यो वक्तुमिति शेषः । **अनुशासानि** वदानि । केकयदेशस्याधिपतिः **कैकेयः** । न स्तेनाधि-भयाद्भवदागमनं मद्राष्ट्रे तेषामभावादित्युवाच **कदर्यः** यथाकालमाचारहीनः । सति विभवे अदाता वा । धनार्थिनश्चेद्दास्यामीत्याह– **यक्ष्यमाण इति** ॥ चरेद्वर्तते वदेत् । भवान् । **अनु** सम्यक् । **उपनीय** शिष्यत्वेन स्वीकृत्य ।[१]

महाशाला महाश्रौत्रिया इति पदयोरप्रतीतेरर्थावाह ॥ **प्रत्यब्देति** ॥ **इति एकादशः खण्डः ॥ ११ ॥**

## अथ द्वादशः खण्डः

## वैश्वानरस्य शिरो द्युनामकमिति निरूपणम्

**उप.– औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राज-**

१. अथवा अनुपनीय शिष्यतया उपगमनमकारयित्वैव एतद्वक्ष्यमाणमुवाच । ब्राह्मणानां क्षत्रियादुत्तमत्वादिति वा अर्थः ।

न्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् तव सुतं प्रसुतमासुतं कुले दृश्यते ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्धा त्वेष आत्मन इति होवाच मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्य इति ॥ २ ॥ १२ ॥

भा.– क्रीडात्मकत्वाद्व्याख्यं च[1] सुतेजाश्चातितेजसा ।
स्वर्गाधारं शिरो विष्णोः .................

**भाष्यविवृतिः**– षड्भि[2]रवगतं वैश्वानरं क्रमेण पृष्ट्वा तन्नामधेयं वदन् विशेषाज्ञाने बाधकं चाह– **औपमन्यव इत्यादिना** ॥ सुतं प्रसुतमासुतं पुत्रपौत्रतत्पुत्राः ॥[3]

अब्रह्मविद्यात्वप्रतीतिं निवारयन् भगवच्छिरआदिषु द्व्यादिशब्दं निर्वक्ति– **क्रीडात्मकत्वादित्यादिना** ॥ स्वर्गसूर्यवायूनामाश्रयत्वाच्च द्व्यादिनामकानि भगवच्छिर आदीनि ॥ इति द्वादशः खण्डः ।

## अथ त्रयोदशः खण्डः

## वैश्वानरस्य चक्षुरादित्यनामकमिति निरूपणम्

उप.– अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाचैष वै विश्वरूप आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् तव बहु विश्वरूपं कुले दृश्यते ॥ १ ॥

---

१. 'द्यौश्चैव'' हृपाठः । २.भवद्भि

३. सवनत्रयं वा । अतीव कर्मिणस्तत्कुलीना इत्यर्थः ।

प्रवृत्तोऽश्वतरीरथो दासीनिष्कोऽत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते चक्षुष्वेतदात्मन इति होवाचान्धोऽभविष्यो यद्यन्मां नागमिष्यतः इति
॥ २ ॥ १३ ॥

भा.– ................. सर्वरूपातिदार्शनात् ॥

चक्षुस्तु विश्वरूपाख्यमादानाद्युषामपि ।
आदित्याख्यं च सूर्यस्याप्याश्रयं सर्वदा स्मृतम् ॥

**भाष्यविवृतिः**– विश्वानि रूपाणि यस्य विषयत्वेन तद्विश्वरूपाख्यं भगवच्चक्षुः । कुले गृहे । बहुविश्वरूपमित्युक्तमेव विशादयन्नाह– प्रवृत्त इति ॥ इति त्रयोदशः खण्डः ॥

## अथ चतुर्दशः खण्डः

## वैश्वानरस्य प्राणो वायुनामक इति निरूपणम्

उप.– अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाचैष वै पृथग्वर्त्माऽऽत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् त्वां पृथग्वलय आयन्ति पृथग्रथश्रेणयोऽनुयन्ति ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच प्राणस्त उदक्रमिष्यद्यन्मां नागमिष्य इति ॥ २ ॥ १४ ॥

भा.– वाय्वादिप्राणशक्यं न यत्तत्कर्ता हरेर्यतः ।

प्राणस्तेन पृथग्वर्त्मा वायुर्ज्ञानायुरूपतः ॥
वायोरप्याश्रयो नित्यं .................

भाष्यविवृतिः– वैय्याघ्रपद्य व्याघ्रपात्पुत्र । व्यम्लास्येताम् भज्येयाताम् । भगवत एतन्नामकमेतदङ्गमित्युपदिश्योक्तमनुवेदन् समग्रं वैश्वानरमुपदिश्य फलं चाह– एते वै खल्वित्यादिना ॥ भगवदवयवानां भेदाभावात् पृथगिवेत्युक्तम् ॥ इति चतुर्दशः खण्डः ॥

## अथ पञ्चदशः खण्डः

## वैश्वानरस्य शरीरमध्यभाग आकाशनामक इति निरूपणम्

उप.– अथ होवाच जन९ शार्कराक्ष्य९ शार्कराक्ष्य कं त्वमात्मानमुपास्स इत्याकाशमेव भगवो राजन्निति होवाचैष वै बहुलं आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् त्वं बहुलोऽसि प्रजया च धनेन च ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते सन्दोहस्त्वेष आत्मन इति होवाच सन्दोहस्त व्यशीर्यद्यन्मां नागमिष्य इति ॥ २ ॥ १५ ॥

भा.– ................. बहुत्वाद्बहुलः स्मृतः ।
आकाशनामा चादीप्तेर्मध्यदेहो रमापतेः ॥

## अथ षोडशः खण्डः

## वैश्वानरस्य कटिप्रदेशोऽम्नामक इति निरूपणम्

उप.– अथ होवाच बुडिलमाश्वतराश्विं वैयाघ्रपद्य कं त्वमात्मान-

मुपास्स इत्यप एव भगवो राजन्निति होवाचैष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् त्वं रयिमान् पुष्टिमानसि ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेनमात्मानं वैश्वानरमुपास्ते बस्तिस्त्वेष आत्मन इति होवाच बस्तिस्ते व्यभेत्स्यद्यन्मां नागमिष्य इति ॥ २ ॥ १६ ॥

भा.– व्याप्तत्वादाप इत्युक्तो रयी रतिकरत्वतः ।
वस्तिराकाशवार्योश्च तावाधारौ प्रकीर्तितौ ॥

भाष्यविवृतिः– तौ मध्यदेहबस्ती । आकाशवारिणोराधारावतश्चाकाशाम्नामिनौ । इति षोडशः खण्डः ॥

## अथ सप्तदशः खण्डः

## वैश्वानरपदयोः पृथिवीनामकत्वकथनम्

उप.– अथ होवाचोद्दालकमारुणिं गौतम कं त्वमात्मानमुपास्स इति पृथिवीमेव भगवो राजन्निति होवाचैष वै प्रतिष्ठाऽऽत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात् त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च ॥ १॥

अत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति होवाच पादौ ते व्यम्लास्येतां यन्मां नागमिष्य इति ॥ २ ॥ १७ ॥

भा.– प्रथनात् पृथिवीनामा[१] प्रतिष्ठा च प्रतिष्ठितेः ।
पादौ भगवतो विष्णोः पृथिव्याश्रय एव च ॥

१. 'पृथिवी नाम्ना' इ॰पाठाः।

**उत्तमानां हि पादेन सर्वं रूपं हि कथ्यते ।**
**विष्णोः पदमिति ह्यस्मात् प्रथितिर्वैदिकी स्मृता ॥**

**भाष्यविवृतिः**– पृथिव्याश्रयत्वाच्च **पृथिवी** ।[१] भगवतः पादौ पथिव्याश्रयौ पृथिव्यां तिष्ठत इत्ययुक्तम् । तद्विष्णोः परमं पदं दिवीव चक्षुराततमित्याततत्वश्रवणादित्यतस्तत्स्वरूपार्थमित्याह– **उत्तमानामिति** ॥ उत्तमानां सर्वं रूपं पादशब्देन कथ्यत हि यस्मात्तस्मात्कारणात् विष्णोः पदमिति वैदिकी प्रतिथिस्तत्स्वरूपपरा स्मृतेति योजना ॥ इति सप्तदशः खण्डः ॥

## अथ अष्टादशएकोनविंशखण्डद्वयम्

### हृत्कमले वैश्वानरः

**उप.– तान् होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वाꣳसोऽन्नमत्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ॥ १ ॥**

**तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धेव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्मात्मा सन्दोहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि वर्हिः हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ॥ २ ॥ १८ ॥**

### 'प्राणायस्वाहा' इत्याहुतेः फलनिरूपणम्

**तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयꣳ स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहेति प्राणः तृप्यति ॥ १ ॥**

**प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यति आदित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किञ्च द्यौश्चादित्यश्चाधितिष्ठतस्तत्**

१. 'पृथिवीनामा' इत्यादौ द्विवचनं ग्राह्यम् । एकवचनप्रयोगस्तु श्रुत्यनुसारात् ।

**तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसे-नेति ॥ २ ॥ १९ ॥**

**भा.– प्राणश्चक्षुस्तथादित्य इत्येका देवता स्मृता ।**
**पूर्वद्वारपतिर्विष्णोः ....................**

**भाष्यविवृतिः– प्रादेशमात्रं** अन्तः ।[१] बहिरविमानं अभितो विगतं मानं मर्यादा यस्य स तथोक्तः ।[२] भगवदज्ञानामुक्तं नामधेयं सर्वथा मनसि धार्यमित्याशयवांस्तदनुवदन् होमापेक्षितान्याह– **तस्येत्यादिना ॥** वेद्याद्यभिमानिन्यो देवता उरआदिषु तिष्ठन्तीत्यर्थः ।

सेच्छंभावं होममाह– **तद्यदिति ॥** होममात्रान्वदन्नाहुतितृप्यानप्याह– स **यामित्यामित्यादिना ॥ तत्तृप्यति** तद्ब्रह्म तृप्यति । तस्य तृप्तिमनु यजमानः तृप्यति ।

यत्किञ्चच द्यौश्चादित्यश्चाधितिष्टत इत्यादिना द्यादीनामेवाश्रितत्व-मुक्तम्। न तु तत्र प्राणादीनाम् । तत्र कारणजिज्ञासायां द्वारपत्व-कारणमाह– **प्राणचक्षुरित्यादिना ॥** हृदयस्थवैश्वानरनाम्नो विष्णोः ॥ **इति अष्टादश एकोनविंशखण्डद्वयम् ॥**

## अथ विंशः खण्डः

## 'व्यानायस्वाहा' इत्याहुतेः फलनिरूपणम्

**उप.– अथ यां द्वितीयां जुहुयात् तां जुहुयाद् व्यानाय स्वाहेति व्यानस्तृप्यति ॥ १ ॥**

---

१. तावन्मात्रपरिमाणकमित्यर्थः । तथा चोक्तं - हृद्यपेक्षया तु मनुष्याधिकारत्वात् ।

२. मानं ज्ञानं लयश्चैव मर्यादा चापि कथ्यते इति वचनात्सर्वगतमित्यर्थः ।

व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किञ्च दिशश्चन्द्रमाश्चाधितिष्ठन्ति तत् तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ २० ॥

भा.– ................. व्यानः श्रोत्रं च चन्द्रमाः ॥
दक्षिणद्वारपस्त्वेकः ..........................

## अथ एकविंशः खण्डः

### 'अपानाय स्वाहा' इत्याहुतेः फलनिरूपणम्

उप.– अथ यां तृतीयां जुहुयात् तां जुहुयादपानाय स्वाहेति अपानस्तृप्यति ॥ १ ॥

अपाने तृप्यति वाक् तृप्यति वाचि तृप्यन्त्यां अग्निस्तृप्यति अग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यन्त्यां यत्किञ्च पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ २१ ॥

भा.– ................. वागपानोऽग्निरेव च ।
पश्चिमद्वारपोऽप्येकः .................

## अथ द्वाविंशः खण्डः

### 'समानाय स्वाहा' इत्याहुतेः फलनिरूपणम्

उप.– अथ यां चतुर्थीं जुहुयात् तां जुहुयात् समानाय स्वाहेति समानस्तृप्यति ॥ १ ॥

समाने तृप्यति मनस्तृप्यति मनसि तृप्यति पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत् तृप्यति विद्युति तृप्यन्त्यां यत्किञ्च विद्युच्च पर्जन्यश्चाधितिष्ठतः तत् तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ २२ ॥

भा.– ................. समानो मन एव च ॥

इन्द्र इत्येक एवोक्त उत्तरद्वाररक्षकः ।

## अथ त्रयोविंशः खण्डः

### 'उदानाय स्वाहा' इत्याहुतेः फलनिरूपणम्

उप.– अथ यां पञ्चमीं जुहुयात् तां जुहुयादुदानाय स्वाहेति उदानस्तृप्यति ॥ १ ॥

उदाने तृप्यति वायुस्तृप्यति वायौ तृप्यति आकाशस्तृप्यति आकाशे तृप्यति यत्किञ्च वायुश्चाकाशश्चाधितिष्ठतः तत् तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥ २३ ॥

भा.– उदानो वायुरित्येक ऊर्ध्वद्वाराधिपश्च सः ॥
स एवाकाशनामा च लक्ष्म्याविष्टो विशेषतः ।
पृथिवीनामिका श्रीस्तु द्यौर्दिशो विद्युदेव च ॥
वायुपत्नी समुद्दिष्टा[१] तत्तद्वाराधिपाश्च ते ।
अधितिष्ठन्ति ते सर्वे नारायणमनामयम् ॥
यद्विष्णुर्ज्ञानरूपत्वात् किमानन्दस्वरूपतः ।[२]
एतेषु तृप्तेषु हरिस्तृप्यत्येषां प्रियो ह्यसौ ॥

---

१. ते पृथिव्यादिनामकाश्च । तत्र पृथिवीनामिका श्रीः पश्चिमद्वारपा, वायुपत्नी तु पूर्वदक्षिणोत्तरद्वारपेति विवेकः । २. 'आनन्तिस्वरूपतः' इ.पाठः ।

## वैश्वनरोपासकानां नानावर्गनिरूपणम्

सूर्यप्रसादात्तु नराः पूर्वद्वारेण केशवम् ।
प्राप्नुवन्त्यथ सोमस्य प्रसादात् पितरस्तथा ॥

द्वारेण दक्षिणेनैव गन्धर्वाः पश्चिमेन तु ।
अग्निप्रसादादद्दषय उत्तरेणेन्द्रसंश्रयात् ॥

शिवाद्या वायुमाश्रित्य यान्त्यूर्ध्वेण हरिं सुराः ।
वैश्वानराख्यविष्णोस्तु सम्यग्ज्ञानेन सर्वशः ॥

**भाष्यविवृतिः**– यत्किञ्चवायुश्चाकाशश्चाधितिष्ठत इत्युक्ते वाय्वाकाशयोर्विद्युत्पर्जन्ययोरिव भेदः प्रतीयते तां निवारयति– **स एवेति** ॥ वाय्वाकाशयोरभेदश्चेदाकाशश्चेति सः । मुक्तौ कारणं वक्तव्यमित्यतो विशेषेण लक्ष्म्याविष्टत्वमाह– **लक्ष्म्येति** ॥[१] आकाशनाम्नेति शेषः । द्युपृथिवीविद्युच्छब्दाभिधेयमाह– **पृथिवीति** ॥ ते आदित्यादयः । यत्किञ्चाधितिष्ठत इत्येतदप्रतीतेः व्याचष्टे– **अधीति** ॥ ननु यत्किञ्चिदिति श्रूयते ततः कथं नारायणमिति व्याख्यानमित्यतस्तद्घटनाय यत्किञ्चिच्छब्दार्थावाह– **यदिति** ॥ तत्तृप्यतीति प्राणादितृप्त्या भगवत्तृप्तिरुच्यते कथमन्यतृप्तावन्यतृप्तिरित्यतः प्रयत्नेन घटयते– **एतेष्विति** ॥ प्राणादितृप्त्याचोपासकानां किं भवतीति जिज्ञासायां द्वारगेनाधिकारपूर्वं हरिप्राप्तिमाह भाष्यकारः– **सूर्येत्यादिना** ॥[२] किं सूर्यादिप्रसादेनैव हरिं यान्ति? नेत्याह– **वैश्वनराख्येति** ॥ इति **त्रयोविंशः खण्डः** ॥

---

१. रूपान्तरस्यापि लक्ष्म्याविष्टत्वाद्विशेषतः इत्युक्तम् ।

२. अनेन नराः पूर्वद्वारोपासका इत्यादि विशेषो ज्ञायते । हृदयस्थपूर्वद्वारोपासनेन श्वेतद्वीपादिलोके पूर्वद्वारेण केशवं प्राप्नुवन्तीत्यादि ज्ञेयम् ।

## अथ चतुर्विंशः खण्डः

## ज्ञानपूर्वककर्मणः फलप्रदत्वनिरूपणम्

उप.– स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात् तादृक् तत् स्यात् ॥ १ ॥

अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ॥ २ ॥

तद्यथेपीकातूलमग्नौ प्रोतं प्रदूयेतैवꣳ हास्य सर्वे पाप्मनः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति ॥ ३ ॥

तस्मादु हैवंविद्यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरो हुतꣳ स्यादिति तदेष श्लोकः ॥ ४ ॥

यथेह क्षुधिता बाला मातरं पर्युपासते । एवं सर्वाणि भूतान्यग्निहोत्रमुपासत इत्यग्निहोत्रमुपासत ॥ इति ॥ ५ ॥ ११-२४ ॥

॥ इति श्रीमच्छान्दोग्योपनिपदि पञ्चमोऽध्यायः ॥

भा.– वैश्वानरज्ञानयोग्याः साक्षादेव सुराः स्मृताः ।
तस्मात् तेषां फलं सर्वमन्येषां तु स्वयोग्यतः ॥
इति वैश्वानरविद्यायाम् ।

## वैश्वानरो विष्णुरेव

‘को न आत्मा किं ब्रह्म’ ‘सोयमात्मा चतुष्पाद्’ ‘स्थूलभुग्वैश्वानरः प्रथमः पादः’ ‘ॐ वैश्वानरः साधारणशब्दविशेषात् ॐ’ ‘अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः’ इत्यादेश्च वैश्वानरो विष्णुरिति सिद्धम् । ‘स वायुः स आकाशः वायुश्चाकाशश्चाधि-

तिष्ठतः' इति वचनाद्वायो रूपमन्याधिष्ठितमाकाशाख्यं वायोः स्वरूपमिति विज्ञायते ।

आकाशनामा विघ्नेशो वायुश्चाकाशकः स्मृतः ।
आकाश इति लक्ष्मीश्च तथाऽऽकाशो हरिः स्वयम् ॥
इति शब्दनिर्णये ।

सुतेजोविश्वरूपादिभेदेनाङ्गानि मापतेः ।
अभिन्नान्यपि कथ्यन्ते लोकदृष्टिविभेदतः ॥ इति च ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमच्छन्दोग्योपनिषद्भाष्ये पञ्चमोऽध्यायः ॥

**भाष्यविवृतिः**– एवं वैश्वानरस्वरूपं तद्विषयहोमप्रकारं च निरूप्य तज्ज्ञनपूर्वहोमं अज्ञानवैफल्योक्त्या नियमयंस्तत्फलं चाह– **य इत्यादिना** ॥ इदं वैश्वानरस्वरूपादिकं प्राणाग्निहोत्रम् । तस्मादुक्तरीत्या वैश्वानरज्ञानस्य सर्वपापक्षयादिहेतुत्वादुच्छिष्टमपि पात्रे दत्तं वैश्वानरे हुतं स्यात् । वैश्वानरज्ञानपूर्वकं कृतमग्निहोत्रं सर्वेष्टप्रदमित्युक्तं अर्थं मन्त्रेण संवादयन्नाह– **तदेष इति** ॥ **सर्वाणि भूतानि** अभिष्टापेक्षीणि ।

नन्वत्र वैश्वानर उच्यते न हरिरतः स जाठरानल एवेति किं न स्यादित्यतस्तस्य विष्णुत्वं स्वपक्षपरपक्षसाधकबाधकैः समर्थयते– **को न इत्यादिना** ॥ किं ब्रह्मेति ब्रह्मशब्दश्रवणात् ।[१] व्याख्यानरूपप्रमाणे न समुच्चयार्थश्चकारः ।

१. "को न आत्मा किं ब्रह्म" इति विचारपूर्वकं वैश्वानरविद्याया आरभ्याधीतत्वेन विष्णुप्रकरणत्वाच्च वैश्वानरो विष्णुरिति सिद्धम् । 'अनात्तत्वादनात्मानः' इति वचनेन विष्णोरन्येषामात्मत्वाद्यसम्भवादित्यर्थः ।

वायुश्चाकाशश्चाधितिष्ठत इत्युक्त आकाशो वायुरेवेत्युक्तं तच्छ्रौतार्थापत्याच समर्थयते– **स वायुरिति** ॥ स उदानः स वायुः स आकाश इत्यभेदवचनाद्वायुश्चाकाशश्चाधितिष्ठत इति भेदवचनाच्चोदानवायोरन्याधिष्ठितमेकमाकाशाख्यम् । उदानवायुस्तु केवलं वायोः स्वरूपमिति ज्ञायत इत्यर्थः । वायुलक्ष्म्योराकाशशब्दाभिधेयत्वं कुतो येन स एवाकाशनामा चेत्युक्तं युक्तं स्यादित्यतो नानार्थाभिधानं पठति– **आकाशेति** ॥ भगवतः शिरआद्यंगानां परस्परं भेदाभावादन्योन्यनामत्वाच्च कथं मूर्धैव सुतेजाश्चक्षुर्विश्वरूप इति भेदेन व्यपदेश इत्यत उपासकदृष्ट्यनुसारेणेति स्मृत्या आह– **सुतेज इति** ॥

**इति श्रीमदानन्दतीर्थभगवतदाचार्यविरचितश्रीमच्छन्दोगोपनिषद्भाष्यटीकायां जयतीर्थपूज्यचरणशिष्यव्यासतीर्थविरचितायां पञ्चमोऽध्यायः ॥**

# अथ षष्ठाऽध्यायः

## अथ प्रथमः खण्डः

### श्वेतकेतुवृत्तान्तः

उप.– ॐ श्वेतकेतुर्हारुणेय आस तꣳ ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति ॥१॥

### श्वेतकेतोरहङ्कारपरिहारः

स ह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षः सर्वान् वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय तꣳ ह पितोवाच श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यः ॥ २ ॥

येनाश्रुतꣳ श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति । कथं नु भगवः स आदेशो भवतीति ॥ ३ ॥

भा.– अधीत्यब्दद्वादशत्वाद् द्वादशाब्द इतीरितः ।
श्वेतकेतुर्भारते तु नोत्पत्तिद्वादशत्वतः ॥ इति वाक्यनिर्णये ।

**भाष्यविवृतिः**– जीवजडात्मकात् प्रपञ्चाद्भिन्नमधिकं भगवन्तं जानतां स्वर्गमोक्षफलका उपास्तय उक्ताः पूर्वाध्यायेषु । ईश्वरभेदविषये सन्दिग्धो विपर्यस्तो वा यस्तस्येश्वरान्मोक्षोपयोगी भेदो युक्तिभिर्बोध्यते षष्टप्रपाठेन ॥ तत्र तावच्छ्वेतुकेतुं निमित्तीकृत्य जीवानां भगवतो भेदं बोधयन् भेदबोधनस्याभेदप्रसक्तिमाह– **श्वेतकेतुरित्यादिना** ॥ वस ब्रह्मचर्यं वेदपाठाद्यर्थं वस । वेदपाठादिकं कुर्वित्यर्थः । **अननूच्य** अनधीत्य । ब्राह्मण्यां ब्राह्मणाज्जातोऽसंस्कृतो ब्रह्मबन्धुः ।[1] **अनूचानमानी** सांगवेदाध्ययन-

---

१. ब्राह्मणान् बन्धून् व्यपदिशति न स्वयं ब्राह्मणोऽसौ ब्रह्मबन्धुः इति वा ।

वानहमित्यभिमानवान् । अत एव महानस्मीति मनो यस्यासौ **महामनाः** । अत एव स्तब्धो अविनीतः । श्वेतकेतो, तमादिश्यते उपदिश्यत इत्यादेशं भगवन्तमप्राक्ष्यः उत किं? प्रायो नाप्राक्ष्यः । तत्कथं ज्ञायते नाप्राक्ष्य-मिति । यन्नु यस्मादेव इदमेवं महानस्मीति स्तब्धोऽसि खलु तस्मादिति योजना । कोऽसावादेशो यदज्ञानेन स्तब्धत्वमित्यतः स्तब्धत्वनिरासाय भगवतो महत्वं निरूपयति– **येनेत्यादिना** ॥ यच्छ्रवणादिनाऽन्यदपि श्रुतादिकं भवतीत्युक्तम् । तत्र गूढाभिसन्धिः पृच्छति– **कथन्विति** ॥ भगवः स आदेशः अन्यज्ञानेनान्यज्ञानं भवतीत्युपदेशः कथं नु भवतीति योजना । तदाशयं जानमान उद्दालको यथा सौम्येत्यादिना षड्भिः दृष्टांतैः स्वाशयं प्रकटयति ।

''सर्वान्वेदान् श्वेतकेतुरधीत्य द्वादशाब्दकः । पितुः समीपमेयाय''इति भारतवचनविरोधं चतुर्विंशतिवर्षीय एयायेत्यस्य परिहरति– **अधीत्येति** ॥ अध्ययनाब्दानां द्वादशत्वात् । न उत्पत्यपेक्षयाऽब्दानां द्वादशत्वात् ।

## भगवति विज्ञाते सर्वं विज्ञातप्रायमिति निरूपणम्

**उप.– यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातꣳ स्याद्वाचा-रम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥ ४ ॥**

**यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातꣳ स्याद्वाचारम्भणं विकारो नामधेयं लोहमणिरित्येव सत्यम् ॥ ५ ॥**

**यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातꣳ स्याद्वाचा-रम्भणं विकारो नामधेयं कार्ष्णायसमित्येव सत्यमेवꣳ सोम्य स आदेशो भवतीति ॥ ६ ॥**

**न वै नूनं भगवंस्तस्य एतदवेदिपुर्यद्ध्येतदवेदिष्यन् कथं मे नावक्ष्यन्निति भगवाꣳस्त्वेव मे तद्ब्रवीत्विति यथा सोम्येति होवाच ॥ ७ ॥ १ ॥**

# अथ षष्ठाऽध्यायः

## अथ प्रथमः खण्डः

### श्वेतकेतुवृत्तान्तः

**उप.– ॐ श्वेतकेतुर्हारुणेय आस तꣳ ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति ॥१॥**

### श्वेतकेतोरहङ्कारपरिहारः

**स ह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षः सर्वान् वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय तꣳ ह पितोवाच श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यः ॥ २ ॥**

**येनाश्रुतꣳ श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति । कथं नु भगवः स आदेशो भवतीति ॥ ३ ॥**

**भा.– अधीत्यब्दद्वादशत्वाद् द्वादशाब्द इतीरितः ।**
**श्वेतकेतुर्भारते तु नोत्पत्तिद्वादशत्वतः ॥ इति वाक्यनिर्णये ।**

**भाष्यविवृतिः–** जीवजडात्मकात् प्रपञ्चाद्भिन्नमधिकं भगवन्तं जानतां स्वर्गमोक्षफलका उपास्तय उक्ताः पूर्वाध्यायेषु । ईश्वरभेदविषये सन्दिग्धो विपर्यस्तो वा यस्तस्येश्वरान्मोक्षोपयोगी भेदो युक्तिभिर्बोध्यते षष्ठप्रपाठेन ॥ तत्र तावच्छ्वेतुकेतुं निमित्तीकृत्य जीवानां भगवतो भेदं बोधयन् भेदबोधनस्याभेदप्रसक्तिमाह– **श्वेतकेतुरित्यादिना** ॥ **वस ब्रह्मचर्यं** वेदपाठाद्यर्थं वस। वेदपाठादिकं कुर्वित्यर्थः । **अननूच्य** अनधीत्य । ब्राह्मण्यां ब्राह्मणाज्जातोऽसंस्कृतो **ब्रह्मबन्धुः** ।[1] **अनूचानमानी** सांगवेदाध्ययन-

---

१. ब्राह्मणान् बन्धून् व्यपदिशति न स्वयं ब्राह्मणोऽसौ ब्रह्मबन्धुः इति वा ।

वानहमित्यभिमानवान् । अत एव महानस्मीति मनो यस्यासौ **महामनाः** । अत एव स्तब्धो अविनीतः । श्वेतकेतो, तमादिश्यते उपदिश्यत इत्यादेशं भगवन्तमप्राक्ष्यः उत किं? प्रायो नाप्राक्ष्यः । तत्कथं ज्ञायते नाप्राक्ष्य-मिति । यन्नु यस्मादेव इदमेवं महानस्मीति स्तब्धोऽसि खलु तस्मादिति योजना । कोऽसावादेशो यदज्ञानेन स्तब्धत्वमित्यतः स्तब्धत्वनिरासाय भगवतो महत्वं निरूपयति– **येनेत्यादिना** ॥ यच्छ्रवणादिनाऽन्यदपि श्रुतादिकं भवतीत्युक्तम् । तत्र गूढाभिसन्धिः पृच्छति– **कथन्विति** ॥ भगवः स आदेशः अन्यज्ञानेनान्यज्ञानं भवतीत्युपदेशः कथं नु भवतीति योजना । तदाशयं जानमान उद्दालको यथा सौम्येत्यादिना षड्भिः दृष्टांतैः स्वाशयं प्रकटयति ।

''सर्वान्वेदान् श्वेतकेतुरधीत्य द्वादशाब्दकः । पितुः समीपमेयाय''इति भारतवचनविरोधं चतुर्विंशतिवर्षीय एयायेत्यस्य परिहरति– **अधीत्येति** ॥ अध्ययनाब्दानां द्वादशत्वात् । न उत्पत्त्यपेक्षयाऽब्दानां द्वादशत्वात् ।

## भगवति विज्ञाते सर्वं विज्ञातप्रायमिति निरूपणम्

**उप.– यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातꣳ स्याद्वाचा-रम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥ ४ ॥**

**यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातꣳ स्याद्वाचारम्भणं विकारो नामधेयं लोहमणिरित्येव सत्यम् ॥ ५ ॥**

**यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातꣳ स्याद्वाचा-रम्भणं विकारो नामधेयं कार्ष्णायसमित्येव सत्यमेवꣳ सोम्य स आदेशो भवतीति ॥ ६ ॥**

**न वै नूनं भगवंस्तस्य एतदवेदिषुर्यद्ध्येतदवेदिष्यन् कथं मे नावक्ष्यन्निति भगवाꣳस्त्वेव मे तद्ब्रवीत्विति यथा सोम्येति होवाच ॥ ७ ॥ १ ॥**

## मृत्पिण्डादिदृष्टान्तानां प्रयोजनकथनम्

भा.– यथा मृत्पिण्डविज्ञानात् सादृश्यादेव मृन्मयः ।
विज्ञायन्ते तथा विष्णोः सादृश्याज्जगदेव च ॥

यथा स्वर्णस्य विज्ञानात् सर्वे लोहमयास्तथा ।
प्राधान्याद्विष्णुविज्ञानाद्विज्ञातं स्याज्जगत्सदा ॥

अत्यल्पेऽपि हि विज्ञाते सदृशे तादृशं बहु ।
ज्ञायते नखकृन्तन्या[1] यथा सर्वमयोमयम् ॥

किमु विष्णोर्बहोर्ज्ञानादत्यल्पं जगदीदृशम् ।
अनन्याधीनविज्ञानादन्याधीनं तथैव च ॥

मृदयोलोहनाम्नां हि ज्ञानात् साङ्केतिकं यथा ।

इत्यादिसामसंहितायाम् ।

'स्वर्णं लोहमणिश्चैव पुरटं चाभिधीयते' इति शब्दनिर्णये ।

**भाष्यविवृतिः**– एकमृत्पिण्डादिज्ञानेन सर्वमृन्मयादिज्ञानप्रकारघटानाय दृष्टान्तवाक्यानि व्याकुर्वन् दार्ष्टान्तिकवाक्यार्थं घटयते– यथेत्यादिना ॥[2]

---

१. 'नखनिकृन्तन्या' इ.पाठः ।

२. अद्वैतिनः आहुः– "सर्वं खल्विदं ब्रह्म" इति सर्वस्य प्रपञ्चस्य ब्रह्मात्मकत्वोक्तौ कथमित्या-शङ्कायां "तज्जलानिति शान्त उपासीत" इति । तज्जत्वात् तल्लत्वात् तदनत्वादिति यद् सर्वस्य ब्रह्मोपादानत्वं ब्रह्मण्यारोपितत्वरूपं प्रागुक्तं यत्पुनरेकस्मिन् विदुषि भुक्ते सर्वं जगत् तृप्यतीति सर्वभूतस्थात्मैक्यमुक्तं तदुभयं प्रपञ्चयितुमयं षष्ठाध्याय आरभ्यते । तत्र श्वेतकेतुं प्रत्युद्दालकेन ब्रह्मविज्ञानेन सर्वविज्ञानोक्तौ अन्य-ज्ञानेनान्यज्ञानस्य काप्यदर्शनादित्यभिप्रायेण कथमिति श्वेतकेतुनाऽऽक्षिप्ते कार्य-स्योपादानानन्यत्वान्नानुपपत्तिरित्याशयवतोद्दालकेन मृत्पिण्डादि दृष्टान्ताः कथिताः । हे सोम्यैकेन मृत्पिण्डेन चरुकुण्डादिकारणभूतेन विज्ञातेन सर्वमन्यन्मृन्मयं मृद्विकारजातं विज्ञातं स्यात् । कार्यस्य कारणानन्यत्वे इदं कारणम् अयमस्य विकार इति

गन्धवत्वादिनैकमृत्पिण्डविज्ञानात् गन्धवत्वादिसादृश्यात् । सत्त्वेनाबाधितत्वेन ज्ञातस्य विष्णोः सत्वसादृश्याज्जगदप्यबाध्यमिति ज्ञायते । चेतनत्वेन ज्ञानानन्दाद्यात्मकत्वेन श्रुतस्य विष्णोश्चेतनत्वसादृश्याच्चेतनत्वेन श्रूयमाणा जीवाः ज्ञानानन्दाद्यात्मका इति ज्ञायते । स्वर्णस्य ज्ञानात् साधनानुष्ठानेन तल्लाभे सर्वलोहमया यथा लब्धफला भवन्ति । एवं प्राधान्येन विष्णुज्ञानात् जगत्सदाज्ञातं ज्ञातफलं स्यात् । अल्पीयस्या नखनिकृतन्या ज्ञातया इति शेषः । अनन्याधीनज्ञानात् प्रधानज्ञानात् अन्याधीनं तथैव ज्ञातमिव भवति । सांकेतिकमत एवाप्रधानं नाम यथाज्ञातमिव भवति ।

**यथा स्वर्णस्येति ॥** लोहमणिशब्दः स्वर्णार्थतया व्याख्यातः तत्कुत इत्यतस्तत्राभिधानं पठति– **स्वर्णमिति ॥** लोहानां मणिः श्रेष्टो– **लोहमणिः** । एवं स्वमते सत्वादिना ज्ञातेन ब्रह्मणा सत्वादिना ज्ञायमानं जगदपि सत्वादिसादृश्यादबाध्यत्वादिना विज्ञातं भवति । प्रधानेन ब्रह्मणा ज्ञातेनाप्रधानं जगदपि विज्ञातं भवति । यथैकेन मृत्पिण्डेन गन्धवत्वादिना ज्ञातेनान्यदपि मृन्मयं दृश्यमानं गन्धवत्वादिसादृश्येन मृन्मयमिति विज्ञातं

कथमित्यत उक्तम्– **वाचेति ॥** वाचाऽऽरम्भणं वागारम्भणं वागालम्बनमिति यावत् । विकारः । नामधेयं नामैव नामधेयम् । स्वार्थे धेयप्रत्ययः । नामैव केवलम् । न विकारो नाम वस्त्वस्ति । परमार्थतो मृत्तिकेत्येव मृत्तिकैव तु सत्यं वस्त्विति ।

तदसत् । "सर्वं खल्विदम्" इत्यस्य "तस्मादु हैवं वित्" इत्यस्य चान्यथैव प्राग् व्याख्यातत्वात् । ब्रह्मज्ञानेन तदारोपितसर्वज्ञानं चायुक्तम् । अधिष्ठानयाथात्म्यज्ञानेनाध्यस्तज्ञानस्य क्वाप्यनुपलब्धत्वात् । अतः सादृश्यप्राधान्याभ्यामेवैकविज्ञानेन सर्वविज्ञानमभिप्रेतम् । तत्राऽद्ये दृष्टान्तं वक्तुं "यथा सोम्य" इत्यादिवाक्यत्रयम् । द्वितीये दृष्टान्ताभिधानाय वाचाऽऽरम्भणवाक्यत्रयम् । नन्वेवं तर्हि दृष्टान्तत्रयोपादानं व्यर्थमिति चेत्, त्वत्पक्षेऽपि साम्यात् । दृढप्रतीत्यर्थमित्यस्यास्माकमपि साम्यात् । दार्ष्टान्तिकेऽनेकाभेदानुगमार्थमिति चेत् कार्यकारणयोरनन्यत्वस्यैकेनैव ज्ञापिततयाऽस्यापि वैयर्थ्याद् अप्रामाणिकत्वात् प्रमाणविरोधाच्चेति ।

भवति । यथा च नखनिकृन्तनेनायस्त्वादिनाऽन्यदप्ययोमयं दृश्यमानमयस्त्वादिसादृश्यात् कार्ष्णायसमिति विज्ञातं भवति । यथा प्रधानेन लोहेन स्वर्णेन ज्ञातेन लब्धेन सर्वं लोहमयं ज्ञातफलं भवति । यथावा नित्यतया प्रधानमृत्तिकादि शब्दज्ञानात् मण्णु, मट्टि, माटीत्यप्रधानसाङ्केतिकनाम ज्ञातफलं भवतीति ।

## मृत्पिण्डादिनिदर्शनानि नाद्वैतस्यानुकूलानि

**भा.– विकारत्वविवक्षायामेकपिण्डमणिशब्दा व्यर्था स्युः । मृत्तिकेति लोहमणिरिति कृष्णायस[1]मित्यत्रेतिशब्दा नामधेयशब्दाश्च व्यर्थाः स्युः । विकारमिथ्यात्विवक्षायां मृत्तिकैव सत्यं लोह एव सत्यं कार्ष्णायसमेव[2] सत्यमित्येव स्यात् । न तु नामधेयादिशब्दाः । न च वाचारम्भणमात्रमिति मात्रशब्दोऽस्ति । न चारम्भस्यारम्भणमिति युज्यते शब्दः । क्रिया ह्यारम्भणम् ।**

**भाष्यविवृतिः–** दृष्टान्तदार्ष्टान्तिकवाक्यानि व्याख्याय तत्परिशुद्धये यत्परेषां ब्रह्मणा ज्ञातेन जगदपि ज्ञातं भवति । तत्परिणामत्वेन तदात्मकत्वात् । तत्रारोपितत्वेन मिथ्यात्वाच्च । यथा मृत्पिण्डलोहमणिनखनिकृतनज्ञानेन घटशरावकटकाङ्गुलीयलवित्रकुठारादि ज्ञातं भवति । तत्परिणामत्वेन तदात्मकत्वात् तदारोपितत्वेन मिथ्यात्वाच्चेति व्याख्यानम् । तदिदानीमनूद्य बाधकान्याह– **विकारेत्यादिना** ।। आरोपितत्वेन मिथ्यात्त्वविवक्षायां चेति ग्राह्यम् । तर्हि कथं प्रयोगः स्यादित्यपेक्षायां वैय्यर्थ्यमेव स्फोरयन्नाह– **विकारेति** ।। विकारत्वविवक्षायामारोपितत्वेन मिथ्यात्वविवक्षायामिति च योज्यम् । मृदा विज्ञातया लोहेन विज्ञातेनायसा विज्ञातेनेत्यादौ योजयित्वा योजनीयम् । आदिशब्देन पिण्डमणीति

१. 'कार्ष्णायसमिति' पाठान्तरम् । २. 'कृष्णायसमेव' इपाठः ।

शब्दा गृह्यन्ते । न केवलमेकादिशब्दा व्यर्था अपितु तर्हि तदर्थत्वेनाप्रसिद्धेर्वाचाऽऽरभ्यत इति वाचारम्भणं मिथ्येति चानुपपन्नमित्याशयः ।

ननु वाचारम्भणमात्रमिति व्याख्याने तदर्थत्वं सिध्यतीत्यतोऽश्रुतकल्पनं दोषमाह– **न चेति** ॥ आरम्भणशब्दव्युत्पत्तिश्चायुक्तेत्याह– **न चेति** ॥ आरम्भणशब्दस्य ल्युडन्तत्त्वात् ल्युडन्तस्य च नपुंसकलिङ्गस्य वाचाऽऽरभ्यत इति वाचारम्भणमिति कर्मणि व्युत्पत्ययोगादारभ्यस्यारम्भणमिति शब्दो न युज्यत इत्यर्थः । आरभ्यं चेन्नारम्भणं किं तर्हि तदित्यत आह **क्रियेति** ॥

## अनादिः संस्कृतभाषा इतरास्तु पश्चादागता इति निरूपणम्

**भा.– अतो वाचा नाम्नारम्भणं विकारो विविधाकारो विक्रियमाणः[१] । सत्यं नामधेयं सर्वदा विद्यमानं नामधेयं मृत्तिकेत्यादय इत्यर्थः । सत्त्वेन कालतस्ततं ज्ञायते विद्वद्भिरिति नित्यत्वेन प्रसिद्धमेव सत्यमित्यत्र विवक्षितम् । सङ्केतेन क्रियमाणानि ह्यन्यानि नामानि । अतो विकाररूपाणि । विकारशब्दस्य नियतपुल्लिङ्गत्वादारम्भणं विकार इति वेदाः प्रमाणमितिवद्युज्यते ।**

**भाष्यविवृतिः–** एवं परव्याक्याने शब्दानुपपत्तिमुक्त्वा तानेव हेतूकृत्याप्रतीतेर्वाचारम्भणादिवाक्यं व्याचष्टे– **अत इति** ॥ वाचा वागिन्द्रियेण नाम्नां मण्णु, मट्टि, माटीत्यादि साङ्केतिकनाम्नामारम्भणमुत्पादनम् । सत्यं सर्वदा विद्यमानमिति कथं शब्दलब्धमप्रसिद्धेरित्यतो निरुच्य तद्दर्शयति– **सत्वेनेति** ॥ सत्वं ततत्वं विद्वदर्थः सच्छब्दो ज्ञातव्यः । ज्ञायत इति यच्छब्दार्थ इति व्युत्पत्या विदुषां प्रसिद्धमेवात्र वाक्ये सत्यमिति विवक्षितमित्यर्थः । वाचा नाम्नामित्यादिना पदयोजनां

१. 'विकारो विक्रियमाणः' इति पाठान्तरम् ।

कृत्वेदानी तात्पर्यार्थमाह– **सङ्केतेनेति** ॥ सङ्केतेन क्रियमाणानि हि विकाररूपाणि विकाररूपत्वादनित्यान्यनित्यत्वाद प्रधानानि संस्कृतनामानि त्वधिकारित्वेन नित्यत्वात्प्रधानानीतिच ग्राह्यमित्यर्थः ।

ननु भवद्व्याख्यानेऽपि कथमारम्भणं विकार इति सामानाधिकरण्यमित्यतस्तद्घटयन्नाह– **विकारेति** ॥ ल्युडन्तस्यारम्भणशब्दस्य भावार्थस्य च नियतनपुंसकलिङ्गत्वादिति शेषः । तत्र निदर्शनमाह– **वेदाः प्रमाणमितिवदिति** ॥ प्रमाणशब्दस्य प्रमीयतेऽनेनेति व्युत्पत्तौ पुल्लिङ्गत्वात्प्रमितिः प्रमाणमिति नपुंसकलिङ्गत्वं द्रष्टव्यम् । प्रमितिः प्रमाणं चेत् वेदाः प्रमाणमिति कथं सामानाधिकरण्यमित्यतोऽपि करणकार्ययोरुपचारेण सामानाधिकरण्यं द्रष्टव्यमिति परिहारो द्रष्टव्यः ।

## संस्कृतभाषातः इतरभाषणां जननक्रमनिरूपणम्

**भा.– न च मृत्तिकादिनामविकारः साङ्केतिकं नाम । प्राधान्यमेवात्र मृत्तिकादिनामवद्भगवतो विवक्षितम् । सृष्टिश्च प्राधान्यार्थमेवात्रोच्यते ॥ १ ॥**

**भाष्यविवृतिः**– ननु संस्कृतनामस्थानीयं ब्रह्म प्राकृतस्थानीयं जगत् । तथा च प्राकृतनाम्नः संस्कृतनामविकारत्वमिव ब्रह्मविकारत्वं जगतः स्यादित्यतोऽसंमतिमुत्तरमाह– **न चेति** ॥ अस्तु संस्कृतनाम प्रधानं सांकेतिकमप्रधानमिति वाचारम्भणवाक्यार्थः । तथा चैतद्दृष्टान्तेन येनाश्रुतमित्यत्र भगवतः किं विवक्षितमित्यत आह– **प्राधान्यमिति** ॥ येनाश्रुतमित्यत्र जगतो ब्रह्मविकारत्वतदध्यस्तत्वाभावे सदेव सोम्येदमग्र आसीदित्यादिना सृष्टिकथनमयुक्तमित्यतस्तत्प्रयोजनमाह– सृष्टिश्चेति ॥ प्राधान्यज्ञापनार्थम् । इति **प्रथमः खण्डः** ॥

## अथ द्वितीयः खण्डः

### एकमेवाद्वितीयं ब्रह्म

उप.– सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायत इति ॥ १ ॥

कुतस्तु खलु सोम्यैवꣳ स्यादिति होवाच कथमसतः सज्जायेतेति सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ॥ २ ॥

### भगवतः सकाशादादिसृष्टिकथनम्

तदैक्षत बहु स्यां प्रजायेय इति तत् तेजोऽसृजत तत् तेज ऐक्षत वहु स्यां प्रजायेयेति तदपोऽसृजत तस्माद्यत्र क च शोचति स्वेदते वा पुरुषस्तेजस एव तद्ध्यापो जायन्ते ॥ ३ ॥

ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त तस्माद्यत्र क च वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तदन्नाद्यं जायते ॥ ४ ॥ २ ॥

भा.– एकमेवाद्वितीयं स्वगतभेदवर्जितं समानवर्जितं च ।

एकमेवाद्वितीयं तत्समाभ्यधिकवर्जनात् ।[1]
स्वगतायां च भेदानामभावाद् ब्रह्म शाश्वतम् ॥

इति प्रवृत्ते ।

भेदाभेदनिवृत्त्यर्थमेवशब्दोऽवधारकः ।
समाधिकनिवृत्त्यर्थमद्वितीयपदं तथा ॥

भेदाभेदेऽप्येकशब्दो यतोऽवयविनि स्थितः ।
एकमेवेत्यतः प्राह नारायणमियं श्रुतिः ॥

१. ‘समाधिकविवर्जनात्’ हृपाठः ।

समे द्वितीयशब्दः स्यादद्वितीयोऽसमत्वतः ।
साधिकः[१] कुत एव स्यादित्याह परमा श्रुतिः ॥

इति सामसंहितायाम् ।

**भाष्यविवृतिः**– ब्रह्मणि ज्ञाते प्रधानत्वादप्रधानं जगदपि ज्ञातं भवतीत्युक्तम् । ब्रह्मजगतोः प्राधान्याप्राधान्ये कुत इत्यतः स्रष्टृत्वादित्याशयवान् सोपोद्धातं सृष्टिप्रकारमाह– **सदेवेति** ॥ स्वमतविरुद्धमनुवदन् दूषयति तत्स्थेम्ने– **तद्धैक इत्यादिना** ॥ **तत्** तत्र । **जायते** अजायतेति चाहुः । सौम्येवमसदेवेदमग्र आसीदिति कुतस्तु खलु स्यात् । न कुतोऽपि तत्र प्रमाणाभावात् । असतः सदजायतेति च कथंस्यात् । कदाप्यसतः सदुत्पत्यदर्शनादित्यर्थः । एवं परमतस्य दुष्टत्वादात्ममतं निराशङ्कं सिद्धमित्याह– **सत्त्वेवेति** ॥ अस्य जगतोऽग्रे प्रलये सदेवासीदित्युक्तस्य ब्रह्मणः प्रलयावसाने सृष्ट्यर्थं विचारः समजनीत्याह– **तदैक्षतेति** । जातं विचारप्रकारमाह– **बहुस्यामिति** ॥ बहुनियामकरूपः स्यामित्यर्थः । तदर्थं नियम्यानि **प्रजायेय** प्रजनयेय । अपां तेजःकार्यत्वमनुभवारूढं करोति– **तस्मादिति** ॥ अपां तेजःकार्यत्वात् । पूर्वमुद्भूतात्तेजसः । तस्मादप्कार्यत्वादन्नस्य ।

जीवजडलक्षणसजातीयविजातीयभेदवर्जितमित्यन्यथा प्रतीतेः निजार्थाप्रतीतेः एकमेवा द्वितीयमित्येतदनूद्य श्रुत्या भेदबुद्धेरुद्वेगनिरासार्थं क्रममुल्लङ्घ्य व्याचष्टे– **एकमेवेति** ॥[२] मत्स्याद्यपेक्षया स्वगतभेदवर्जितम् ।

१. 'अधिकः' इति हृपाठः ।

२. अत्र ''एकमेवाद्वितीयम्'' इति वाक्यं शंकराचार्यैरित्थं व्याख्यतम् । स्वकार्यपतितमन्यन्नास्तीत्येकमेवोच्यते । मृद्व्यतिरेकेण मृदो यथाऽन्यद् घटाकारेण परिणामयितृकुलालादिनिमित्तकारणं दृष्टम् । तथा सद्व्यतिरेकेण सतः सहकारिकारणं द्वितीयं प्राप्तं प्रतिषिध्यते । अद्वितीयमिति नास्य द्वितीयं वस्त्वन्तरं विद्यत इति । तदसत् । अद्वितीयपदेनैव कार्यकारणमध्यपतितद्वितीयमात्रनिषेधसम्भवेन एकमेव इत्यस्य वैयर्थ्यात् ।

उक्तमर्थं प्रमाणेन दृढयति– **एकमेवेति** ॥ मत्स्याद्यपेक्षया स्वगतानाम् । तत्र वादिविप्रतिपत्तेः । एवशब्दव्यवच्छेद्यं दर्शयन् व्याख्यानरूप-प्रमाणान्तरमाह– **भेदेति** ॥ निरासकतया[1] तयैकशब्दमादौ योजयित्वा योजनीयम् । एकमित्यनेनापि भेदाभेदनिवृत्तावेवशब्दो व्यर्थ[2] इत्यतो न निवृत्तिरिति सोपपत्तिकमाह– **भेदेति** ॥ भेदाभेदौ रूपादिना यस्य सः असौ भेदाभेदस्तस्मिन् **भेदाभेदे** घटाद्यवयविनि । समाधिकनिवृत्तिरद्वितीय-पदार्थ इत्युक्तं तत्किमुभयनिवृत्तिरपिपदार्थ इत्यपेक्षायां समनिवृत्तिः पदार्थः इतराऽर्थ[3] लभ्येत्याह– **सम इति** ॥

## अद्वितीयशब्दो नाद्वैतसाधकः

**भा.– न च विजातीयभेदवर्जनं नाम कुत्रचित् प्रसिद्धम् । तत्प्रमाणाभावाच्च । 'एक एवाद्वितीयो भगवांस्तत्सदृशपरो नास्ति' इति च । एक एव भगवान् तत्सदृशपरौ न स्तः इति च ।**

**भाष्यविवृतिः**– स्वोक्तार्थपरिशुद्धये विजातीयनिवृत्तिरद्वितीयपदार्थ इति कश्चित्[4] । तत्र दोषमाह– **न चेति** ॥ येन तत्राद्वितीयपदार्थव्युत्पत्त्या ब्रह्मण्यपि श्रूयमाणं तदर्थतया व्यवसीयेत । नैतदस्तीति वाक्यशेषः । नन्वत्र व्युत्पत्त्यभावेऽपि ब्रह्मणि ब्रह्मपदमिव ब्रह्मणो विजातीयभेदवर्जनेऽद्वितीयपदं व्युत्पन्नं भविष्यतीत्यत आह– **तदिति** ॥ तत् तस्मिन् ब्रह्मणि विजातीयभेदाभावे प्रमाणाभावादित्यर्थः । इतोऽपि ब्रह्मणि श्रूयमाण-

---

१. भेदनिवारक खपाठः । २. व्यर्थत इति खपाठः असाधुरिति भाति ।

३. इतरा त्वर्थेनेति खपाठः ।

४. तथाहि तस्य कारिकाः- वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः । वृक्षान्तरात् सजातीयो विजातीयः शिलादितः ॥ तथा सद्वस्तुनो भेदत्रयं प्राप्तं निषिध्यते । ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात् ॥ इति ॥

मद्वितीयपदं न विजातीयभेदराहित्यार्थम् । किं तु समराहित्यार्थमितीत्यत्र श्रुतिं पठति– **एक इति** ।। परः अधिकः ।।

**भा.– विजातीयाभावे येनाश्रुतं श्रुतं भवतीत्यादि विशेषणं च व्यर्थम् । यस्य कस्यचिज्ज्ञानं तज्ज्ञानमेव भवतीति । अज्ञानमपि ज्ञानमेव भवति । भेदाभावात् ।**

**भाष्यविवृतिः**– ननु विजातीयाभावादद्वितीयमित्युच्यते इत्यतस्तत्र शब्दानुपपत्तिं बाधकमाह– **विजातीयेति** ।। **विशेषणं** विशेषवचनम् ।। विजातीयभेदाभावार्थत्वेऽतिप्रसङ्गं बाधकमाह– **यस्येति** ।। विजातीयभेदाभावाद्यस्यकस्यापि घटादेर्ज्ञानं तद्ज्ञानं ब्रह्मज्ञानमेव भवतीति । येन केनचिद्ज्ञातेन ब्रह्म ज्ञातमित्युक्तिः स्यान्नतु येनाश्रुतं श्रुतं भवतीत्यादिविशेषोक्तिरित्यर्थः । विजातीयभेदाभावे दोषान्तरमाह–**अज्ञानमिति** ।। अज्ञानस्य ज्ञानरूपाद्ब्रह्मणो भेदाभावादज्ञानमपि ज्ञानमेव भवतीति स्यादित्यर्थः ।

**भा.– न च मिथ्या सत्यमिति भेदः । तस्यैव विजातीयत्वप्राप्तेः । तद्भेदस्य मिथ्यात्वे तदभेदस्य सत्यत्वप्रसङ्गाच्च । मिथ्यासत्ययोरैक्ये इदं मिथ्या इदं सत्यमिति भेदाभावाज्जीवेशभेदादेरपि सत्यत्वप्रसङ्गः । अतः परमार्थं ब्रह्मान्यन्मिथ्येत्यपि न युज्यते । अतः सजातीयस्वगतभेदोऽधिकाख्यं विजातीयं चात्र निषिध्यते ।**

**भाष्यविवृतिः**– ननु ज्ञानं सत्यमज्ञानं मिथ्येति विशेषभावात् कथमज्ञानमपि ज्ञानमेव स्यादित्यतो न तर्हि विजातीयभेदाभाव इत्याह– **न चेति** ।। **तस्यैव** मिथ्याभूतस्यैव । ननु विजीतीयस्यापि मिथ्यात्वात्तद्भेदस्यापि मिथ्यात्वात्कथं विजातीयभेदः स्यात् इत्यत आह– **तद्भेदस्येति** ।।

ब्रह्मणस्तद्भेदस्य मिथ्याभूतेनाभेदस्य सत्यत्वप्रसङ्गेनानुषङ्गसिद्धमति-प्रसङ्गान्तरमाह– **मिथ्येति** ।। मिथ्यासत्ययोरैक्ये स्वोक्तिविरोधं चाह– **अत इति** ।। अतः मिथ्याभूतस्य सत्येनैक्ये सत्यत्वप्रसङ्गेन । एवं विजातीय-भेदाभावार्थत्वे बाधकानुक्त्वैकमेवाद्वितीयमिति समग्रवाक्यप्रतिपाद्यमाह– **अत इति** ।। अतः परोक्तार्थस्यायुक्तत्वादेकशब्देन सजातीयमत्स्यादीनां भेदः एवशब्देन स्वगतगुणादीनां भेदः भेदाभेदौ चाद्वितीयपदेन सममर्थ-तोऽधिकाख्यविजातीयं चात्र निषिध्यत इत्यर्थः ।

भा.– **सर्वोत्तमत्वात् सन्नामा हरिर्नारायणः प्रभुः ।**
**सोऽसृजत् प्रथमं देवीं तेज आख्यां श्रियं सतीम् ।।**

**तते[1] स्थितेन रूपेण साऽजैव हि यतः सदा ।**
**तेज इत्युच्यते तस्माज्जनेर्वा तत एव तु ।।**

**यदस्याः सृष्टिकृद्रूपं विद्याख्यं जायते हरेः ।**
**मन्वाख्यः प्राण एवास्या अन्नामा जायतेऽथ च ।।**

**ब्राह्मणादिचतुर्वर्णः स्ततश्चान्नभिधो हरः ।**
**तेजःसंस्था च सा देवी प्राणोऽप्सु स्थित एव च ।।**

**ततस्तेजस एवापो जायन्तेऽन्नस्थितो हरः ।**
**जायतेऽतोऽभ्य एवान्नं पृथिवी त्वन्नरूपिणी ।। २ ।।**

**भाष्यविवृतिः**– एवं श्रोतुः श्रुत्योद्विग्नत्वनिरासायैकमेवाद्वितीयमित्येतद् व्याख्यायेदानीं समस्तं पर्वाप्रतिपत्तिविप्रतिपत्ती निवारयन् व्याचष्टे–

---

१. 'तत्र' हृपाठः ।

**सर्वोत्तमत्वादित्यादिना** ॥[१] सतीं निर्दोषामनादितो विद्यमानामिति वा। श्रियि तेजःशब्दं द्वेधा निर्वक्ति– **तत इति** ॥ तते हरौ व्याप्तप्रकृतौ वाऽवस्थितेन रूपेण यतः सा सदाऽजैव हि। तस्मात्सा तेज इत्युच्यते तत एव व्याप्ता। जनेर्वातु तेज इत्यर्थः। नन्वजायाः कथं जनिरित्यतो रूपान्तरेणेत्याह– **यदिति** ॥ रूपान्तरेण जननेऽप्यजत्वं कथमित्यतः प्रादुर्भावो जनिरिति भावार्थः। ग्रन्थान्तरे मन्वाख्यः ब्राह्मणादिचतुर्वर्णः प्राणोऽस्याः अम्नामा जायते।[२]

ननु तेजोबन्नपदानां देवतार्थत्वे तस्माद्यत्र क्च शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायंते तस्माद्यत्र क्च वर्षति तदेव भूयिष्ठमन्नं भवतीत्युक्तिरयुक्तेत्यतस्तेज आदिशब्दानां देवताजडार्थत्वाज्जडोत्पत्तिरपि विवक्षितेति नायुक्तेत्याह– **तेजःसंस्थेति** ॥ **अतः** आभ्योऽद्भ्यः। यतः-कारणात् सा देवी तेजःसंस्थाच ततःकारणात् स तस्तेजोऽजायत इत्यादि

१. ''सच्छब्द उत्तमं ब्रूयात्'' इत्युक्तेः ॥ सदित्यस्तितामात्रं सूक्ष्मं निर्विशेष्यं सर्वगतमेकं निरञ्जनं नित्यं निरवयवं यदवगम्यते सर्ववेदान्तेभ्य इति व्याख्यानमसत्। मात्रशब्दश्रवणेनास्तितामात्रमिति व्याख्यानायोगात्। सूक्ष्मत्वादेः सच्छब्दार्थत्वे मानाभावात्। मात्रशब्देनासद्व्यावृत्तिलाभेऽपि स्थौल्यादिव्यावृत्तेरलाभात्। स्वरूपकथनमात्रपरत्वे तु सूक्ष्मत्वादेरेव विशेषत्वेन निर्विशेषत्वोक्तिव्याघातात्। सूक्ष्मत्वसर्वगतत्वयोर्विरोधाच्च। ऐश्वर्यानङ्गीकारात्। वेदान्तानामन्यथा तत्र तत्र व्याख्यातत्वाच्च। अतो निखिलगुणगणाढ्यमेव ब्रह्म सच्छब्दाभिधेयमिति भावेन ''नारायण'' इत्युक्तम्।

२. अथ प्राणोत्पत्यनन्तरं ब्राह्मणादिचतुर्वर्णाभिमानी ब्रह्मा चास्या जायत इति। वायुरेव ब्रह्मा भवितुमर्हतीति दर्शयितुं वायोः सृष्टिः प्रथममुक्ता।

वायुरेव यतो ब्रह्मपदं नियमतो व्रजेत्।

सहैव जननेऽप्यस्मात् पूर्वं वायोर्जनिं वदेत्।

क्वचित्तु ब्रह्मणः पूर्वं प्राधान्यात् तत्पदस्य च। इति ब्रह्मतर्कवचनात्। प्राणस्यैव विशेषणमेतदित्यप्याहुः।

योज्यम् । अन्नं नाम किं ? पृथिवी त्वन्नरूपिणी[1] ।। इति द्वितीयः खण्डः ।।

## अथ तृतीयः खण्डः

### नामरूपात्मकप्रपञ्चस्य सृष्टिकथनम्

उप.– तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जमिति ।। १ ।।

सेयं दैवतैक्षत हन्ताहमिममास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति ।। २ ।।

तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत् तासां त्रिवृतं त्रिवृतमेकैकामकरोद्यथा तु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत् त्रिवृदेकैका भवति तन्मे विजानीहीति ।। ३ ।। ३ ।।

भा.– सृष्टेष्वेतेषु भगवानीक्षाञ्चक्रे स केशवः ।
जीवाख्येनैव रूपेण योऽनिरुद्ध इति स्मृतः ।।

तेन रूपेण लक्ष्म्यादीन् प्रविष्टो रूपनामनी ।
करिष्ये त्रिवृतश्चैतानेकैकं करवाणि च ।।

इति मत्वा प्रविश्याथ तेभ्य इन्द्रादिनामपि ।
नामरूपाणि कृतवांस्तांश्चान्योन्यप्रवेशिनः ।।

---

१. नात्रान्नशब्देन प्रसिद्धान्नमुच्यते । किन्तु पृथिव्येव । भूताधिकारत्वात् । ''यत्कृष्णं तदन्नस्य'' इति कृष्णरूपश्रवणात् । काष्र्ण्यप्रचुरा च पृथिवी । नान्नस्य तथा विशेषः । ''पृथिवी वा अन्नम्'' इत्यादिशब्दान्तरादन्नशब्दस्य पृथिव्यां शक्तिमत्त्वाच्चेति भावः । तथाच सूत्रम्- पृथिव्यधिकाररूपशब्दान्तरादिभ्यः इति ।

**कृत्वाऽग्निसोमसूर्यादिष्वेतांस्त्रीन् विदधे[1] पुनः ॥ ३ ॥**

**भाष्यविवृतिः**– अभिमानिसहिततेजोऽबन्नोत्पत्तिमभिधाय तत्प्राधान्यज्ञापनार्थं तानि चतुर्विधभूतसृष्टिकारणानीत्याह– **तेषामिति** ॥ तेजोऽबन्नानि त्रीण्येव बीजानि कारणानि भूतानामित्युक्तानि । भूतानि कानीत्यपेक्षायामाह– **आण्डजमिति** ॥ **आण्डजं** पक्ष्यादि । **जीवजं** जरायुजं मनुष्यादि । भुवमुद्भिद्य जायन्त इति **उद्भिज्जं** वृक्षादि । स्वेदजं च ग्राह्यम् । तेजोऽबन्नसृष्ट्यनन्तरं विचार्य कृतमाह– **सेयं देवतैक्षतेत्यादिना** ॥ देवता सदेव सोम्येत्युक्ता । **करवाणि** कुर्याम् । नामरूपनिर्माणार्थं तासां मध्ये एकैकां त्रिवृतं त्रिवृतं करवाणि एकैकामेकैकत एकैकं भागमुद्धृत्य मिश्रतां करवाणि इति विचार्य तासामेकैकात् त्रिवृतं त्रिवृतमकरोदित्याह– **तासामिति** ॥ त्रिवृत्करणानन्तरं नामरूपे च व्याकरोदित्याह– **सेयमिति** ॥ एवमग्र्यादयः सर्वे भावाः साक्षात्परंपरया वा तेजोबन्नकार्या इत्युक्तम् । सर्वेषां नामरूपे अपि ज तेजोबन्नाद्यभिमानिलक्ष्म्यद्यधीने इति च । एतदुभयं कथमनुभवारूढं स्यादित्यतस्तद्दर्शयितुं प्रतिजानीते– **यथा खल्विति** ॥ तत्र योजना ॥ सोम्येमास्तिस्रो देवता यथैकैकाऽपि त्रिवृत्त्रिवृद्भवति । यथा च खलु सर्वं च तत्कार्यं भवति । सर्वेषां च नामरूपे तदधीने इति च यत् तत्सर्वं वदतो मे विजानीहि । यज्ज्ञनेऽतिप्राज्ञोऽहं कस्मै कस्मै[2] नमस्कुर्यामित्यहंकारं जह्या इति ।

सेयं देवतैक्षतेत्याद्यप्रतीतेः प्रसिद्धजीवप्रतीतेश्च व्याचष्टे– **सृष्टेष्वित्यादिना** ॥ इति मत्वैतान् साभिमन्यमानांस्तेजोबन्नाख्यान् लक्ष्म्यादीन् जीवेनात्मना प्रविश्य तासामेकैकां त्रिवृतं त्रिवृतं कृतवानित्यर्थः । त्रिवृत्करणानन्तरं नामरूपेच व्याकरोदिति वाक्यं ज्ञेयमिति ज्ञापयंस्तद्व्याचष्टे–

१. 'निदधे' हपाठः । २. कस्मै इति खपाठः ।

अथ तेभ्य इति ।। तानिन्द्रादीश्च स्वाभिमन्यमानसहितानन्योन्यप्रवेशिनः कृत्वाऽग्नीषोमादिषु विदधे )। अभिमन्यमानसहितेन्द्रादिभ्योऽभिमन्यमान-सहिताग्न्यदीन् सृष्टवानित्यर्थः । पुनरेतांस्त्रींस्तेजोबन्नाख्यानग्न्यादिषु विदधे अग्न्यादिष्वनुगतानकरोदित्यर्थः ।। इति तृतीयः खण्डः ।।

## अथ चतुर्थः खण्डः

## सृष्टेः लक्ष्मीप्राणद्वारा भगवदधीनत्वनिरूपणम्

उप.– यदग्ने रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापगादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ।। १ ।।

यदादित्यस्य रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापगादादित्यादादित्यत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ।। २ ।।

यच्चन्द्रमसो रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापगाच्चन्द्रात् चन्द्रत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ।। ३ ।।

यद्विद्युतो रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाद् विद्युतो विद्युत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ।। ४ ।।

एतद्ध स्म वै तद्विद्वाꣳस आहुः पूर्वे महाशाला महाश्रोत्रिया न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यतीति ह्येभ्यो विदश्चक्रुः ।। ५ ।।

यद् रोहितमिवाभूदिति तेजसस्तद्रूपमिति तद्विद्वाश्चक्रुर्यदु शुक्लमिवा-

भूदित्यपाꣳ रूपमिति तद्विदाञ्चक्रुर्यदु कृष्णमिवाभूदित्यन्नस्य रूपमिति तद्विदाञ्चक्रुः ॥ ६ ॥

यद्वविज्ञातमिवाभूदित्येतासामेव देवानाꣳ समास इति तद्विदाञ्चक्रुर्यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ७ ॥ ४ ॥

भा.– अतो यल्लोहितं रूपं श्रियस्तद्रूपसम्भवम् ।
यच्छुक्लं वायुजं विद्यात् कृष्णं चैव शिवोद्भवम् ॥

तस्मादग्नेर्यदत्तृत्वमग्निनामप्रवर्तकम् ।
लक्ष्म्यादिदेवतानां तन्नैवाग्नेरग्निना ततः ॥

मुख्यैवमाददानत्वमादित्यस्य तदुद्भवम् ।
अत आदित्यनामैषां नैवादित्यस्य मुख्यतः ॥

यच्चन्द्राह्लादकत्वं च तत्तेषां चन्द्रता तथा ।
विद्युद्विद्योतनं चैषां[१] ततस्ते सर्वनामिनः ॥

तथैव सर्वरूपं च तद्रूपप्रतिबिम्बितम् ।
सर्वरूपाश्च ते तस्माल्लोहितादिक्रमेण तु ॥

**भाष्यविवृतिः**– अहङ्कारमोचनाय प्रतिज्ञातमनुभवारूढं करोति **यदग्रेरित्यादिना** ॥ **अग्नेरग्नित्वमपागात्** अग्नेर्नामरूपप्रवृत्तिनिमित्तं चापागात् । आग्नौ नामरूपप्रवृत्तिनिमित्तान्यमुख्यानीत्यर्थः । अग्नेर्नामरूप प्रवृत्तिनिमित्तानाममुख्यत्वं हेतूक्त्या समर्थयते– **वाचारम्भणं विकारो नामधेयमिति** ॥ अग्नीवग्निनामधेयादिकं वाचारम्भणं साङ्केतिकमतो विकारोऽ-

१. 'तेषां' पाठान्तरम् ।

मुख्यमित्यर्थः । तर्ह्यग्निनामधेयादि कुत्र मुख्यमित्यत आह– **त्रीणि रूपाणीत्येव सत्यमिति** ।। त्रीणिरूपाणीत्येव तेजोबन्नान्येवाग्निनामधेयादेः सत्यं मुख्यमित्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् ।

एकविज्ञानेन सर्वविज्ञानमुपदेशपरम्परागतं चेत्याह– **एतद्धस्मेति** ।। भवतां कथमेकज्ञानेन सर्वज्ञानं जातमित्यपेक्षायामाह– **एभ्य इति** ।। ब्रह्मज्ञाने जगतो ब्रह्मसादृश्याद्ब्रह्मणो जगत्प्राधान्याच्च सर्वं जगद् ज्ञातं भवतीति वदद्भ्यः, प्राधान्यं च ब्रह्मणः कुत इत्यतो जगत्कर्तृत्वात्तत्प्रकारः कथमित्यपेक्षायां भूतत्रयसम्भेदेनेति च वदद्भ्य एभ्योऽन्येभ्य विदांचक्रुः तेभ्यो वयं विदाचक्रामेत्यर्थः । तेषां वेदनप्रकारमेव लेशतो दर्शयति– **यदु रोहितमित्यादिना** ।। तेजआद्यात्मकत्वेन यत्स्फुटमविज्ञातमिवाभूत्तदप्येतासां देवतानां समासः समुदाय इति विदाश्चक्रुः । पृथिव्यादेश्च तेजआद्यात्मकत्वं प्रकारान्तरेण ज्ञापयितुम् प्रस्तावयति– **यथा खल्वित्यादिना** ।।

विकारस्य मिथ्यात्वपरतया व्याख्यानमसाध्विति मन्वानोऽप्रतीतिं निवारयन् यदग्रे रोहितमित्यादि यथावद्व्याचष्टे– **अतो यल्लोहितमित्यादिना** ।। **अतः** श्रियाद्यभिमानिकतेजआदिभूतत्रयकार्यत्वात् सर्वभावानामित्यर्थः ।

भा.– **अतोऽन्यनामधेयं तु वाचारम्भणहेतुतः ।**
**साङ्केत्येन विकारः स्यात् त्रयाणामेव नित्यता ।।**

**यथा लक्ष्म्यादिकानां च नाम सङ्केततोऽन्यगम् ।**
**वाचारम्भणहेतोस्तद्विकारो नैव मुख्यतः ।।**

**मुख्यं नाम त्रिरूपाणीत्याद्यं वेदोदितं परम् ।**
**अतस्तदेव सत्योक्तं मुख्यं सत्यमितीर्यते ।।**

**इन्द्रादिनामरूपाणि यथैव त्रिषु मुख्यतः ।**
**तदधीनत्वतस्तेषामेषामुच्चबलत्वतः ॥**

**शिवनामानि रूपाणि तथा वायोस्तु मुख्यतः ।**
**तदीयानि तथा लक्ष्म्यास्तदीयानि हरेस्तथा ॥**

**तस्मात् स एव सर्वेशः सर्वरूपः स एव च ।**
**सर्वनामा स एवैकः सर्वशक्तिस्तथैव च ॥**

**अन्येषां यच्च रूपाद्यं तत्तस्मात् प्रतिबिम्बितम् ।**

**भाष्यविवृतिः**– वाचारम्भणं विकारो नामधेयमिति वाक्यमन्यथाप्रतीतिं निवारयन् प्रकृतसङ्गतत्वेन व्याचष्टे **अतोऽन्येति** । अतः अग्न्यादिनामधेयादेः श्रियादिनामधेयत्वात् । अग्न्यादिनामधेयाद्यग्न्यादिषु विकारः स्यादमुख्यं स्यादित्यर्थः । हेतुमेव विशदयितुमुक्तं **सांकेत्येनामुख्यप्रवृत्तिनिमित्तेनेति** ॥ त्रीणि रूपाणीत्येव सत्यमिति वाक्यं अन्यथा प्रतीतिं निवारयन् व्याचष्टे **त्रयाणामेव नित्यतेति** ॥ श्रियादीनां त्रयाणामेवाग्न्यादिनामधेयादि सत्यं नित्यता मुख्यमित्यर्थः ।

ननु लक्ष्म्यादौ सर्वनामधेयत्वादिमत्वप्रतिपादनेन विष्णोः प्राधान्ये किमायातमित्यतो यदग्ने रोहितमित्यादेस्तात्पर्यमाह– **यथा लक्ष्म्यादिकानामित्यादिना** ॥ तस्यैवं योजना यथान्यगमग्न्यादिगमग्न्यादिनामादि लक्ष्म्यादीनामेव नामादि । कुतोऽग्न्यादेरग्न्यादिनामादि मुख्यं न भवति । यतः तत् अग्न्यादिनामादि वाचारम्भणहेतोरग्न्यादौ विकारः नैव मुख्यतः मुख्यं नैव । वाचारम्भणत्वं विशदयितुमुक्तम्– सङ्केतत इति ॥ अल्पप्रवृत्तिनिमित्तत इति यावत् । तथा लक्ष्म्यादेरपि नामादि हरेरेव मुख्यं लक्ष्म्यादौ वाचारम्भणहेतोः मुख्यं नैवेति । ननु त्रीणि रूपाणि

सत्यमित्यत्र सत्यपदस्य मुख्यमिति कथं व्याख्यानम् । मुख्यार्थत्वाप्रसिद्धेरित्यतः श्रुतिप्रसिद्धिभावादित्याह– अत इति ॥ पामरप्रसिद्ध्यभावेऽपि यतः श्रुत्यादौ मुख्यं सत्यमितीर्यते । अतस्तदेव मुख्यमेव सत्यपदोक्तमित्यर्थः ।

नन्विन्द्राग्न्यादिनामरूपे लक्ष्म्यादिषु मुख्ये तेषां सर्वस्वस्य तदीयत्वात् तथा शिवादेरपि नामरूपे वाय्वादावेव मुख्ये किमित्यपेक्षायामोमित्याह– **इन्द्रादीति** ॥ **मुख्यतः** मुख्यानि । सर्वनामवत्त्वं तस्य कुतः । सर्वशब्दप्रवृत्तिनिमित्तशक्तिसद्भावादित्याह– **सर्वशक्तिस्तथैव चेति** ॥ सदेव सोम्येत्यादि व्याख्यायोपसंहरति– **अन्येषामिति** ॥ **अन्येषां** लक्ष्म्यादीनां यद्रूपाद्यं तत् तस्माद्विष्णोरेव प्रतिबिम्बितम् ॥

## सर्वस्य भगवदधीनत्वान्नाहङ्कृतिः कार्या

भा.– **एक एवाद्वितीयोऽसावतः सर्वोत्तमत्वतः ॥**

**मुख्यत्वादेव सन्नामा सत्ततिज्ञानरूपतः ।**
**सत्यमित्युच्यते विष्णुस्स त्वं नासि कथञ्चन ॥**

**अतोऽनूचानमानी त्वं स्तब्धोऽसि कुत एव तु ।**
**त्वत्तोऽधिका अपीन्द्राद्यास्तदुच्चाश्च श्रियादयः ॥**

**सर्वोच्चो भगवान् विष्णुर्न स्तम्भोऽस्यापि हि क्वचित् ।**
**अतो न विद्वन्मानी स्या महानस्मीति वा मनः ॥**

**न ते स्यान्नैव च स्तम्भो ज्ञात्वा विष्णोः परं बलम् ।**[१]
**न हि विष्णोर्बलं ज्ञात्वा स्तम्भहेतुः कथञ्चन ॥**

**इत्यादि सामसंहितायाम् ॥ ४ ॥**

१. 'विष्णोर्बलं परम्' पाठान्तरम् ।

**भाष्यविवृतिः**– तदधीनं यतोऽतोऽसावेव सर्वोत्तमः । सर्वोत्तमत्वतः स एक एवाद्वितीय इति योजना । सन्मूलेत्यत्र(त्य)स्थसच्छब्दार्थं तत्सत्यं स आत्मेत्यत्र(त्य)स्थसत्यशब्दार्थं चाह– **मुख्यत्वादिति** ॥ भेदबुद्धे-रुद्विग्नत्वं निवारयन् स आत्मातत्वमसीत्यस्य तात्पर्यार्थमाह– **सत्वं नासि कथञ्चनेति** । अग्न्यादिरूपादिकं लक्ष्म्यादिव्यवधानेन भगवत एव मुख्य-मित्युक्तम् । भगवत्प्राधान्य ज्ञापनायेदानीं स्तब्धत्वनिवारणाय यदग्रे रोहितमित्यादेस्तात्पर्यान्तरमाह– **त्वत्तोऽधिका इत्यादिना** ॥ इति चतुर्थः खण्डः ॥

## अथ पञ्चमः खण्डः

## लक्ष्मीप्राणरुद्राः तेजोऽप्पृथिव्यश्च अन्योन्यांशसंयुक्ता इति निरूपणम्

**उप.– अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मा॒ंसं योऽणिष्ठस्तन्मनः ॥ १ ॥**

**आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः ॥ २ ॥**

**तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः स मज्जा योऽणिष्टः सा वाक् ॥ ३ ॥**

**अन्नमय॒ं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ४ ॥ ५ ॥**

## अथ षष्ठः खण्डः

### वाक्प्राणमनांसि लक्ष्मीप्राणरुद्रायत्तानि

दध्नः सोम्यः मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तत्सर्पिर्भवति ॥ १ ॥

एवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तन्मनो भवति ॥ २ ॥

अपाꣳ सोम्य पीयमानानां योऽणिमा स ऊर्ध्वः समुदीषति स प्राणो भवति ॥ ३ ॥

तेजसः सोम्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सा वाग् भवति ॥ ४ ॥

अन्नमयꣳ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान् विज्ञापयत्विति यथा सोम्येति होवाच ॥ ५ ॥ ६ ॥

## अथ सप्तमः खण्डः

### 'अन्नाभिमानिदेवतायत्तं मनः'' इत्येतदनुभववेद्यम्

षोडशकलः सोम्य पुरुषः पञ्चदशाहानि माऽशीः काममपः पिबापोमयः प्राणो न पिबतो विच्छेत्स्यत इति ॥ १ ॥

स ह पञ्चदशाहानि नाशाथ हैनमुपससाद किं ब्रवीमि भो इत्यृचः सोम्य यजूꣳषि सामानीति स होवाच न वै मा प्रतिभान्ति भो इति ॥ २ ॥

तꣳ होवाच यथा सोम्य महतोऽभ्याहितस्यैकोऽङ्गारः खद्योतमात्रः

परिशिष्टः स्यात् तेन ततोऽपि न बहु दहेदेवꣳ सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टा स्यात् तयैतर्हि वेदान्नानुभवस्याशानाथ मे विज्ञास्यसीति ॥ ३ ॥

स हाशाथ हैनमुपससाद तꣳ ह यत्किञ्च पप्रच्छ सर्वꣳ ह प्रतिपेदे ॥ ४ ॥

तꣳ ह होवाच यथा सोम्य महतोऽभ्याहितस्यैकमङ्गारं खद्योतमात्रं परिशिष्टं तं तृणैरुपसमाधाय प्रज्वलयेत् तेन ततोऽपि बहु दहेत् ॥ ५ ॥

एवꣳ सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टाऽभूत् साऽन्नेनोपसमाहिता प्राज्वालीत् तयैतर्हि वेदाननुभवस्यन्नमयꣳ हि सोम्य मन आपोमयः प्राणस्तेजोमयो वागिति तद्धास्य विजज्ञाविति विजज्ञाविति ॥ ६ ॥ ७ ॥

## मांसादिशब्दैरभिमानिदेवता एव विवक्षिताः

भा.– देवता एव मांसादिशब्दवाच्याः । तत्र प्रवेशात् । अश्यमानाश्चोपजीव्यत्वात् । न च दुःखं तासाम् । ऐश्वर्यात् । तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृत् इति प्रस्तुतत्वात् ।

**भाष्यविवृतिः–** सोम्येमास्तिस्रो देवताः पुरुषं प्राप्येकैकाऽपि त्रिवृत्त्रिवृद्भवति तन्मे विजानीहीति पृथिव्यादेः प्रकारान्तरेण त्र्यात्मकत्वप्रदर्शनाय प्रतिज्ञातं तद्दर्शयति– **अन्नमशितमित्यादिना** ॥ उक्तप्रकारेणान्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक् । अन्नमशितमित्यादिनोक्तं दृष्टान्तेन बोधयेत्याह– **भूय एव मेति** ॥

उक्तमर्थं दृष्टान्तेन बोधयति– **दध्न इत्यादिना** ॥ मनआदेरन्नादिमयत्वमुक्तम् । तदनुभवारूढं कुर्वित्याह– **भूय एव मेति** ॥

मनआदेरन्नादिमयत्वमन्वयव्यतिरेकाभ्यां अनुभवारूढं करोति– **षोडश-कल इत्यादिना** ॥ **माशीः** मा भुंक्ष्व । काममपः पिब च । किमर्थं पिबानि । यतः आपोमयोऽम्मयः प्राणः । तत्कुतः नपिबतोऽपिबतः प्राणो विनश्येत इति यस्मात् । प्राणविच्छेदेच श्रुतप्रतिभानं तत्प्रयुक्तं न स्यात् । अतः पिबेति योजना । **एतर्हि** इदानीं **विजज्ञौ** विज्ञातमभवत् । पुनर्विजिज्ञावित्यवधारणार्थं विज्ञातमेवेति ।

पुरीषमूत्रास्थिभावाद्ययोगादन्नमशितमित्याद्युक्तान्नादेरदेवतात्त्वप्रतीतिं साभिमन्यमानानामुपपत्या वारयति– **देवता एवेति** । अन्नाद्या देवताश्चेद-न्नमशितमित्याद्युक्ताश्यत्वमयुक्तमित्यतस्तद्धटयन्नाह **तत्रेति** ॥ तत्राभिमन्य-जडान्नादिके पुरुषे वा ।[१]

ननु कथं देवतानामश्यत्वं युक्तमित्यतस्तद्धटयते– **उपजीव्यत्वादिति** ॥ नचाश्यत्वे दुःखं स्यात् इति । अश्यत्वस्यायजीव्यत्वादिति । अनूद्य निषिध्य तत्रहेत्वन्तरं चाह– **न चेति** ॥ ऐश्वर्यं नामाघटितघटकत्वम् । केवलं जडान्नाद्येव कस्मान्नाङ्गीक्रियत इत्यत उपक्रमविरोधादित्याह– **तिस्र इति** ॥

## उपनिषदुक्तो जीवः परमात्मैव

भा.– 'जीव इति भगवतोऽनिरुद्धस्याख्या' इति च श्रुतिः[२] । 'प्राणस्य प्राणश्चक्षुषश्चक्षुर्जीवस्य जीवः प्रधानस्य प्रधानं भगवांश्चतु-र्मूर्तिः' इति च ।

**प्राणाधारो[३] हरेर्नान्यो जीवशब्दस्ततो हरौ ।**
**संसारिणो जीवता तु जननाद्धानतस्तथा ॥** इति च ।

१. मांसादौ देवतानां नियामकतया प्रवेशात् । नियम्यवाचकशब्दानां नियामके वृत्तेरित्यर्थः ।

२. 'इति च श्रुतिश्च' ह्पाठः । ३. 'हरिर्नान्यः' पाठान्तरम् ।

**भाष्यविवृतिः**– अनेन जीवेनेत्येतत् ''जीवाख्येनैव रूपेण योऽनिरुद्ध इति स्मृतः'' इति प्रमाणेन व्याख्यातम् । तत्राभिधानरूपं श्रुतिं च पठति– **जीव इति** ॥ भगवतो जीवनात्मकत्वे प्रमाणान्तरं चाह– **प्राणस्येति** ॥ प्राणनत्वदर्शनहेतुत्वादिदः । प्रवृत्तिनिमित्तविचारेऽपि भगवानेव जीवशब्द इत्याह– **प्राणाधार इति** ॥ ननु संसार्यपि जीव-शब्दाभिधेयोऽनेन निमित्तेन खल्वित्यत आह– **संसारिण इति** ॥ **वानतः** ज्ञानवत्वात् ।

**भा.– जीवशब्देन संसारिविवक्षायां तत्तेज ऐक्षतेत्यादिना तेषामेव चेतनत्वावगतेर्नामरूपव्याकरणे जीवान्तरानुप्रवेशो नापेक्षितः ।**

**प्रसुप्तलोकतन्त्राणां निशाम्य गतिमीश्वरः ।**
**त्रयोविंशतितत्त्वानां गणं युगपदाविशत् ॥ इति ।**

**यावद्बलिं तेऽज हराम काले यथा वयं चान्नमदाम यत्र ।**
**[१]यथोभयेषां त इमेह लोका बलिं हरन्तोऽन्नमदन्त्यमूढाः ॥**
**त्वं न स चक्षुः परिदेहि शक्ता देव क्रियार्थे यदनुग्रहेण ॥**

**इति तत्त्वानां प्रार्थनानन्तरं भगवत एव तेषु प्रवेशोक्तेर्भागवते ।**

**भाष्यविवृतिः**– आत्मनामत्मस्वरूपेणानेन संसारिजीवेनेति किं न स्यादित्यतस्तत्र बाधकमाह– **जीवशब्देनेति** ॥ तत्तेज ऐक्षतेत्यादिना तेजआदेश्चेतनत्वावगमात्तत्रेश्वरप्रवेशोऽपि व्यर्थ इत्यतस्तस्य सार्थक्यमाह **प्रसुप्तेति** ॥ **प्रसुप्तलोकतन्त्राणाम्** असमर्थलोकविषयशक्तीनाम् । **गतिं** स्थितिम् ।[२] त्वं नश्चक्षुर्ज्ञानं परिदेहि । देव वयं यदनुग्रहेण शक्ताः स्मः ।

---

१. 'तथोभयेषां' इ्पाठः ।

२. ''शब्दाद्या नभआद्याश्च मनोयुक्तेन्द्रियाणि च । अहङ्कारो महांश्चैव त्रयोविंशतिको गणः ॥'' ''युगपदाविशत्'' इति भागवते च भगवत एव तेषु स्वतःप्रवृत्त्यसमर्थेषु तत्वेषु प्रवेशोक्तेर्नेश्वरप्रवेशो व्यर्थ इत्यर्थः ।

अज! **यावत्** येन ज्ञानेन काले ते बलिं हरामः । **यथा** येन ज्ञानेन यत्र स्थिता वयमन्नमदाम तत् स्थानं च कुरु । उभयेषां ते[1] अस्माकं च । यथा येन ज्ञानेन हि अमूढा इमे लोका बलिं हरन्तोऽन्नमदन्ति । सृष्टाव-समर्थानां तत्वानां यावद्बलिमित्यादि प्रार्थनानन्तरं सृष्ट्यर्थं प्रसुप्तलोकेति भगवतस्तत्वेषु प्रवेशोक्तेर्न स व्यर्थ इत्यर्थः ।

**भा.– यतश्च स एव जीवेनात्मनानुप्रभूतः पेपीयमानो मोदमान-स्तिष्ठतीति भगवत्येव जीवशब्दः प्रयुज्यते । न ह्यचेतनस्य मोदमान-त्वमस्ति । अतोऽन्तर्यामिरूप एव जीवशब्दः ।**

**भोक्तुस्तु सुखदुःखानामन्तःस्थो जीवनामकः ।**
**बहिःस्थितस्तु सन्नामा भगवान् पुरुषोत्तमः ॥**

**इति तत्त्वविवेके ।**

**अग्नेरग्निरिति नाम मुख्यतो नास्ति । अग्निनामानि त्रीणि रूपा-णीति नामधेयं सत्यमित्यादि ॥ ५-७ ॥**

**भाष्यविवृतिः**– उत्तरत्र भगवति जीवशब्दप्रयोगाच्चानेन जीवेनेति जीवशब्दोक्तो भगवानेवेत्याह– **यत इति** ॥ नन्वत्रापि जीवशब्दोदितो भगवानेवेति कुत इत्यतः ज्ञापकमाह– **नहीति** ॥ मोदमानत्वं मोदानुभव-कर्तृत्वं तथा पानकर्तृत्वं च नास्तीति ग्राह्यम् । तद्भावे जडत्वानुपपत्तिरिति शब्दार्थः । तथा च भगवत्येव जीवशब्द इति उक्तं सूक्तमित्याह– **अत इति** ॥ अतः मोदमानस्य चेतनत्वसिद्धेः । ननु तथाऽप्यनेन जीवेनात्म-नेत्युक्तो जीव एव । आत्मनेति तृतीयाश्रवणात् । अन्यथा हन्ताहमिमा-स्तिस्रो देवताः प्रविश्येत्युक्त्या पूर्तेस्तस्य वैय्यर्थ्यादित्यतोऽन्तर्यामिरूपा-पेक्षया तृतीयाऽवैय्यर्थ्यमित्याह– **भोक्तुरिति** ॥ अपागादग्नेरग्नित्वमित्यस्य

१. तवेत्यर्थः ।

तात्पर्यं विशदमाह– **अग्नेरिति** ॥ आदावत इति योज्यम् । चतुस्स्थानगतस्य नामधेयं त्रीणि रूपाणीत्येव सत्यमित्यस्य योजनाप्रकारमाह– **अग्नीति** ॥ अग्न्यादित्यचन्द्रविद्युन्नामधेयानि त्रीणि रूपाणीति च नामधेयं तेजोऽबन्नानीति नामधेयानीति यावत् । लक्ष्म्यादेः सत्यं मुख्यं वाचकमिति योजना ॥ **इति खण्डत्रयम्** ॥ ५-६-७ ॥

## सुषुप्तिजाग्रदवस्थयोर्जीवः परमात्माधीन इति निरूपणम्

**उप.– उद्दालको हाऽरुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं मे सोम्य विजानीहीति यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनꣳ स्वपितीत्याचक्षते स्वꣳ ह्यपीतो भवति ॥ १ ॥**

**स यथा शकुनिः सूत्रेण प्रबद्धः दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा बन्धनमेवोपाश्रयत एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वाऽन्यत्रायतनमलब्ध्वा प्राणमेवोपाश्रयते प्राणबन्धनꣳ हि सोम्य मन इति ॥ २ ॥**

**भा.– स्वप्नस्यान्तः[१] सुषुप्तिः ।**

**स्वातन्त्र्यात् स्व इति प्रोक्तो विष्णुः सर्वेश्वरेश्वरः ।**
**तं प्राप्नोति मनोनामा संसारी स्वपितीत्यतः ॥ इति च ।**

**मननान्मनोनामा संसारी ।**

**भाष्यविवृतिः**– एवं ज्ञानाधिक्येनात्मानमीश्वरं मन्यमानस्य श्वेतकेतोरीश्वरस्य सर्वप्रधानत्वेनानीश्वरत्वं प्रबोध्य तस्य सुषुप्त्यादावभेदशङ्कां प्रस्ताव्य तत्रापि तदधीनत्वप्रदर्शनेन परिहरन् भेदमुपदिशत्युद्दालक

१. स्वप्नान्तः पाठान्तरम् ।

इत्याह– **उद्दालक इत्यादिना** ।। सता सम्पन्नो भवतीत्युक्तं विशदमाह– **स्वमपीतोभवति इति** ।। सुप्तौ स्वं स्वतन्त्रमपीतः प्राप्तो भवतीति । कुत इत्यतस्तद्धेतूक्त्या समर्थयते– **तस्मादिति** ।। तस्मादित्युक्तं हेतुं विशदयन् साध्यं निगमयति– **स्वं ह्यपीतो भवतीति** ।। यत इति योज्यम् । जग्रत्स्वप्नावस्थयोः श्रान्तः स्वप्नान्तलक्षणसुषुप्त्यवस्थायां केवलमीश्वराधीनस्तिष्ठतीत्युक्तमीश्वराधीनत्वं सदृष्टान्तमाह– **स यथेत्यादिना** ।। स यथा वक्ष्यमाणदृष्टान्तो यथा ।

अप्रतीतेः स्वप्नान्तशब्दार्थं विगृह्याह– **स्वप्नस्येति** ।। स्वमपीतः शुद्धब्रह्मरूपो भवतीति प्रतीतिं निवारयन् स्वशब्दार्थमाह– **स्वातन्त्र्यादिति** ।। यत्रैतत्पुरुष इत्युक्तपुरुषात् मनसोऽन्यत्वप्रतीतिं निवारयन् सता संपन्नो भवतीति वाक्यं व्याचष्टे– **तमिति** ।। तस्मादेनमिति हेतुवाक्यं व्याचष्टे– **स्वपितीत्यत इति** ।। यतस्तमाप्नोति अतो जीवं स्वपितीत्याचक्षत इति योज्यम् । संसारिजीवः कथं मनःशब्द[१] । अप्रसिद्धेरित्यतो बहु मन्यत इति योगवृत्त्येत्याह– **मननादिति** ।।

## जागृदवस्थायां जीवः परमात्माधीन इति निरूपणम्

**उप.– अशनायापिपासे मे सोम्य विजानीहीति यत्रैतत्पुरुषोऽशिशिषति नामाप एव तदशितं नयन्ते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तदप आचक्षतेऽशनायेति तत्रैतच्छुङ्गमुत्पतितꣳ सोम्य विजानीहि नेदममूलं भविष्यतीति ।। ३ ।।**

**तस्य क्व मूलꣳ स्यादन्यत्रान्नादेवमेव खलु सोम्यान्नेन शुङ्गेनापोमूलमन्विच्छद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ।।४**

१. मनःशब्दवाच्य इत्यर्थः ।

अथ यत्रैतत्पुरुषः पिपासति नाम तेज एव तत्पीतं नयते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तेज आचष्ट उदन्येति तत्रैतदेव शुङ्गमुत्पतितꣳ सोम्य विजानीहि नेदममूलं भविष्यतीति ॥ ५ ॥

तस्य क्व मूलꣳ स्यादन्यत्राद्भ्योऽद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवत्यस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् ॥ ६ ॥

## परमात्मनो जगत्कर्तृत्वमेव, न तदुपादानत्वम्

भा.– शुङ्गमित्यङ्कुरं प्रोक्तं तन्मूलं भगवान् हरिः ।
जगतो मूलमप्येष निमित्तं न विकारवान् ॥

बीजजीवो यथा मूलमङ्कुरस्याविकारतः ।
यथा पिता पुत्रतन्वस्तद्देहो हि विकारवान् ॥

एवं हरिर्मूलमपि न विकारः[१] कथञ्चन । इति च ।

प्राथम्याच्च तेजआद्या लक्ष्म्यादय इति सिद्धम् ।

तेजोभिमानिनी लक्ष्मीः प्राणस्त्ववभिमानवान् ।
अन्नाभिमानी रुद्रश्च तिस्रस्ता देवताः पुरा ॥

इति च ब्रह्माण्डे ।

**भाष्यविवृतिः**– जाग्रदवस्थायामपीश्वराधीनत्वं प्रस्ताव्य बोधयति– **अशनेत्यादिना** ॥ अशनापिपासे जीवायत्ते न भवतस्तावत् । अतस्त्वं

१. 'न विकारी' इ॰पाठः ।

कस्मिन्नायत्ते तद्विजानीहि । तर्हि कस्मिन्नायत्ते तज्ज्ञापयेति जिज्ञासायामाह– **यत्रेति** ॥ यत्र यदाशिशिषति अत्तुमिच्छति पुरुषस्तदाऽऽप एवान्नेच्छामुत्पाद्य पश्चादसितं भुक्तं पाकेन रसवीर्यादिकरणेन नयन्ते ।[१] अशितनेतृत्वमपां कुत इत्यतोऽशनायाशब्दाभिधेयत्वादिति सदृष्टान्तमाह– **तद्यथेति** ॥ गां नयतीति गोनायः ।[२] आपश्च तेजोद्वारेण । भगवदधीन इति पुरुषस्य भगवदधीनत्वं सिद्धमिति भावः । यत्रैतत्पुरुषः पिपासति नामेत्यादि वाक्यं यत्रैतत्पुरुषोऽशिशिषति नामेत्यादि वाक्यानन्तरं योजनीयम् । योजनादिकं तद्वदेव ।

सदेव सोम्येत्यादिना यदीश्वरस्य जगत्कर्तृत्वेन प्राधान्यात् तव तत्सृज्यत्वेनाप्राधान्यात् तद्भिन्नस्तदधीनोऽसि त्वमित्युक्तार्थं तात्पर्यद्योतनाय पुनराह– **तत्रैतच्छुङ्गमुत्पतितमित्यादिना** ॥ तत्र भगवतो जगत्कर्तृत्वेन प्राधान्ये एतच्छुङ्गमुत्पतितं प्राप्तम् । तस्य जगतोऽन्यत्रानादन्नादृते क्व मूलम् ? किं मूलं स्यात् । भगवदधीनलक्ष्म्याद्यधीनत्वात् पुरुषः सुतरां भगवदधीन इत्याह– **यथातु खल्वित्यादिना** ॥

अनुवदंस्तेजसा शुङ्गेन सन्मूलमन्विच्छेदित्येतद्विकारिकारणत्वप्रतीतिं निवारयन् व्याचष्टे– **शुङ्गमिति** ॥ अनेनांकुरः सकर्तृकः कार्यत्वाद्धटवत् । एवं जगदपि सकर्तृकं कार्यत्वात् घटवदित्युक्तं भवति । निमित्तं मूलं न विकारवानित्युक्तमर्थं दृष्टान्तेन विशदमाह– **बीजजीव इति** ॥ तेजोऽन्नानि लक्ष्म्यादय इति प्रमाणेन व्याख्यातं तत्र युक्तिं चाह– **प्राथम्याच्चेति** ॥ तत्तेजोऽसृजतेत्यादौ तेषां प्रथमसृष्टत्वावगमेन प्राधान्याच्च

१. आप एव तदभिमानी प्राण एवेति यावत् । "अन्नं रसादिरूपेण प्राणः परिणयत्यसौ" इति वचनादिति भावः ।

२. गोनाय इत्युच्यते गोपाल इति यावत् ।

तेजआद्या लक्ष्म्यादय इति सिद्धम् ।[१] नहि तेजआदिभूतानि प्रथमसृष्टानीत्यर्थः । तेषां प्रथमसृष्टत्वं कुतः येनोक्तं सिद्धं स्यादित्यत आह– तेज इति ॥ सर्वेभ्यः पुरा सृष्टा इति भावः ।

**भा.– 'यत्रैतत्पुरुषः स्वपितिनाम सता सोम्य तदा सम्पन्नो भवति' इति संसारिणो ब्रह्मप्राप्तिमुक्त्वा 'स यथा शकुनिः सूत्रेण प्रबद्धः' इति तस्योपपादनान्मनोनामा पुरुषः । प्राणनामा भगवान् । 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा' इत्युपसंहारात् । प्रजाशब्दश्च चेतनेष्वेव प्रसिद्धः ।**

**'प्रजानां सुखदुःखेन राजाप्नोति शुभाशुभम्' । इत्यादेश्च ।**

**भाष्यविवृतिः**– प्राणबन्धनं हि सोम्य मन इत्युक्तेः स्वतन्त्रं भगवन्तमपीतः प्राप्तो भवति संसारीति कथं व्याख्यानमित्यतो हेतूक्त्या समर्थयते– **यत्रेति** ॥ उपक्रमानुगुण्यं दर्शयित्वोपसंहारानुगुण्यं च दर्शयति– **सन्मूला इति** ॥ ननु सन्मूला इत्युक्तेः भवतु प्राणो भगवान् । प्रजाशब्देन कथं मनः पुरुषः सिद्ध इति शङ्कैव नोदेतीत्याह– **प्रजेति** ॥ प्रसिद्धमेवाभिधानप्रसिद्ध्या सन्देहं वारयन् प्रयोगं दर्शयन्नेव दर्शयति– **प्रजानामिति** ॥

**भा.– शरीरधातुकृत्त्वेन लक्ष्म्याद्याश्च मुमुक्षुणा ।**
**ध्येयस्तदीशितृत्वेन भगवान् पुरुषोत्तमः ॥**

**इति वचनादनुसन्धानकर्तव्यताज्ञापनार्थं तदुक्तं पुरस्तादित्युक्तम् ।**

१. लक्ष्मीस्तु- ''सिसृक्षुत्वविशेषं तत्साक्षाद् भगवदिच्छया । प्राप्तैव सृष्टेत्युदिता । इदमुक्तं भवति । आदिसृष्टौ हि तेजआदिकं भगवता प्रथमोत्पन्नत्वेनोच्यते । यद् यदादौ भगवता प्रथममुत्पन्नं तत्र तदुत्तममिति व्याप्तिः प्रमिता । ततः तेजोऽबन्नानि क्रमात् सर्वोत्तमानि भवेयुः ।

## मुक्तौ मरणावस्थायां च देवतानां लयक्रमकथनम्

**मुक्तावुमा तु वागाख्या रुद्रं याति मनोऽभिधम् ।
वायुं याति शिवश्चापि वायुस्तेजोऽभिधां श्रियम् ॥**

**वायुमादाय सा देवी याति विष्णुं परात् परम् ।
द्वारमात्रा तु सा देवी वायुप्राप्यो जनार्दनः ॥
मृतिकाले च मुक्तौ च पुरुषा वाचमाप्नुयुः ॥ इति सत्तत्त्वे ।**

**भाष्यविवृतिः–** ननु भगवदधीनलक्ष्म्याद्यधीनत्वात् सुतरां पुरुषो भगवदधीन इत्यर्थत्वेन हि यथातु खलु सोम्येत्यादि प्राप्तम् । तथा च कथं तदुक्तं पुरस्तादेव भवतीत्युक्तिरित्यतस्तस्य तात्पर्यमाह– **शरीरेति** ॥ मृतिमुक्त्योर्भगवदधीनत्वात् स त्वं नासीत्याह– **अस्येत्यादिना** ॥

प्रयतो म्रियमाणस्य मुच्यमानस्य[१] भगवतः सर्वनियामकत्वादिरूपत्वाच्च नासौ त्वमसीत्याह– **सय इत्यादिना** ॥ अस्य सोम्येत्यादि जडेन्द्रियार्थत्वे वागादेर्मनआद्यकार्यत्वेन प्राप्त्ययोगाद्देवतापरत्वेन व्याचष्टे– **मुक्ताविति** ॥ मृतौ चेति ग्राह्यम् । द्वारमात्रा ।[२] नतु रुद्रादिवल्लयाधिष्ठानम् । भवतु नियामकानां वागादीनां मृतिमुक्त्यो रुद्रादयः प्राप्या इति । नियम्यानामितरचेतनानां मृतिमुक्त्योः किं प्राप्यमिति जिज्ञासायां तदभिप्रेतमाह– **मृतिकाल इति** ॥

---

१. म्रियमाणत्वं मुच्यमानत्वं वा भगवति नान्वेति । तत्र जीवस्येत्यध्याहृते नान्वयः । भगवच्छब्दोत्तरवर्ति नियामकशब्दमहिम्ना मुच्यमानस्येत्यत्र षष्ठ्याः नियम्यत्वमर्थः ।

२. ''प्राणस्तेजसि'' इत्यस्य तात्पर्यं द्वारमात्रेति । चतुर्मुखस्य तेजसि लयो नाम तत्प्राप्तिमात्रम् । न तत्र देहलयः । तस्य साक्षात् परमात्मनि लययोग्यत्वादिति भावः । प्राणत्वेत्वस्त्येव तेजसि लय इति विशेषद्योतनार्थस्तुशब्दः ।

## अतत्वमसिवाक्यार्थः

**उप.– स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यं स आत्मा(ऽ) तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ७ ॥ ८ ॥**

**भा.– योऽसौ नियमनाद्विष्णुः सारत्वात् स इति स्मृतः ।
अणिमा सूक्ष्मतो गम्य ऐतदात्म्यं च तद्वशम् ॥**

**परानन्दत्वतः सत्य[१] आत्मा पूर्णगुणत्वतः ।
सत्यतो नासि तत् त्वं हि माभूत् ते स्तब्धता ततः ॥**

**भाष्यविवृतिः–** स य इत्याद्यनुवादत्वेनैकार्थत्वप्रतीतिं निवारयन् व्याचष्टे– **य इत्यादिना** ॥ नियमयतीति व्युत्पत्या नियमनादसौ विष्णुर्यः । सर्वसारत्वात्सः । अविघ्नसर्वेच्छारूपत्वादेष इति स्मृतः । अणीयसा अतिसूक्ष्मतो ज्ञानेन मीयते विषयीक्रियत इति गम्योऽणिमा स्मृतः ।[२] इदं सर्वं जगत् ऐतदात्म्यम् । एष चासावात्माचेत्येतदात्मा एतदात्मनः सम्बन्धि । एतदेव विशदमुक्तम्– **तद्वशमिति** ॥ विष्णुः ततत्वात्तत् सत्यं च । तदाह– **परानन्दत्वतः सत्य इति** । स विष्णुः पूर्णगुणत्वादात्माच । त्वमतदसि तद्वशमसि । तद्व्यतिरेकमाह– **सत्यत इति** ॥ तद्विष्ण्वाख्यं ब्रह्म । उक्तस्य साध्यमाह– **माभूदिति** ॥

**भा.– असुराः स्तब्धतां याता ब्रह्माहमिति मानिनः ।
असत्यं जगदित्याहुः सिद्धोऽहं वलवानिति ॥**

---

१. ''सत्यम्'' प्रपाठः ।

२. मानानामाणक इति वा । मानानां परिमाणानां आणकः अधमः अतिसूक्ष्मपरिमाणवान् । अणोरणीयानित्यादरिति ।

**अनीश्वरं[१] जगच्चाहुरप्रतिष्ठं तथैव च ।**
**चेतनैकत्वविषयान् वेदानाहुश्च सर्वशः ॥**

**कुतर्कपरमा नित्यं न सहन्ते गुणान् हरेः ।**
**शास्त्रतत्त्वमविज्ञाय ब्रूयुर्देवेषु चैकताम् ॥**

**यान्ति चैव तमो घोरं परमात्मविनिन्दकाः ।**

**भाष्यविवृतिः–** अहं ब्रह्मेति स्तब्धतया आसुरपक्षत्वाच्च न सा कर्तव्येत्याह– **असुरा इति ॥** असत्यत्वादप्रतिष्टमाहुरप्रतिष्ठत्वात् परमार्थतोऽनीश्वरमाहुः । वेदानां चेतनैकत्वविषयत्वं कस्माद्वदन्तीत्यत आह– **कुतर्केति ॥** उक्तरीत्या तत्वमस्यादिशास्त्रतत्वमविज्ञायात्मानः परमात्मनो न भिद्यन्ते । आत्मत्वादित्यादि कुतर्के तात्पर्यवन्तोऽतस्तथाऽऽहुरित्यर्थः ।[२] ननु सार्वज्ञ्यादिगुणकेश्वरेण कथमात्मनामेकतां ब्रूयुरित्यतस्तदर्थं तान् जहतीत्याह– **न सहन्त इति ॥** गुणत्यागेनैकत्ववादित्वेन परमात्मनिन्दकाः ।[३]

**भा.– आलम्ब्य तन्मतं न त्वमेकत्वं विद्धि विष्णुना ॥**

**[४]एकत्वाभावतो नैव भवेथाश्च महामनाः ।**
**तन्निष्ठा हि प्रजा यस्मात् तत्प्रतिष्ठाश्च मोक्षगाः ॥**
**तन्मूलाश्च यतस्तासां तद्भावः[५] कुत एव तु ॥ ८ ॥**

---

१. 'अनीश्वरं जगत्प्राहुः' पाठान्तरम् ।

२. अथवा विमतानि शरीराणि देवदत्तस्यैव भोगायतनानि इत्यादिकुतर्कपरमाः ।

३. अत्रापि ब्रह्म निर्गुणं अद्रव्यत्वात् गुणवदिति कुतर्कपरमा इति सम्बध्यते ।

४. 'एकताभावतः' प्रपाठः ।

५. 'सद्भावः' पाठान्तरम् ।

भाष्यविवृतिः– सन्मूला इत्यादिवाक्यं प्रकरणस्यैक्यपरत्वाभावे हेतुत्वाप्रतीतेरर्थाप्रतीतेश्च व्याचष्टे– तदिति ॥ सदायतनाः संसारे तन्निष्ठाः । सन्मूलं कारणं यासांताः सन्मूलाः तद्भावस्तत्स्वरूपत्वम् । सय एष इति नियामकतया जीवेषु तिष्ठतीत्युक्तम् । स कुतो न दृश्यत इति पृच्छतिभूय एवेति ॥ प्रश्नवाक्यमभिप्रायमुद्घाटयन्व्याचष्टेयदीति ॥ इति अष्टमः खण्डः ॥

## अथ नवमः खण्डः

## जीवब्रह्मभेदविषये पुष्परसदृष्टान्तः

**उप.– यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसानां समवहारमेकतां गमयन्ति ॥ १ ॥**

**ते यथा तत्र न विवेकं लभन्ते अमुष्याहं वृक्षस्य रसोऽस्मि अमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पत्स्यामह इति ॥ २ ॥**

**त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यत् भवन्ति तत्तदा भवन्ति ॥ ३ ॥**

**स एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा(ऽ) तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ४ ॥ ९ ॥**

## अथ दशमः खण्डः

## जीवब्रह्मभेदविपये नदीसमुद्रदृष्टान्तः

उप.– इमाः सोम्य नद्यः पुरस्तात् प्राच्यः स्यन्दन्ते पश्चात् प्रतीच्यस्ताः समुद्रात् समुद्रमेवापियन्ति । स समुद्र एव भवति । ता यथा तत्र न विदुरियमहमस्मीयमहमस्मीति ॥ १ ॥

एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामहे इति । त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद् भवन्ति तत्तदा भवन्ति ॥ २ ॥

स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्माऽ तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥ १० ॥

भा.– यदि स्वतोऽन्यः परमो देहेऽस्मिन्संव्यवस्थितः ॥
न दृश्यते कुत इति भूयः पप्रच्छ पुत्रकः ।
अज्ञैरदृश्यमानोपि न भेदो नास्ति पुत्रक ॥

यथा पुष्परसा युक्ता अजानन्तोऽपि भेदिनः ।
अजानन्तोऽपि पुरुषास्तथा विष्णोर्हि भेदिनः ॥

इति पित्रोपदिष्टः सन् पुनः पप्रच्छ तं पुनः ।
चेतनानामविज्ञानं कथमित्येव चिन्तयन् ॥
तं प्रत्याह यथा नद्यश्चेतनाश्च समुद्रगाः ॥ ९ ॥

स्वं[१] वारि नैव जानन्ति प्रजास्तद्वत् प्रजालये ॥

भाष्यविवृतिः– भिन्नतयाऽदर्शनात् स नास्तीति शङ्कां हेतोः पुष्परसेष्वनैकान्त्योक्त्या परिहरति– **यथा सोम्येत्यादिना** ॥ **मधुकृतो** मधुमक्षिकाः । **निस्तिष्ठन्ति** निष्पादयन्ति । **नानात्ययानां** नानाजातीयानाम् ।

---

१. 'स्ववारि' हृपाठः ।

**समवहारं** भुक्तं रसमेकतां अतिश्लिष्टत्वं गमयन्ति । **सति सम्पद्य** सति स्थित्वाऽपि । **संपत्स्यामहे** वर्त्तामहे ।

अज्ञानभवमनर्थमाह– **त इहेत्यादिना** ॥ आ इत्यस्य सदज्ञानादित्यर्थः । सदज्ञानादेव हेतुं दूषयित्वा स्वतो भिन्नो नियामकस्तिष्ठतीत्युक्तं सूक्तमित्याह– **सय इति** ॥[१] ननु भवतु रसानामचेतनत्वात् स्वकीयं भिन्नत्वं न जानन्तीति चेतनानां कथं नियामकात् स्वकीयभेदा-दर्शनमित्याशयवानाह– **भूय एव मेति** ॥ चेतनानां भिन्नतया दर्शनात् स नास्तीति शङ्कां हेतोर्नदीवारिष्वनैकांत्योक्त्या परिहरति– **इमाः सौम्येत्यादिना** ॥ **पुरस्तात्** पूर्वां दिशमुद्दिश्य । **प्राच्यः** प्राचीनद्यः । **पश्चात्** पश्चिमां दिशं । **प्रतीच्यः** प्रतीचीनद्यः । **ता** उभयविधा अपि समुद्रान्निर्गत्य समुद्रमेव **अपियन्ति** प्राप्नुवन्ति । **स एव** समुद्रो भवति । नैतासां समुद्रत्वम् । एवं सविशेषणहेतुमपि दूषयित्वा यदुक्तं स इति नियामकाद्भिन्नत्वं तत्सुस्थमित्याह– **सय इति** ॥

भूय एव मेत्यादि प्रश्नपरिहारवाक्ये स्फुटमाशयाप्रतीतेस्तत्प्रकटयन् व्याचष्टे– **इति पित्रेत्यादिना** ॥ प्रजा लीयन्तेऽस्मिन्निति प्रजालये हरौ वर्तमाना अपि प्रजास्तद्वत् स्वभिन्नं नियन्तारं नैव जानन्ति । नन्वस्तु स्वतोऽन्यस्य चेतनानामप्यज्ञायमानो नियन्तास्तीति तं तथा कथं जानीयामित्याशयवान् पृच्छति– **भूय एव मेति** ॥ **इति नवमदशमखण्डद्वयम्** ॥

---

१. 'स यः' इत्याद्यभ्यासस्तात्पर्यद्योतनार्थः । 'आत्मावा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्युक्तानां श्रवणादीनां नाग्निष्टोमवदेकवारेणैव फलप्राप्तिः । किन्त्वावृत्तिः कर्तव्येति ज्ञापनार्थं चायमसकृदुपदेशः । तथाचोक्तं सूत्रकृता आवृत्तिरसकृदुपदेशादिति । (ब्र.सू.४.१.१)

## अथ एकादशः खण्डः

### "जीवोऽस्वतन्त्रः" इत्यस्मिन् विषये वृक्षदृष्टान्तः

उप.– अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन् स्रवेद्यो मध्येऽभ्याहन्याज्जीवन् स्रवेद्योऽग्रेऽभ्याहन्याज्जीवन् स्रवेत् स एष जीवेनात्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति ॥ १ ॥

अस्य यदैकां शाखां जीवो जहात्यथ सा शुष्यति द्वितीयां जहात्यथ सा शुष्यति तृतीयां जहात्यथ सा शुष्यति सर्वं जहाति सर्वः शुष्यत्येवमेव खलु सोम्य विद्धीति होवाच ॥ २ ॥

जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते इति स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्माऽतत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति यथा सोम्येति होवाच ॥ ३ ॥ ११॥

भा.– स्वतोऽन्योऽस्ति परो देह इति ज्ञायेत मे कथम् ।
इति पृष्टः पुनः प्राह वृक्षदृष्टान्ततः पिता ॥ १० ॥

अभिमानिनोऽस्वतन्त्रत्वाद्भेदेन ज्ञायते तरौ ।
हरिः किमु मनुष्येषु शोषो ह्यस्यास्वतन्त्रतः ॥ ११ ॥

भाष्यविवृतिः– स्वतोऽन्यजीवनियन्तारं दृष्टान्तेन ज्ञापयति– **अस्येत्यादिना** ॥ एवमेव खलु सोम्य विद्धीत्युक्तं विशदमाह– **जीवापेतमिति** ॥[1]

१. जीवेन परमात्मनाऽपेतं त्यक्तम् । त्यक्तदेहमिति यावत् । इदं संसारिजातं म्रियते प्राणैर्वियुज्यते । तथा च साहतिः । "ब्रह्मणा त्यक्तदेहस्तु मृत इत्युच्यते बुधैः" इति । अत्र प्रकरणे जीवशब्देन परमात्मैवाभिहितः ।" जीव इति भगवतोऽनिरुद्धस्याख्या" इति श्रुतेः । "विष्णुर्जीव इति प्रोक्तः सततं प्राणधारणात्" इत्यादिस्मृतेश्च ।

जीवः परमात्मा तु न म्रियते एवं स्वतो जीवनियन्तारं दृष्टान्तेन विज्ञाप्य यत्स एष इत्युक्तं तात्पर्यद्योतनाय पुनराह– **सय इति ॥**

तद्वाक्यजातं वृक्षजीवपरत्वप्रतीतिं निवारयन् व्याचष्टे– **स्वत इत्यादिना ॥** अनिष्टेऽपि छेदे शोषादावस्वतन्त्रत्वात् हरिर्मनुष्येषु भेदेन ज्ञायत इति किम्वित्युक्तमेव विशदमाह– **शोष इति ॥** हि यस्मादस्य जीवस्यास्वातन्त्र्यादनिष्टोऽपि शोषो जायत इत्यर्थः । ननु बालाग्रशतभागत्वेनातिसूक्ष्मोऽपि जीवो दृश्यते तन्नियन्ता तत्स्थः कथं न दृश्यते ? अदर्शनात् स नास्तीत्याशयवान् पृच्छति– **भूय एवेति ॥ इति एकादशः खण्डः ॥**

## अथ द्वादशः खण्डः

## परमात्मनोऽप्रत्यक्षत्वविषये वटबीजदृष्टान्तः

**उप.– न्यग्रोधफलमत आहरेति इदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीति अण्व्य इव इमा धाना भगव इत्यासामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किञ्चन भगव इति ॥ १ ॥**

**तꣳ होवाच यं वै सौम्य एतमणिमानं न निभालयसे एतस्य वै सोम्यैषोऽणिम्नः एवं महान् न्यग्रोधस्तिष्ठति श्रद्धस्व सोम्येति ॥ २ ॥**

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्माऽ तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥ १२ ॥**

भा.– ज्ञायते न कथं स्वस्मिन् सूक्ष्मे ज्ञाते परो हरिः ।
तत्रस्थ इति पृष्ट संस्तमाहोद्दालकः सुतम् ॥

**वटवीजे यथा सूक्ष्मे महान्यग्रोधभावयुक् ।**
**न दृश्यतेऽभिमानी स एवं जीवगतो हरिः ॥ १२ ॥**

**भाष्यविवृतिः–** अदर्शनान्नियन्ता नास्तीति न वक्तुं युक्तं इत्येतमर्थं दृष्टान्तेनाह– **न्यग्रोधफलमित्यादिना ॥ अतः** पुरतःस्थितात् न्यग्रोधात् । **इदम्** आनीतम् । अण्व्य इव नतु मुख्यतोऽण्व्यः । **धाना** बीजानि । न पश्यतीत्येतावता धानायां जीवो नास्तीति न वक्तुमुचितं तदभावे महान्यग्रोधाभावप्रसङ्गादतोऽयमेतमणिमानं **न निभालयसे** न पश्यसि । एतस्याणिम्नः साहित्यादेष महान् न्यग्रोधस्तिष्ठति । एवं जीवनियन्ताऽतोऽप्यणिमा न दृश्यत इति योजना । अतो यदुक्तं नियन्ताऽस्तीति तत्सूक्तमित्याह– **स य इति ॥**

प्रश्नपरिहारवाक्येऽभिप्रायाप्रतीतेस्तत् स्पष्टयन् व्याचष्टे– **ज्ञायत इत्यादिना ॥** स जीवगतो हरिरेव न दृश्यते । नन्वस्तु शोषादेरनिष्टस्यापि प्राप्तिदर्शनादस्वतन्त्रस्य जीवस्य तत्कारी तन्नियामकः स्वतोऽन्यो दृश्योऽस्तीति । तथाऽप्यनुपपत्तिरेव । तच्छक्तिदर्शनेपि तददर्शनायोगादित्याशयवान् पृच्छति– **भूय एव मेति ॥ इति द्वादशः खण्डः ॥**

## अथ त्रयोदशः खण्डः

## ''परमात्मनः कार्यं प्रत्यक्षम्'' इति विषये लवणोदकदृष्टान्तः

**उप.– लवणमेतदुदकेऽवधाय मा प्रातरुपसीदथा इति तद्ध तथा चकार तꣳ होवाच यद्दोषा लवणमेतदुदकेऽवधा अङ्ग तदाहरेति तद्धावमृश्य न विवेद ॥ १ ॥**

यथा विलीनमेवाङ्गास्यान्तादाचामेति कथमिति लवणमिति मध्यादाचामेति कथमिति लवणमिति अन्त्यादाचामेति कथमिति लवण-

मिति अभिप्रास्यैतदथ मा उपसीदथा इति तद्ध तथा चकार तच्छश्वत् संवर्तते । त९ होवाचात्र वाव किल स सोम्येतमणिमानं न निभालयसे अत्रैव किलेति ॥ २ ॥

स य एषोऽणिमैतदात्म्यमिद९ सर्वं तत्सत्य९ स आत्माऽ तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥ १३ ॥

भा.– कथं दृश्येत तच्छक्तिः पृथक्तस्य ह्यदर्शने ।
इति भावयुतं प्राह पुत्रमुद्दालकः पुनः ॥

यथाप्सु लवणं व्याप्तं रसदृष्टौ न दृश्यते ।
एवं चेतनगो विष्णुस्तद्भिन्नोऽपि न दृश्यते ॥ १३ ॥

**भाष्यविवृतिः**– वस्तुवैचित्र्येण तदनुपपत्तिं दृष्टान्तप्रदर्शनेन घटयते– **लवणमेतदित्यादिना** ॥ **दोपा** रात्रौ । तल्लवणं कागादिति जिज्ञासायां वेदपुरुषः स्वयमाह– **तच्छश्वदिति** ॥ तल्लवणं तत्रोदके शश्वत् साकल्येन वर्तते । तल्लवणं न निभालयसे । तदत्रोदके वाव वै किल सत् । पुनरत्रैव किलेति विस्मयन्न[1]वधारयति । शङ्कितानुपपत्तिं परिहृत्योक्तं सूक्तमित्याह– **सय इति** ॥ तत्प्रश्नवाक्यं[2] प्रश्नपरिहाराभिप्रायं व्यञ्जयन् व्याचष्टे– **कथमित्यादिना** ॥[3] एवं सर्वनियन्ता कथं दृश्येत कथं वा प्राप्नुयामिति भावेनाह– **भूय एवमेति** ॥ **इति त्रयोदशः खण्डः** ॥

---

१. विस्मयमवधारयतीति खपाठः ।

२. तत्प्रकरणमिति खपाठः ।

३. यदि तत् सज्जगतो मूलं तर्हि कस्मान्नोपलभ्यत इत्येतद् दृष्टान्तेन विज्ञापयात्विति प्रश्नाभिप्रायवर्णनमयुक्तम् । त्वन्मते सन् घट इत्यादावपि अधिष्टानसदर्थोपलब्धेरेवं प्रश्नायोगात् । परमसूक्ष्मत्वान्न दृश्यत इति पूर्वखण्ड एवोक्तत्वाच्चेति ।

## अथ चतुर्दशः खण्डः

## गुरूपदेशादेव भगवत्प्राप्तिः

उप.– यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत् स यथा तत्र प्राङ्वोदङ्वाऽधराङ्वा प्राध्मायीताऽभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः ॥ १ ॥

तस्य यथाऽभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति स ग्रामाद्ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसम्पद्येतैमेवेहा-चार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यत इति ॥ २ ॥

स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्माऽ तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥ १४ ॥

भा.– कथं स ज्ञायते विष्णुर्भिन्न इत्यत्र चाब्रवीत् ।
यथैवान्योपदेशेन बद्धाक्षः स्वगृहं[1] व्रजेत् ॥
तथाऽऽचार्योपदेशेन भिन्नमीशं व्रजेत् पुमान् ॥ १४ ॥

भाष्यविवृतिः– आचार्योपदेशस्तद्दर्शनकारणमिति सदृष्टान्तमाह– **यथा सोम्यपुरुषमित्यादिना** ॥ **ततो** गन्धारदेशेभ्योऽन्यत्र **अतिजने** निर्जनेऽरण्ये विसृजेत् । बन्दिकृत् । प्रब्रूयात् दैवादागतः कृपावान् । **एतां दिशं** एतस्यां दिशि । वेदमुक्ताविद्यापटलः यावत्प्रारब्धकर्मणो न विमोक्ष्येत एवं दर्शनं प्राप्तिकारणमुपदिश्य यदुक्तं नियामकान्नियम्यो भिन्न इति तत्तथैवेत्याह– **सय इति** ॥

---

१. 'स्वं गृहं' ह.पाठः ।

तद्वाक्यजातं प्रश्नपरिहाराभिप्रायं व्यञ्जयन् व्याचष्टे– कथं सज्ञायते इत्यादिना ॥ जीवस्यास्वातन्त्र्यं स्पष्टं बोधयेत्याह– भूय एव मेति ॥ इति चतुर्दशः खण्डः ॥

## अथ पञ्चदशः खण्डः

## मनुष्यस्यास्वातन्त्र्यविषये मरणावस्थानिदर्शनम्

**उप.– पुरुषꣳ सोम्योपतापिनं ज्ञातयः पर्युपासते जानासि मां जानासि मामिति तस्य यावन्न वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावज्जानाति ॥ १ ॥**

**अथ यदास्य वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामथ न जानाति ॥ २ ॥**

**स एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्माऽतत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥ १५ ॥**

**भा.– यथा पुंसोऽस्वतन्त्रत्वं तज्ज्ञापयतु मा भवान् ।**
**इत्युक्त आह ज्ञाने हि दृष्टैवास्यास्वतन्त्रता ॥ १५ ॥**

**भाष्यविवृतिः**– तदन्वयव्यतिरेकाभ्यां बोधयति **पुरुषमित्यादिना** ॥ जानासि मामिति ब्रुवन्तः । एवं जीवस्य पराधीनत्वं स्पष्टं प्रबोध्य यदुक्तम् सय इति तस्य नियम्याद्भिन्नत्वं तत्सुस्थमित्याह– **सय इति** ॥

तद्वाक्यजातं प्रश्नपरिहाराभिप्रायं व्यञ्जयन् स्पष्टं व्याचष्टे– **यथेत्यादिना** ॥ स्वतो भिन्नं सर्वनियामकं परमात्मानमात्मानं मन्यमानस्य भवन् दोषः कीदृशः । यद्भयादात्मनस्तद्भेदावगतावप्रमत्तेन भवितव्यमित्याशावान् पृच्छति– **भूय एव मेति** ॥ **अथ पञ्चदशः खण्डः** ॥

## अथ षोडशः खण्डः

### अभेदज्ञानस्यानर्थकारित्वे चोरदृष्टान्तः

उप.– पुरुषं सोम्योत हस्तगृहीतमानयन्ति अपहार्षीत् स्तेयमकार्षीत् परशुमस्मै तपतेति। स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसन्धोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते ॥ १ ॥

अथ यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते । स सत्याभिसन्धः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते ॥ २ ॥

स यथा तत्र नादाह्येतैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्माऽ-तत्त्वमसि श्वेतकेतो इति तद्धास्य विजज्ञाविति तद्धास्य विजज्ञाविति ॥ ३ ॥ १६ ॥

॥ इति श्रीमच्छान्दोग्योपनिषदि षष्ठोऽध्यायः ॥

भा.– अभेदज्ञानिनां दोषः कीदृशः स्यादितीर्यते ।
प्राह यस्मात् परस्वानां हर्ता राज्ञा निहन्यते ॥

किमु राज्ञोऽपहर्तैवं ब्रह्मस्तेनो निहन्यते ।
सर्वेषां शास्तृ यद्ब्रह्म तत्स्वरूपतया स्मरन् ॥

ब्रह्मस्तेनो निहन्येत तमस्यन्धे सदैव हि ।
दोषा ह्यज्ञानपूर्वास्तु वध्वा पुरुषमीशितुः ॥

विष्णोर्हर्तेति बाधन्ते चाभिमानकृतास्पदम् ।
ततो विचारयन्त्येनं देवता हरिणा सह ॥

नाहं विष्णुर्न स्वतन्त्रो न च पूर्णगुणोऽस्म्यहम् ।
मम स्वामी हरिर्नित्यं स्वतन्त्रः पूर्णसद्गुणः ॥

एवं दार्ढ्यं शपथवद्यदा कुर्यादयं तदा ।
जानन्नेव न तापी स्यादन्तरानन्दभोगतः ॥

तदा तेभ्यो मोचयित्वा हत्वा मिथ्याभिशंसिनः ।
स्वकीयं कुरुते विष्णुरन्यथा तैस्सह प्रभुः ॥

तमस्यन्धे पातयति महाकारागृहोपमे ।
महान्धे वा पातयति हस्तच्छेदादिसंमिते ॥

ततोऽधरे वा तद्योग्यं दृढाभेदं वधोपमे ।
तस्मादाचार्यतो ज्ञात्वा विष्णोर्भेदेन पूर्णताम् ॥
उपासीत ततो मुक्तिं याति नास्त्यत्र संशयः ॥

इत्यादि सामसंहितायाम् ।

**भाष्यविवृतिः**– आत्मानमीश्वरं मन्यमानस्य भवन्तमनर्थं दृष्टान्तेनाह– **पुरुषं सोम्योत हस्त गृहीतमित्यादिना** ॥ आनयन्ति राजभटाः । परद्रव्यमपहार्षीत् अपरोक्षतः ।[१] स्तेयमकार्षीत्परोक्षत इति वदन्तः । अपहारादिकं नाकार्षमिति वदन्तं प्रतिवदन्ति । **परशुमस्मै तपतेति** ॥ अनृतमसत्यम् । **स** अपहाराद्यकर्त्ता तत्र यथा न दह्यते एवमेव भेदज्ञानी तप्तपरशुपरीक्षायां न दह्येत । तथा च यदुक्तं सर्वं भगवदधीनं त्वं च भगवदधीनः । स नियंतृत्वादिगुणक इति तत्तथैवेत्याह– **ऐतदात्म्यमिति** ॥ एवं पित्रोपदिष्टः श्वेतकेतुर्विगलिताभेदमोहो यदुपदिष्टं भगवत्प्राधान्यादि तदबाधितं बुबुधे इत्याह– **तद्धास्येति** ॥

१. पश्यतोहरत्वमपहारः ।

तद्वाक्यजातं प्रश्नपरिहाराशयं व्यञ्जयन् व्याचष्टे– **अभेदेति** ॥[१] ब्रह्मस्तेनत्वस्वरूपं निरूपयन् ब्रह्मस्तेनो निहन्यत इत्युक्तफलं विशदमाह– **सर्वेषामिति** ॥ ब्रह्मस्तेनस्य तमसि हननप्रकारं निरूपयति**दोषाः दोषाभिमानिन इति** ॥[२] अहं ब्रह्मैवेत्यभिमाने कृतास्पदम्। **जानन्नेव** तत्वज्ञान्येव । अन्तरानन्दरूपभगवदनुभवतः । अब्रह्मस्तेनं ब्रह्मस्तेन इति मिथ्याभिशंसिनः ।

## "स्वमपीतोभवति" इति श्रुतेरभेदपरत्वनिरासः

भा.– **'स्वयम्भूरिति विष्णुजत्वाद्विरिञ्च उच्यते' । न हि विरिञ्चादेव विरिञ्चो जातः । 'यो ब्रह्माणं विदधाति पूर्वम्' इत्यादि श्रुतेः । आत्मा भगवान् । ततो भूतत्वादात्मभूः । 'दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवान्' इति वचनात् । अ इति विष्णुस्तज्जातत्वादजः 'अ इति ब्रह्म' इत्यादि श्रुतेः । 'वासुदेवात् परो नैव ब्रह्मशब्दोदितो भवेत्' इत्यादेश्च । अतः स्वशब्दो विष्णावेव प्रसिद्धः । ततः स्वमपीतो भवतीति युज्यते ।**

**भाष्यविवृतिः**– स्वमपीत इति स्वशब्दः स्वातन्त्र्यात्स्व इति भगवत्परतया व्याख्यातः । तद्युक्त्याच समर्थयते– **स्वयम्भूरिति** ॥ विरिञ्चो विष्णुजत्वाद्धि स्वयंभूरित्युच्यते। स्वयंशब्दो विष्णुवाची तावत् । न स्यात्। एकस्यैव कार्यकारणभावनिर्वाहार्थं स्वापेक्षया पूर्वं सदसद्भावयोर्विरुद्धयोरयोगादित्याशयवानाह– **न हीति** ॥ ब्रह्मा विष्णुज इति च

१. यदि वागादिलयक्रमेण मरिष्यतो मुमुक्षतश्च तुल्या सत्सम्पत्तिस्तर्हि तत्र विद्वान् सम्पन्नो नावर्तते आवर्तते त्वविद्वानित्यत्र किं कारणमिति जिज्ञासायां सत्यब्रह्मत्वाभिसन्धित्यागात्यागौ तत्र कारण-मिति प्रदर्शनार्थं पुरुषं सोम्य' इत्यादिवाक्यं पठ्यत इत्यसत् । दूषयिष्यमाणत्वात् ।

२. दोषाभिमानिनो देवा वायुकिङ्करा इत्यर्थः ।

कुतः । येन स्वयंशब्दस्य विष्णुवाचित्वसिद्धौ तत्पर्यायस्वशब्दोऽपि विष्णुवाची सिध्येदित्यतस्तच्छ्रुत्या समर्थयते– **य इति** ॥ नन्वात्मभूत्वाद्ब्रह्मणः कथं विष्णुजत्वमित्यतस्तां शङ्कां तच्छब्दनिरुक्त्या परिहरति– **आत्मेति** ॥ भवेदेतद्भगवत आत्मशब्दावाच्यत्वे सिद्धे तदेवकुत इत्यत आह– **दत्तमिति** ॥ ननु ब्रह्मणो न जायत इत्यजत्वात् कथं विष्णुजातत्वमिति तं शब्दं निर्वक्ति– **अ इति** ॥ विष्णोरकारवाच्यत्वं कुतो येनोक्तं निर्वचनं सिध्येदित्यतस्तत्समर्थयते– **अ इति ब्रह्मेति** ॥

नन्वत्र ब्रह्माकारवाच्यं प्रतीयते । न विष्णुरित्यतो आह– **वासुदेवादिति** । आदिशब्देन परमं यो महद्ब्रह्मेत्यादि गृह्यते । स्वशब्दस्य विष्णुवाचित्वं प्रसाध्योपसंहरति– **अत इति** ॥ नन्वात्मात्मीयधनवाची स्वशब्द इत्यात्मादिष्वपि प्रसिद्धेः कथं विष्णावेव प्रसिद्धिरित्यन्ययोगव्यवच्छेद इति चेन्न । स्वातन्त्र्यार्थस्य विष्णावेव प्रसिद्धेः । तथाच स्वमपीतो भवतीति व्याख्यानं युक्तमित्याह– **तत इति** ॥

**भा.– अप्ययो नामाविज्ञेयत्वेन प्रवेशः ।**

**अविज्ञातं प्रविष्टं यदपीतमिति कीर्त्यते ।**
**यथा नद्यः समुद्रे तु यथा विष्णुं लये प्रजाः ॥** इति शब्दनिर्णये ।

**भाष्यविवृतिः**– अपीतो भवत्येकीभवतीत्यर्थत्वात् कथं प्राप्तो भवतीति व्याख्येत्यतः पदार्थकथनपूर्वं प्रतिजानीते– **अप्यय इति** ॥[१] तत्र प्रमाणमाह– **अविज्ञातमिति** ॥

---

१. ननु स्वशब्दस्य विष्णुपरत्वेऽप्यपीतशब्देनैक्यमुच्यते । यावदुक्तं भवत्येकीभवतीति तावदपीतो भवतीति । अतो अपीतो भवतीत्यस्य आप्नोतीति व्याख्यानं न युज्यते । तथासति इतो भवतीत्येव वक्तव्यतयाऽपीत्यस्य वैयर्थ्यापत्तेरिति चेन्न । त्वन्मते स्वशब्दस्याप्यैक्यपरत्वेनास्य वैयर्थ्यापत्तेः । किञ्च किमपीतशब्दस्य खण्डवृत्तिमाश्रित्यैक्यार्थत्वमुच्यते उतावयववृत्तिम् । नाऽद्यः । अपीत इत्यस्य भवतेश्चाकर्मकत्वात् श्रुतद्वितीयायोगात् । अश्रुततृतीयाकल्पनप्रसङ्गाच्च । द्वितीयेतु नैक्यमस्माल्लभ्यत

**भा.– न च जीवस्य तद्भावोऽस्ति । उत्थितस्य सुप्तिसंसारयोः परामर्शदर्शनात् । 'अहं विश्वं भुवनमभ्यभवाम्' 'आजन्ममरणं स्मृत्वा मुक्ता हर्षमवाप्नुयुः' इति तद्भावस्यापरामर्शाच्च । 'प्राज्ञेनात्मना संपरिष्वक्तो न वाह्यं किञ्चन वेद नान्तरम्' इत्यादिश्रुतेश्च । 'सुपुप्त्यु-त्क्रान्त्योर्भेदेन' इति च भगवद्वचनम् ।**

**भाष्यविवृतिः**– एकीभवतीत्यर्थोऽत्र कस्मान्न स्यादित्यतस्तत्र बाधकं वक्तुं प्रतिजानीते– **न चेति** ॥ कुतो नेत्यत आह– **उत्थितस्येति** ॥ सुप्तेः संसाराच्चोत्थितस्य । ऐक्य इत्यादौ योज्यम् । संसारादुत्थितस्य संसार-परामर्शोऽस्तीति कुतः । स ऐक्ये विरुद्धयेत्यतस्तत्र श्रुतिं पठति– **आजन्मेति** ॥ आजन्ममरणं जन्मारभ्य मरणपर्यन्तं कृताः क्रियाः स्मृत्वा ।[१] एतावन्तं कालं सुखं सुप्तोऽस्मीतिवदहमेतावन्तं कालं ब्रह्मी-भूतोऽस्मीति ब्रह्मत्वभावनस्य परामर्शाभावाच्च न सुप्तौ ब्रह्मत्वापत्ति-रित्याह– **तद्भावस्येति** ॥ सुप्तौ ब्रह्मणा परिष्वङ्गस्य श्रुतत्वाच्चापीतो भवतीत्यस्यैकीभवनं नैवार्थ इत्याह– **प्राज्ञेनेति** ॥ सुप्तौ भेदप्रतिपादकं सूत्रं च तत्र बाधकमाह– **सुपुप्तीति** ॥[२]

इत्याशवानाह- **अप्यय इति** । यद्यप्यत्र भाष्येऽपीतिर्नामेति वक्तव्यम् । तथाऽप्यय इति तत्समानार्थकशब्दनिर्वचनं ''तदन्येषामदर्शनम् । अप्ययोऽयं समुद्दिष्टो न स्वरूपैक्यता क्वचित्'' इति श्रुतिसूचनार्थम् । अदर्शनमदर्शनविशिष्टा प्राप्तिरिति श्रौतपदार्थः । अविज्ञेयत्वेन प्राप्तिरिति शेषः । अपिरपिधाने वर्तते । अयपयगतौ । ततश्चाविज्ञेयत्वेन तिरोधानेन गतिरप्ययशब्दार्थः । प्रवेशस्त्वर्थलब्धः ।

१. अत्र मुक्तज्ञानस्य स्मरणत्वं नाम पूर्वानुभूतार्थविपयीकरणोन्मुखत्वम् । अत एवेशस्य भक्तविपयकस्मरणं निरुक्तमन्यत्र । भक्तानां स्मरणं विष्णोर्नित्यज्ञप्तिस्वरूपतः । अनुग्रहोन्मुखत्वं तु नैवान्यत् क्वचिदिष्यते ॥ इति ।

२. ''प्राज्ञेनाऽत्मना सम्परिष्वक्तः'' ''प्राज्ञेनाऽत्मनाऽन्वारूढः'' इति सुपुप्त्युत्क्रान्ति-प्रकरणयोर्जीवस्येश्वराद् भेदेन व्यपदेशादिति सूत्रार्थः । श्रुतिसूत्रे मुक्तपरे च भवतः । सुप्तिप्रकरणस्य मुक्तिपरतयाः सूत्रकृतैव निर्णीतत्वात् ।

कुतः । येन स्वयंशब्दस्य विष्णुवाचित्वसिद्धौ तत्पर्यायस्वशब्दोऽपि विष्णुवाची सिध्येदित्यतस्तच्छ्रुत्या समर्थयते– **य इति** ॥ नन्वात्मभूत्वाद्ब्रह्मणः कथं विष्णुजत्वमित्यतस्तां शङ्कां तच्छब्दनिरुक्त्या परिहरति– **आत्मेति** ॥ भवेदेतद्भगवत आत्मशब्दावाच्यत्वे सिद्धे तदेवकुत इत्यत आह– **दत्तमिति** ॥ ननु ब्रह्मणो न जायत इत्यजत्वात् कथं विष्णुजातत्वमिति तं शब्दं निर्वक्ति– **अ इति** ॥ विष्णोरकारवाच्यत्वं कुतो येनोक्तं निर्वचनं सिध्येदित्यतस्तत्समर्थयते– **अ इति ब्रह्मेति** ॥

नन्वत्र ब्रह्माकारवाच्यं प्रतीयते । न विष्णुरित्यतो आह– **वासुदेवादिति** । आदिशब्देन परमं यो महद्ब्रह्मेत्यादि गृह्यते । स्वशब्दस्य विष्णुवाचित्वं प्रसाध्योपसंहरति– **अत इति** ॥ नन्वात्मात्मीयधनवाची स्वशब्द इत्यात्मादिष्वपि प्रसिद्धेः कथं विष्णावेव प्रसिद्धिरित्यन्ययोगव्यवच्छेद इति चेन्न । स्वातन्त्र्यार्थस्य विष्णावेव प्रसिद्धेः । तथाच स्वमपीतो भवतीति व्याख्यानं युक्तमित्याह– **तत इति** ॥

**भा.– अप्ययो नामाविज्ञेयत्वेन प्रवेशः ।**

**अविज्ञातं प्रविष्टं यदपीतमिति कीर्त्यते ।**
**यथा नद्यः समुद्रे तु यथा विष्णुं लये प्रजाः ॥** इति शब्दनिर्णये ।

**भाष्यविवृतिः**– अपीतो भवत्येकीभवतीत्यर्थत्वात् कथं प्राप्तो भवतीति व्याख्येत्यतः पदार्थकथनपूर्वं प्रतिजानीते– **अप्यय इति** ॥[१] तत्र प्रमाणमाह– **अविज्ञातमिति** ॥

१. ननु स्वशब्दस्य विष्णुपरत्वेऽप्यपीतशब्देनैक्यमुच्यते । यावदुक्तं भवत्येकीभवतीति तावदपीतो भवतीति । अतो अपीतो भवतीत्यस्य आप्नोतीति व्याख्यानं न युज्यते । तथासति इतो भवतीत्येव वक्तव्यतयाऽपीत्यस्य वैयर्थ्यापत्तेरिति चेन्न । त्वन्मते स्वशब्दस्याप्यैक्यपरत्वेनास्य वैयर्थ्यापत्तेः । किञ्च किमपीतशब्दस्य खण्डवृत्तिमाश्रित्यैक्यार्थत्वमुच्यते उतावयववृत्तिम् । नाऽद्यः । अपीत इत्यस्य भवतेश्चाकर्मकत्वात् श्रुतद्वितीयायोगात् । अश्रुततृतीयाकल्पनप्रसङ्गाच्च । द्वितीयेतु नैक्यमस्माल्लभ्यत

**भा.– न च जीवस्य तद्भावोऽस्ति । उत्थितस्य सुप्तिसंसारयोः परामर्शदर्शनात् । 'अहं विश्वं भुवनमभ्यभवाम्' 'आजन्ममरणं स्मृत्वा मुक्ता हर्षमवाप्नुयुः' इति तद्भावस्यापरामर्शाच्च । 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' इत्यादिश्रुतेश्च । 'सुषुप्त्युत्क्रान्त्योर्भेदेन' इति च भगवद्वचनम् ।**

**भाष्यविवृतिः**– एकीभवतीत्यर्थोऽत्र कस्मान्न स्यादित्यतस्तत्र बाधकं वक्तुं प्रतिजानीते– **न चेति** ।। कुतो नेत्यत आह– **उत्थितस्येति** ।। सुप्तेः संसाराच्चोत्थितस्य । ऐक्य इत्यादौ योज्यम् । संसारादुत्थितस्य संसार-परामर्शोऽस्तीति कुतः । स ऐक्ये विरुद्धयेत्यतस्तत्र श्रुतिं पठति– **आजन्मेति** ।। आजन्ममरणं जन्मारभ्य मरणपर्यन्तं कृताः क्रियाः स्मृत्वा ।[१] एतावन्तं कालं सुखं सुप्तोऽस्मीतिवदहमेतावन्तं कालं ब्रह्मी-भूतोऽस्मीति ब्रह्मत्वभावनस्य परामर्शाभावाच्च न सुप्तौ ब्रह्मत्वापत्ति-रित्याह– **तद्भावस्येति** ।। सुप्तौ ब्रह्मणा परिष्वङ्गस्य श्रुतत्वाच्चापीतो भवतीत्यस्यैकीभवनं नैवार्थ इत्याह– **प्राज्ञेनेति** ।। सुप्तौ भेदप्रतिपादकं सूत्रं च तत्र बाधकमाह– **सुषुप्तीति** ।।[२]

---

इत्याशयवानाह- **अप्यय इति** । यद्यप्यत्र भाष्येऽपीतिर्नामेति वक्तव्यम् । तथाऽप्यय इति तत्समानार्थकशब्दनिर्वचनं "तदन्येषामदर्शनम् । अप्ययोऽयं समुद्दिष्टो न स्वरूपैक्यता क्वचित्" इति श्रुतिसूचनार्थम् । अदर्शनमदर्शनविशिष्टा प्राप्तिरिति श्रौतपदार्थः । अविज्ञेयत्वेन प्राप्तिरिति शेषः । अपिरपिधाने वर्तते । अयपयगतौ । ततश्चाविज्ञेयत्वेन तिरोधानेन गतिरप्ययशब्दार्थः । प्रवेशस्त्वर्थलब्धः ।

१. अत्र मुक्तज्ञानस्य स्मरणत्वं नाम पूर्वानुभूतार्थविषयीकरणोन्मुखत्वम् । अत एवेशस्य भक्तविषयकस्मरणं निरुक्तमन्यत्र । भक्तानां स्मरणं विष्णोर्नित्यज्ञप्तिस्वरूपतः । अनुग्रहोन्मुखत्वं तु नैवान्यत् क्वचिदिष्यते ।। इति ।

२. "प्राज्ञेनाऽत्मना सम्परिष्वक्तः" "प्राज्ञेनाऽत्मनाऽन्वारूढः" इति सुषुप्त्युत्क्रान्ति-प्रकरणयोर्जीवस्येश्वराद् भेदेन व्यपदेशादिति सूत्रार्थः । श्रुतिसूत्रे मुक्तपरे च भवतः । सुप्तिप्रकरणस्य मुक्तिपरतयाः सूत्रकृतैव निर्णीतत्वात् ।

## नवदृष्टान्ता अपि भेदपरा एव

भा.– 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः'। 'सति सम्पद्य न विदुः सति सम्पत्स्यामहे इति'। 'सत आगम्य न विदुः सत आगच्छामहे इति'। 'स एष जीवेनात्मनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति'। 'अण्व्य इवेमा धाना भगव इत्यासामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किञ्चन भगव इति यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान्यग्रोधस्तिष्ठति'। 'लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति स ह तथा चकार तं होवाच यद्दोषा लवणमेतदुदकेऽवधा अङ्ग तदाहरेति तद्धावमृश्य न विवेद यथा विलीनमेवाङ्गास्यान्तादाचामेति कथमिति लवणमिति। मध्यादाचामेति कथमिति लवणमित्यन्त्यादाचामेति कथमिति लवणमिति'। 'अत्र वाव किल सत्सोम्य[१] न निभालयसेऽत्रैव किलेति'। 'एतां दिशं गन्धारा एतां दिशं व्रजेति'। 'तेजः परस्यां देवतायां तावन्न जानाति'। 'अपहार्षीत् स्तेनमकार्षीत्'। इत्यादि नवकृत्वो[२] भिन्नस्य वस्तुनो भेदापरिज्ञानादनर्थं सूक्ष्मत्वा-द्भेदस्य दुर्ज्ञेयत्वं च सदृष्टान्तं तात्पर्येणाह।

भाष्यविवृतिः– नवस्थानगतवाक्यपर्यालोचनया च नापीतो भवतीत्यस्यैकीभवनमर्थ इत्याह– **सन्मूला इत्यादिना**॥ योजनातु सन्मूला इत्यारभ्य स्तेयमकार्षीरित्यादिवाक्यं भिन्नस्य वस्तुनो ब्रह्मणो भेदापरिज्ञानादनर्थं तस्य सूक्ष्मत्वात्तद्भेदस्य दुर्विज्ञेयत्वं च नवकृत्वः–**सदृष्टान्तं तात्पर्येणाहेति**।[३]

१. ''किल सोम्य'' हृत्पाठः। २. ''नवकृत्वोऽपि'' हृत्पाठः।

३. नवकृत्वः सदृष्टान्तमिति तात्पर्यद्योतकम्। अभ्यासोपपत्योस्तात्पर्यलिङ्गत्वात्। नवकृत्व इत्युक्तोऽभ्यासो भेदमात्रे द्रष्टव्यः।

## नैकोऽपि दृष्टान्तोऽभेदपरः

**भा.– न चाभेदे कश्चिद् दृष्टान्त उक्तः । न हि शकुनिसूत्रयोर्नानावृक्षरसानां नदीसमुद्रयोः वृक्षपरमात्मनोः धानापरमात्मनोः लवणोदकयोः पुरुषगन्धारयोर्नियतज्ञानानियतज्ञानयोः चोरापह्रियमाणयोश्चाभेदोऽस्ति ।**

**भाष्यविवृतिः–** यत्परेषां स्थाननवकमप्यभेदमेव सतात्पर्यं दृष्टान्तैराहेति। तदाशङ्क्य निषेधति– **न चेति** ॥ तदेवोदाहृत्य दर्शयति– **नहीत्यादिना** ॥ नियतं ज्ञानं यस्यासौ नियतज्ञानो ज्ञः । अनियतं ज्ञानं यस्यासौ अनियतज्ञानः । तथा च नियतज्ञानानियतज्ञानयोरज्ञप्राणादिनियामकयोरित्यर्थः ।[१]

## विष्णुसर्वोत्तमत्वं सकलशास्त्राणां मुख्यतात्पर्यम्

**भा.– महातात्पर्यविरोधश्चाभेदे । विष्णोः परमोत्कर्षे हि सर्वप्रमाणानां महातात्पर्यं भगवताऽभिहितम् ।**

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।[२]**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥**

**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥**

**यस्माद् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥**

---

१. नियतं पराधीनं ज्ञानं यस्यासौ नियतज्ञानो जीवः । अनियतमपराधीनं यस्यासावनियतज्ञानो भगवांस्तयोः इति वा ।

२. पूर्वार्धमधिकं पाठान्तरे ।

**यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।**
**स सर्वविद्भजति मां सर्वभावेन भारत ।।**

**इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।**
**एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ।। इति ।**

**भाष्यविवृतिः**– सदेव सोम्येत्यादिप्रकरणस्याभेदपरत्वे सर्वागममहातात्पर्यविरोधं चाह– **महेति** ।। ननु सर्वागमानां कुत्र तात्पर्यं तद्विरोधोऽस्य प्रकरणस्याभेदपरत्वे इत्यत आह– **विष्णोरिति** ।। भगवताऽभिहितं सर्वागमानां विष्णोः सर्वोत्कर्षं परत्वप्रतिपादकम् । किं तद्वाक्यमिति जिज्ञासायां तदुदाहरति– **द्वाविमाविति** ।। **लोके** जगति ।। **इमौ** प्रमाणसिद्धौ । **द्वौ पुरुषौ** चेतनौ । तावेवाह– **क्षरः सर्वाणीति** ।। शरीररक्षणात् क्षराणि ब्रह्मादिसर्वभूतानि । अक्षरदेहत्वादक्षरः कूटवदाकाशवन्निर्विकारतया तिष्ठतीति कूटस्थो लक्ष्मीः । उत्तमपुरुषस्त्वनयोः कुत्र प्रविशतीत्यत आह– **उत्तम इति** ।। उत्तमपुरुषस्तु क्षराक्षराभ्यामन्यः। नत्वनयोरेकः । उभाभ्यामन्यः सोऽस्तीति कुत इत्यतस्तत्सद्भावे आगमं प्रमाणयति– **परमात्मेति** ।। तत्सद्भावे युक्तिं चाह– **य इति** ।। सर्व[१]जगत्केनचिन्नियतमस्वतन्त्रत्वादिति युक्तिरनेन सूचिता भवति । अनेनान्तर्यामिब्रह्माणं वा सूचितं भवति । जगति प्रविश्य नियामकत्वे दह्यमानदेहान्तर्गतवज्जगन्नाशे नाशः स्यादित्यतो न स्यादित्याह– **अव्यय इति** ।। ऐश्वर्यं तत्र हेतुमाह– **ईश्वर इति** ।। उत्तमपुरुष आत्मनोऽन्य इति प्रतीतिं निवारयन् आह– **यस्मादिति** ।। क्षरं चातीतः । लोके पौरुषेयग्रन्थे । एवमुक्तप्रकारेण पुरुषोत्तम इति संज्ञामात्रमित्यसंमूढः । तस्यैव सर्वशास्त्रार्थत्वात् सर्ववित् । **सर्वभावेन** सर्वप्रकारेण । यदुक्तं स्वस्य सर्वोत्कृष्ठत्वमेव सर्वागमतात्पर्यगोचरमिति । तज्ज्ञातुः फलोक्त्या समर्थयते–

२. सर्वं जगदिति खपाठः ।

एतदिति ।। परोक्षतो बुध्वा बुद्धिमानपरोक्षज्ञानी स्यादपरोक्षज्ञानेन च कृतकृत्यो मुक्तश्च स्यात् ।[१]

भा.– **भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ।।**

**ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।**
**यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ।।**

**मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।।**

**भाष्यविवृतिः**– यज्ञादिभोक्तृसर्वलोकमहेश्वरत्वज्ञानी शान्तिं मुक्तिं ऋच्छतीत्युक्त्याच विष्णोः सर्वोत्कर्ष एव सर्वागमानां महातात्पार्यमित्याह– **भोक्तारमिति** ।। 'ज्ञानं तेऽहमिति' प्रतिज्ञाय यज्ज्ञात्वेह वेदादिषु ज्ञातव्यं नावशिष्यत इत्युक्त्वा 'मत्तः परतरं नान्यत्' 'मयि सर्वम्' इत्युक्त्याच विष्णोरुत्कर्ष एव महातात्पर्यं सर्वागमानामित्याह– **ज्ञानमित्यादिना** ।।[२]

भा.– **राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।**
**प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ।।**

**अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ।**
**अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ।।**

---

१. अत्र भगवतो वासुदेवस्य क्षराक्षरोत्तमत्वे पौरुषेयापौरुषेयागमस्य महातात्पर्यमस्तीति 'यो मामिति' वेत्तुः फलकथनादवगम्यते ।

२. अत्र ज्ञानविज्ञानशब्दौ ज्ञेयविज्ञेयभगवन्माहात्म्यपरौ । अहमेव परतरो मत्तोऽन्यत् परतरं न किञ्चिदपीत्यर्थः । तेन तरपोऽन्यशब्दस्य च न वैयर्थ्यम् ।

मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥

'न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्' ॥

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥

यो मामजामनादिं च वेत्ति लोकमहेश्वरम् ।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥

**भाष्यविवृतिः**– **राजविद्या** विद्यानां राजा । सर्वविद्या एतद्विद्यानुसारिण्यः इत्युक्त्वा 'अश्रद्धधाना' इति तत्र तात्पर्यरहितानामनर्थमुक्त्वा 'मया ततमिदम्' इत्यादिना विद्योक्त्याच विष्णोः सर्वोत्कर्ष एव सर्वागमानां महातात्पर्यमित्यवसीयत इत्याह– **राजविद्येत्यादिना** ॥ अवजानन्तीत्यादिना भगवंतमवजानतामनर्थमुक्त्वा महात्मानो मुमुक्षुवस्तु मां भूतादिं भजन्त इत्युक्त्याचोक्तमवसीयत इत्याह– **अवजानन्तीत्यादिना** ॥ अजानादित्वलोकमहेश्वरत्ववेत्तुः सर्वपापप्रहाणोक्त्या च विष्णोः सर्वोत्कर्ष एव सर्वागमानां महातात्पर्यमवसीयत इत्याह– **योमामित्यादिना** ॥[१]

---

१. अनश्रेष्टयिता अदिश्च सर्वस्येत्यनादिः अजत्वेन सिद्धेरितरस्य ।

भा.– परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥

मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत ॥

ये मां ज्ञात्वा गुणैः पूर्णं न चलन्ति ततः क्वचित् ।
तैरेवाप्यो न चैवान्यैरहं सर्वेश्वरेश्वरः ॥

ये तु मद्गुणसम्पूर्तौ ज्ञानस्नेहस्थिरात्मकाः ।
तेषां हस्तगतो मोक्षो मामेव स्मरतां सदा ॥

'ये मन्यन्ते गुणापूर्तिं तमस्तेषां परायणम्'

न च तेभ्यो प्रियो मह्यं यश्च स्याद्गुणपूर्तिवित् ।
स मामाप्नोति नियतं न च तस्मात् प्रियो मम ॥

प्रमाणान्यखिलान्येव तर्काश्चैतत्पराः सदा ।
एतद्विरुद्धं यन्मानं तर्कश्चाभास एव तु[१] ॥ इत्यादौ ॥

**भाष्यविवृतिः**– ''परं भूयः'' इति प्रतिज्ञाय ''यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः'' इति प्रशस्य मम योनिर्महद्ब्रह्मेत्युक्त्या चोक्तमवसीयत इत्याह– **परं भूय इत्यादिना** ॥ गुणसर्वसुपूर्णं ज्ञात्वा ततोऽचलतामेव तैरवाप्य इति मोक्षोक्त्या चोक्त एव सर्वागमानां तात्पर्यमवसीयत इत्याह– **य इति** ॥ भगवद्गुणपूर्त्तौ ज्ञानस्नेहस्थिरात्मकानां तेषां हस्तगतो मोक्ष इत्युक्त्याचोक्तमवसीयत इत्याह– **य इति** ॥ अपरथा तदुत्कर्षज्ञानेन मोक्षोक्त्यनुपपत्तेः । सकलसदागमगोचरस्य प्रमाणानीति

१. 'आभास एव सः' इपाठः ।

स्पष्टमुक्तेश्च । तर्को मीमांसा[१] इत्यादौ भवदुत्कर्ष एव सदागमानां महा-तात्पर्यं भगवताऽभिहितमिति योजना ।

**भा.– 'तं भूतिरिति देवा उपासाञ्चक्रिरे ते बभूवुस्तस्माद्धाप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसित्यभूतिरित्यसुरास्ते ह पराबभूवुः' ।**

**भूमैव देवः परमो ह्युपास्यो नैवाभूमा फलमेषां विधत्ते ।**
**तस्माद् भूमा गुणतो वै विशिष्टो यथा क्रतुः कर्ममध्ये विशिष्टः ॥**

**असुन्वन्तं समं जहि दूणाशं यो न मे मयः ।**
**अस्मभ्यमस्य वेदनं दद्धि सूरिश्चिदोहते ॥**

**'सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये' । 'एतावानस्य महिमा अतो ज्यायांश्च पूरुषः' । 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' ।**

**भाष्यविवृतिः**– विष्णूत्कर्ष एव सर्वागमानां महातात्पर्यमित्यत्र श्रुतीश्च पठतितं **भूतिरिति** ॥ पूर्ण इति । **भूमा** पूर्णः । **अभूमा** अपूर्णत्वेनो-पासितः । **गुणतः** गुणेभ्यः । भूमगुणस्यान्यगुणेभ्यो वैशिष्ट्यं नाम भूमगुणोपासकानां फलं ददाति नान्य इत्यर्थः । ननु विष्णुगुणाः परस्पर-मुत्तमाधमभाववन्तः इति । **यस्तेमयः** त्वत्प्रधानो न भवति । तेन **समं दूणाशम्** दुःखेन नाशवन्तमसुन्वन्तं जहि । **अस्य** सर्वोत्तमत्वस्य च वेदनं त्वमस्मभ्यं **दद्धि** देहि । किमर्थम् । **सूरिश्चित्** ज्ञान्येव मोक्षमोहते गच्छति ।[२] **विप्रराज्ये** विप्रप्रधानेषु यज्ञेषु **शवः** सुखमुद्दिश्य **गृणे** स्तौमि ।

१. यस्मादेवं भगवद्गुणपूर्तिज्ञानमेव तत्प्रीतिद्वारा मोक्षहेतुस्मान्मोक्षप्रयोजनकान्यखिलानि प्रमाणानि तर्काश्चैतत्परा एव । गुणपूर्णत्वज्ञानजननायैव प्रवृत्ता इत्यर्थः । तथा च श्रुतिः- 'न तादृशी प्रीतिरीड्यस्य विष्णोः'' इत्यादिका ।)

२. ओहाक् त्यगे संसारं त्यजति ।

एतावानस्य महिमोक्तः पुरुषस्तु ततो ज्यायान् इत्युक्त्या इह तमेवं विद्वान् सोऽमृतो भवतीत्युक्त्याच भगवदुत्कर्ष एवागमानां महातात्पर्यमित्यवसीयते ।

भा.– **सृष्टिः स्थितिश्च संहारो नियतिर्ज्ञानमावृतिः ।**
**बन्धमोक्षौ च कथ्यन्ते यस्योत्कर्षप्रसिद्धये ॥**

**यस्योत्कर्षप्रसिद्ध्यर्थं सर्वे वेदाश्च[१] युक्तयः ।**
**ज्ञात्वैव च यदुत्कर्षं मुच्यन्ते स हरिः परः ॥**

**'अद्यातमस्य महिमानमायवोऽनुष्टुवन्ति पूर्वथा' इत्यादिश्रुतिश्च विष्णोरुत्कर्षे महातात्पर्यं कथयति ।**

**महातत्परता विष्णोरुत्कर्षेऽवान्तरा ततः ।**
**अन्यत्र सर्ववाक्यानां युक्तीनां च विशेषतः ॥**

**इति ब्रह्माण्डे ।**

**भाष्यविवृतिः**– ननु तत्र तत्र सृष्ट्याद्युक्तेः कथं सर्वागमानां विष्णूत्कर्षे तात्पर्यमित्यतस्तस्य तात्पर्यमाह **सृष्टिरिति** ॥ तत्रैव वाक्यान्तरं पठति– **यस्येति** ॥ आश्वगतिसाधत्वादायवो वेदाः । **पूर्वथा** पूर्वमिव । अद्यातमस्याप्यस्य महिमानमनुष्टवन्ति । विष्णूत्कर्षे सर्वागमानां तात्पर्ये यज्ञाद्यसिद्धिरित्यतस्तद्घटयन्नाह– **महेति** ॥ ततः विष्णोरन्यत्र । **युक्तीनां** मीमांसानाम् ।

**भा.– 'ओं भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति' 'ओं ब्रह्मदृष्टिरुत्कर्षात्' इत्यादि च निर्णयात्मकं भगवद्वचनम् ।**

---

२. ''सर्ववेदाश्च'' पाठान्तरम् ।

**भाष्यविवृतिः–** भूम्नः क्रतुवज्ज्यायस्त्वं,[१] ब्रह्मदृष्टिरुत्कर्षादित्यत्रापि विष्णोः पूर्णत्वज्ञानेन[२] मोक्षोक्तेश्च विष्णोः सर्वोत्कर्ष एव सर्वागमानां महातात्पर्यमित्यवसीयते ।

## जीवब्रह्मैक्यस्य न शास्त्रतात्पर्यविषयता

**भा.– न च शारीरपराभेदे तात्पर्यमित्यत्र किञ्चिन्मानम् । अतत्त्वमसीति भेदस्य नवकृत्वोऽभ्यासाच्च । 'ओं भेदव्यपदेशात्' 'ओं भेदव्यपदेशाच्चान्यः' 'ओम् अनुपपत्तेस्तु न शरीरः' 'ओं शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' 'ओं पृथगुपदेशात्' इत्यादिना सर्वत्र भेदस्यैव भगवता निर्णीतत्वाच्च ।**

**भाष्यविवृतिः–** एवं विष्णोः सर्वोत्कर्ष एव सर्वागमानां महातात्पर्यं प्रसाध्यैक्ये[३] तात्पर्यं प्रमाणाभावेन दूषयति– **न चेति** ।। **किञ्चित्** एकमपि । ननु कथमभेदे तात्पर्याभावे मानाभावः । तत्वमसीत्युक्त्याऽभेदस्य नवकृत्वोऽभ्यासात्तस्यास्तत्र तात्पर्यं चावसीयत इत्यतस्तस्य पदविभागप्रदर्शनेन स्वानुगुण्यमेवाह– **अतत्वमसीति** ।। भगवता व्यासेनाभेदनिरासेन भेदस्यैव सूत्रैः साधितत्वाच्चापीतो भवतीत्येकीभवतीति नार्थ इत्याशयवान् भेदसाधकानि सूत्राणि पठति– **भेदेति** ।।

**भा.– 'पुरुष एवेदं सर्वमिति च पुरुषेणेदं सर्वं व्याप्तं यद्भूतं यच्च**

---

१. सर्वगुणेषु भूमगुणस्य ज्यायस्त्वं मुख्यतो वेदप्रतिपाद्यत्वमिति भगवतः पूर्णत्वदृष्टिरेवाधिक्येन वेदादिसाध्येति च सूत्रार्थोऽभिमतः ।

२. पूर्णत्वोपासनेन खपाठः ।

३. अद्वैवादिन स्त्वाहुः । शारीरपराभेद एव सर्वागमानां महातात्पर्यम् । ''तत्वमसि'' ''पुरुष एवेदं सर्वं'' ''एकमेवाद्वितीयम्'' ''अहं ब्रह्मास्मि'' ''योऽसौ सोऽहं'' इत्यादावभेदस्यैवोक्तेः । अभ्यासफलादिना तत्परत्वावगतेश्च । एवञ्चेतदनुरोधेनान्यस्याप्यागमस्य तत्रैव यथायथं तात्पर्यं वर्णनीयमिति तन्निराकरोति ।।

**भव्यम्' । न च भगवान् गोत्वेन मनुष्यत्वेन वा भवति । आ तृणादा करीषात् सर्वं भगवानिति मिथ्यादृष्टिरेषा । दधिसक्तवो घृतौदनमित्यादौ व्याप्तशब्दाभावेऽपि व्याप्तशब्दोऽवगम्यते । 'दधिसिक्ताः सक्तवो घृतसिक्तमोदनम्' इति च श्रुतिः । 'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्' इति । 'पुरुषेण हीदं नेनीयते' इति च । अतः सर्वप्रमाणानां भगवदुत्कर्ष एव महातात्पर्याच्छारीराभेदं वदतां महातात्पर्यविरोधः ।**

**भाष्यविवृतिः–** पुरुष एवेदं सर्वमित्यभेदमुक्त्वा तमेवं विद्वानमृतो भवतीत्यर्थवादोक्तेरभेदे कथमागमानां तात्पर्याभाव इत्यतो भेददृष्टेर्मिथ्या-दृष्टित्वप्रतिपादिकां तद्व्याख्यान रूपां श्रुतिं पठति– **पुरुष इति** ॥ ननु पुरुषत्वादिना कथं न भवति दर्शनादिति चेन्न । नासौ जजान न जायते न म्रियत इत्यादिना जननाभावोक्तेर्भवनस्याभिव्यक्तिरूपत्वाज्जन्मदर्शनस्य भ्रान्तित्वात् । न मे मोक्षो न बन्धनमिति तस्य नित्यमुक्तत्वाच्च ।[१] ननु व्याप्तशब्दाभावात् पुरुष एवेदं सर्वमित्यस्य पुरुषेण व्याप्तमिति कथं व्याख्यानमित्यतस्तद्दृष्टान्तोक्त्या घटयति– **दधिसक्तव इति** ॥[२] व्याप्त-शब्दोऽवगम्यते तदर्थोऽवगम्यते । तथा प्रकृतेऽपीति भावः । उदाहृतो-दाहरणे व्याप्तशब्दाभावेऽपि तदर्थोऽवगम्यत इत्युक्तम् । तद्ज्ञापिकां श्रुतिं पठति– **दधीति** ॥ एवं सर्वव्यापकत्वेन पुरुषः सर्वमित्युच्यते इति श्रुत्या व्याख्याय सर्वनेतृत्वेन च पुरुष एवेदं सर्वमित्युच्यत इति व्याख्यात्रीं श्रुतिं पठति– **पुरुष इति** ॥ महातात्पर्यविरोधश्चाभेद इत्युपक्रम्योपपादितं प्रमेयमुपसंहरति– **अत इति** ॥ आगमानां शारीराभेदे तात्पर्यभावे प्रमाणाभाव इत्यर्थः । महातात्पर्यात् महातात्पर्यभावे प्रमाणभावाच्चेत्यर्थः ।

१. वेदेशतीर्थीये अन्येत्वाहुरित्यादिना इदमेव व्याख्यानं परिगृहीतम् ।

२. "दधिसक्तवो घृतोदनम् "इत्यादौ वाक्ये यथा सिक्तशब्दाभावेऽपि दधिसिक्ताः सक्तवः घृतसिक्तमोदनं इति सिक्तशब्दोऽवगम्यते तथा प्रकृतेऽपि व्याप्तशब्दाभावेऽपि व्यपप्तशब्दोऽवगम्यते योग्यताबलादित्यर्थः ।

## जीवब्रह्मैक्यं सकलशास्त्रमुख्यतात्पर्यविरुद्धम्

भा.– अज्ञानदुःखासम्बन्धाद्यावज्ज्ञानं शरीरिणः ।
सर्वदा ज्ञानकं विष्णुमहमस्मीति ये विदुः ॥

अज्ञानदुःखमन्तारस्ततस्ते नीचतां विदुः[१] ।
विष्णोरुत्कर्षहातॄणां[२] नैव तेषां सुखं क्वचित् ॥

योऽन्यथा सन्तमीशेशं स्वरूपं प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणेशापहारिणा ॥

ऐकात्म्यं नाम यदिदं केचिद् ब्रूयुरनैपुणाः ।
शास्त्रतत्त्वमविज्ञाय तथा वादबला जनाः ॥

कामक्रोधाभिभूतत्वादहङ्कारवशं गताः ।
याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः ॥

ब्रह्मस्तेना निरानन्दा[३] अपक्वमनसोऽशिवाः ।
वैगुण्यमेव पश्यन्ति न गुणानि नियुञ्जते ॥
तेषां तमःशरीराणां तम एव परायणम् ॥

यतः स्वरूपतश्चान्यो[४] जातितः श्रुतितोऽर्थतः ।
कथमस्मि स इत्येव सम्बन्धः[५] स्यादसंहितः ॥ इति ।

भाष्यविवृतिः– ऐक्यज्ञानिना निन्दितत्वाच्च नाभेदे तात्पर्यमागमाना-

१. 'नीचतां विदः' पाठान्तरम् । २. 'उत्कर्षहर्तॄणां' पाठान्तरम् ।
३. 'निरालम्बा' हृपाठः । ४. 'सरूपतश्चान्यो' हृपाठः ।
५. 'सम्बद्धः' हृपाठः ।

मिति भावेनैक्यज्ञानिनिन्दकवाक्यानि पठति– **अज्ञानेति** ॥[१] **ऐकात्म्य-मिति** ॥ यावज्ज्ञानं तावच्छरीरिणो अज्ञानादिभिः सम्बन्धात् । स्वस्य रूपं स्वरूपमैकात्म्यमेकात्मत्वं एक एवात्मेति ये केचिद्ब्रूयुस्ते अनैपुणा अकुशलिनः । अन्यथाज्ञा इति यावत् । ननु तत्वमस्यहं ब्रह्मास्मीत्या-द्युक्तिमवलम्ब्यैकात्मवादित्वात् कथमैकात्म्यवादिनामन्यथाज्ञानित्वमित्यत उक्तं तत्वमसीत्यपि पदाङ्गीकारात्तत्वमस्यहं ब्रह्मास्मीत्यादि **शास्त्रहृदय-मविज्ञायेति** ॥ ननु द्वासुपर्णेत्यात्मबहुत्ववादिशास्त्रभावात् कथमेकात्मत्वं ब्रूयुरित्यत उक्तं **यथा तथ्यमिति** ॥ तत्वमस्यादिशास्त्राणां याथार्थ्य-मविज्ञाय द्वासुपर्णेत्यादि शास्त्रं व्यावहारिकात्म बहुत्वपरमिति शास्त्रदस्यवः ।

ननु सर्वज्ञाल्पज्ञत्वादिना विरुद्धयोर्जीवपरमात्मनोस्तत्वमस्याद्यर्थतयाऽपि कथमैक्यं ब्रूयुरित्यत उभयोर्गुणहान्या स्वरूपमात्रैक्यं ब्रूयुरित्याह– **वैगुण्य-मिति** ॥ **वैगुण्यं** गुणराहित्यं । **तमःशरीराणां** तमोगुणशरीराणां तामसा-नामिति यावत् । ननु गृहीतसङ्गतिकानां तत्वमस्यहं-ब्रह्मास्मित्यादीना-माकाङ्क्षासन्निधिवशादैक्यमर्थतया ज्ञायत एवेति कथं शास्त्रतत्वमविज्ञाये-त्युक्तिरित्यतो योग्यताविरहादैक्यार्थत्वानुपपत्तेरित्याह– **यत इति** ॥ ईश्वरः परममहान् जीवोऽणुरिति स्वरूपतः । ईश्वरत्वजातितः जीवत्वजातितः । द्वयोर्भेदप्रतिपादकद्वासुपर्णेत्यादितः श्रुतितः । ईश्वरो निष्प्रयोजनः जीवः सप्रयोजन इत्यर्थतः । सोऽस्मीत्यसंहितो योग्यतारहितः सम्बन्धः । कथमेवं स्यान्न कथंचिदपीत्यर्थः ।

भा.– **वहवः पुरुषा ब्रह्मन् उताहो एक एव तु ।**
**को ह्यत्र पुरुषश्रेष्ठस्तं भवान् वक्तुमर्हति ॥**

---

१. सर्वदा ज्ञानसुखरूपं विष्णुमहमस्मीति ये विदुस्ते विष्णोरज्ञानदुःखमन्तारः । कुतः शरीरिणोऽद्वैतज्ञानिनो यावज्ज्ञानं तावदज्ञानदुःखसम्बन्धात् । यत एवं ततस्ते नीचतां विदुरिति योजना । नीचता चोत्कर्षविरोधिनीति प्रसिद्धमिति भावः ।

वैशम्पायन उवाच–

नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ।
बहूनां पुरुषाणां हि यथैका योनिरुच्यते ॥
तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम् ॥
इति च मोक्षधर्मवचनाच्च ।

**भाष्यविवृतिः–** प्रश्नपूर्वं भेदस्य निर्णीतत्वेन तद्विरोधाच्च नैक्यमैक्यवाक्यार्थ इत्याह– **बहव इति ॥** ब्रह्मन् भेदवाक्याद्बहवः पुरुषाः ऐक्यवाक्यं तु प्रधानपुरुषपरमिति वा । उताहो ऐक्यवाक्यादेक एव पुरुषः द्वैतवाक्यं तु व्यावहारिकभेदपरमिति वा । ऐक्यवाक्यस्य श्रेष्ठपरत्वे आत्मसु कः श्रेष्ठः ? कथं हि श्रेष्ठस्तं भवान् वक्तुमर्हतीति प्रश्नवाक्यार्थः । एतन्मतं नेच्छन्ति विद्वांसः । एतदिति किमित्यतस्तद्दर्शयति– **यदेकं पुरुषं ब्रूयुरिति ॥** किं तु बहवः पुरुषाः श्रेष्ठस्त्वेकः कुरुकुलोद्वह । तत्परमैक्यवाक्यम् । बहूनां श्रेष्ठः स कः स कथं श्रेष्ट इत्यतस्योत्तरमाह– **बहूनामिति ॥** बहूनां पुरूषाणामात्मनां मध्ये या श्रेष्टा यथैका योनिरुच्यते श्रुत्यादौ तथा तं पूर्णं गुणाधिकं पुरुषमाख्यास्यामीति सम्बन्धः । इति भेदनिर्णायकमोक्षधर्मवचनविरोधाच्च नैक्यमैक्यवाक्यार्थः ।

**अभेदपरत्वेन प्रतीयमानानि वाक्यान्यपि वस्तुतः भेदपराणि**

भा.– हंनाम हन्यमानत्वाज्जीवस्य समुदाहृतम् ।
जीवादन्यो यतो विष्णुरहंनामा ततः स्मृतः ॥

स्मीति जीवः समुद्दिष्टः स्मीत्यल्पं सुमितत्वतः ।
पूर्णत्वादस्मिनामाऽसौ पूर्णपूर्णत्वहेतुतः ॥

**ब्रह्मास्मीत्युच्यते विष्णुर्बृहत्पूर्णो यतः सदा ।**
**असौ सूर्यगतो विष्णुर्दूरस्थत्वात् प्रकीर्तितः ।।**
**अहंनामा जीवगतो नित्याहेयत्वहेतुतः ।। इति ब्रह्माण्डे ।**

**भाष्यविवृतिः–** अहं ब्रह्मास्मीत्यादेर्योग्यताविरहादैक्यमर्थो न चेत्कथं तर्ह्यर्थ इत्यपेक्षयां वाक्यान्वयपक्षे तदित्यस्याव्ययत्वादव्ययस्य च सर्व-विभक्त्यर्थवत्वात् तदिव त्वमसि । तस्मात्वं जातोऽसि । तस्य त्वमसि । तदधीनोऽसीति । अहंब्रह्मास्मीत्यादेर्द्विकर्तृकत्वेनेश्वारवाक्यत्वे यथास्थित-मर्थत्वाज्जीवकर्तृकत्वेतु ब्रह्म मदन्तर्यामीत्यर्थमभिप्रेत्य पदान्वयपक्षेऽर्थमाह– **हंनामेत्यादिना ।।** स्मीति सुमितमिति । अल्पं सुमितत्वतः कारणात् ।[१] अस्मीत्यस्य पूर्णत्वमर्थश्चेत् ब्रह्मेत्यस्यापि स एवार्थ इत्यतः पुनरुक्तिं परिहरन्नर्थमाह– **पूर्णपूर्णत्वहेतुत इति ।।** हेतुमुपपादयति– **बृहदिति ।।**[२] तद्योऽहं सोऽसौ योऽसौ सोहमित्यत्र योऽसावित्यदःशब्दस्य सोऽहमित्यहं-शब्दस्य वाच्यार्थावाह[३]– **असाविति ।।**[४]

## मोक्षेऽपि विद्यमानजीवब्रह्मभेदो नातात्विकः

**भा.– 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' 'स उत्तम-पुरुषः'[५] 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा' 'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा' ।**

---

१. सुमितत्वकारणात् इति खपाठः ।

२. अनेन अहं जीवभिन्नत्वेनाहं नामा विष्णुः ब्रह्माऽस्मि बृहत्पूर्णः इति वाक्यं व्याख्यातं भवति ।

३. चार्थावाह इति खपाठः ।

४. एवं च सूर्यजीवान्तर्यामिणोरैक्यपरं तद्वाक्यमिति भावः । ब्रह्माण्डपुराणवचनाच्च सर्वप्रमाणानां भगवदुत्कर्ष एव महातात्पर्यमवगम्यत इति सम्बन्धः ।

५. ''उत्तमः पुरुषः'' पाठान्तरम् ।

यो वेद निहितं गुहायां परमे व्योमन् ।
सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता ॥

'एतमानन्दमयमात्मानमुपसङ्क्रम्य । इमाँल्लोकान् कामान्नी कामरूप्यनुसञ्चरन् । एतत्साम गायन्नास्ते' । 'स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवात्मनो यद्यत् कामयते तत्तत्सृजते' । 'ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः' । 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' । 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति' ।

नानात्वेनाभिसम्बद्धास्तदा तत्कालभाविना ।
प्रकृतौ करणातीताः स्वात्मन्येव व्यवस्थिताः ॥

संयोगः प्रकृतेर्नैषां मुक्तानां तत्त्वदर्शनात् ।
पुरुषान्यबहुत्वेन प्रतीता न प्रवर्तते ॥
प्रवर्तति पुनः सर्गे तेषां सा न प्रवर्तते ॥

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥

'न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः' इत्यादिश्रुतिस्मृतिषु सतात्पर्यं मुक्तानां विष्णोर्भेदस्यैवोक्तेः ।

**भाष्यविवृतिः**– ननु नोदाहृतानि वाक्यान्यस्माकं बाधकानि । तेषामाविद्यकभेदार्थत्वात् । अविद्यास्तमयावसरे[१] भेदप्रतिपादकं नास्ति यन्नो बोधकं स्यादित्यतस्तदवसरेऽपि भेदप्रतिपादकानि बहूनि वाक्यानि लपति–

१. अविद्यास्तमयावसाने इति खपाठः ।

ॐ **परञ्ज्योतिरिति ॥ परञ्ज्योतिः** परंब्रह्म । **उपसम्पद्य** ज्ञात्वा सम्प्राप्य । विद्याविधूननेनानन्दादि स्वेन रूपेण **निष्पद्यते** अभिव्यज्यते । स उत्तम-पुरुषः परञ्ज्योतिः । **सः** मुक्तः । तत्र **पर्येति** परितश्चरति । परञ्ज्योतिर्मुक्तो वा । **व्योमन्** व्योम्नि । ज्ञातेनैव ब्रह्मणा सह । **उपसंक्रम्य** संप्राप्य । लोकाश्रयत्वात् ज्ञानरूपत्वाद्वा **लोकम्** । कर्मण आशुतरविनाशित्वेऽपि तज्ज्ञातभगवत्प्रसादस्य नित्यत्वेन न ह्यस्य कर्म क्षीयत इति । यद्यत्कामयते तत्तत्सृजते कर्म यत्तदस्मादात्मनोऽनुग्रहाद्धि कर्मणा प्रसन्नः परमात्मा सृजतीत्यर्थः । महिमानस्ते नाकं मोक्षं सचन्त आप्नुवन् ।[१] नाको न स्वर्गः । कुतः । यज्ञेन यज्ञमयजन्त देवा इति पूर्वमेव देवानां स्वर्गप्राप्तेः । **पूर्वेसाध्याः** पूर्वे मुक्ताः । **पुण्यपापे** अप्रारब्धपुण्यपापे । अनभीष्टं च पुण्यं विहाय । **निरञ्जनः** निर्लेपः । निर्दुःखित्वेन परमं साम्यं । तादृगेव नतु तत् । एवं मुनेर्मनानादिमतः विजानतो परोक्षज्ञानिनः । आत्मा परमात्मनि प्रविष्टं स्वरूपं भवति । **नानात्वेन** भिन्नत्वेन । **प्रकृतौ करणातीताः** प्रकृतिनिमित्तकरचरणादिरहिताः । तत्र हेतुमाह– **संयोग इति** ॥ अनेन नानात्वेनाभिसम्बद्धाः न गौणमुक्ता इति सिद्धम् ।

ननु मुक्तानां प्रकृतिसंयोगाभावोऽयुक्तः । प्रकृतेः परिच्छिन्नत्वप्रसङ्गात् । नापि तददर्शनेन तेषां तत्सम्भवः । मुक्तानामसर्वज्ञत्वप्रसङ्गादित्य-तस्तस्यास्तदबन्धकत्वेन तदुपपत्तिमाह– **पुरुषेति** ॥ पुरुषेभ्योऽन्यत्वेन शरीरादिरूपेण बहुत्वेन प्रतीता बन्धकत्वेन न प्रवर्तते । न प्रवर्तत इत्युक्तमेव विशदयन्नाह– **प्रवर्ततीति** ॥ तेषां बन्धकत्वेन । संसाररााहित्ये लक्षणं मम साधर्म्यम् । **अपरे**[२] रागादयः किमु ताः ।

१. प्राप्नुवन् इति खपाठः ।

२. यत्र विष्णुलोके माया प्रकृतिः नेति मुक्तत्वज्ञापकम् । अपरे संसारिणो रागादयो वा नेति किमु वक्तव्यम् । सुरासुरार्चिताः हरेरनुव्रताः यत्र सन्ति इति भेदोक्तिः । असुराः साधवोऽपि सन्ति ।

## अस्मिन्नेव प्रकरणे जीवब्रह्मभेदप्रतिपादकवाक्यानि विपुलानि सन्तीति प्रदर्शनम्

**भा.– 'सन्मूलाः सोम्येमाः[१] सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः सति सम्पद्य न विदुः' इत्यादौ भेद एव ह्यत्र सतात्पर्यं प्रतिपादितः। ता नद्यः समुद्रादागत्य समुद्रं प्रविशन्ति । स समुद्र एव भवति । न नदीभावं प्राप्नोति । स एव च समुद्रो भवति । समुद्र एव समुद्रो भवति न नद्य इति भेदस्यैवावधारणं क्रियते ।**

**भाष्यविवृतिः–** समुद्रात्समुद्रमेवापियन्ति । स समुद्र एव भवतीति दृष्टान्तवाक्यमापाततो बालानां जलसमूहः समुद्र एव भवतीत्यभेद-परताप्रतीतेः पूर्वोत्तरवाक्ये उदाहृत्य तदनुसारेण भेदपरतया व्याचष्टे– **सन्मूला इति** ॥ योजनातु यर्हि यस्मादत्र प्रकरणे सन्मूला इत्यादौ भेद एव हि सतात्पर्यं प्रतिपादितस्तस्मात्ताः समुद्रात् समुद्रमेवापियन्ति स समुद्र एव भवतीत्यत्रापि भेदस्यैवावधारणं क्रियते । अनूद्य व्याख्याय भेदस्यैवावधारणप्रकारं दर्शयति– **ताः नद्य इत्यादिना** ॥ स समुद्र एव भवति स समुद्रः समुद्र एव भवतीत्यर्थः । अवधारणार्थं व्यनक्ति– **न नदीभावं प्राप्नोतीति** ॥ प्रकारान्तरेणैवकारं योजयति– **स एव समुद्रो भवतीति** ॥ तदेव विवृण्वन्नवधारणव्यावर्त्यमाह– **समुद्र एवेति** ॥

## नानुकूलश्चोरदृष्टान्तोऽभेदस्य

**भा.– न च स्वकीयस्य ब्रह्मभावस्याज्ञोऽपहर्ता भवति । किं त्व-विद्यमानब्रह्मभावाभिमन्तैवपहर्ता । न हि स्वकीयवित्तपरित्याग्यपहर्ता भवति । किन्तु परस्वहर्तैव । तस्मादविद्यमानब्रह्मभावाभिमन्तैवाप-हार्षीत् स्तेयमकार्षीदिति दृष्टान्तपूर्वकमुच्यते ।**

---

१. ''इमाः प्रजाः'' हूंपाठः ।

**भाष्यविवृतिः**– अभेदज्ञानिनो दोषः कीदृशः स्यादित्युपक्रम्य सर्वेषां शास्तृ यद्ब्रह्म तत्स्वरूपतया स्मरन् ब्रह्मस्तेन इति सर्वनियन्तृत्वलक्षणं ब्रह्मत्वं स्वात्मीयं मन्यमानः स्तेनोऽपहर्तेति व्याख्यातं तत्परिशुद्धये य आत्मीयं ब्रह्मत्वमज्ञानवशात् त्यजति स चोर इवापहर्ता । यस्तु जानात्यात्मनो ब्रह्मभावं स त्वितरवन्नापहर्तेति दार्ष्टान्तिकवाक्यं कश्चिद्व्याचष्टे । तत्र दूषणं वक्तुं प्रतिजनीते– **नचेति** ।। **अज्ञः** आत्मब्रह्मत्वत्यागी । स्वार्थं च साधयितुं प्रतिजानीते– **किं त्विति** ।। आद्ये तथा लोकाप्रसिद्धिं युक्तिमाह– **नहीति** ।। स्वार्थे तथा लोकप्रसिद्धिमुत्तरमाह– **किं त्विति** ।। एवं स्वपरार्थयोः साधकबाधकावुक्त्वा निगमयति– **तस्मादिति** ।।

**भा.– अदुःखित्वपूर्णज्ञानानन्दस्वातन्त्र्यादिब्रह्मस्वभावाननुभवं स्वात्मनो ज्ञात्वैव[1] तद्भावाभिमतेः स्तैन्यम् । परकीयाभिमतेरपहारः ।**

**परस्वभावाभिमतेरपहर्ता स्ववञ्चनात् ।**
**स्तेनश्चाभेदवेत्ता तु ब्रह्मणो हन्यते सदा ।। इति तत्त्वविवेके ।**

**भाष्यविवृतिः**– अनात्मीयस्यामीयत्वं संपादयन् स्तेन अनात्मीयं बलाद्गृह्णन् अपहर्तेति लोके प्रसिद्धः । तथा च ब्रह्माहमस्मीति मन्यमानः कथं स्तेनः कथं क वाऽपहर्तेत्यतस्तत्र प्रकारं दर्शयति– **अदुःखित्वेति** ।।[2] अत्रैवाऽर्थे स्मृतिं पठति– **परेति** ।। **स्ववंचनात्** स्वस्य परस्वभावाभावं जानन् ।

**भा.– न च दार्ढ्यमात्रे दृष्टान्तोऽयम् । स यदि तस्य कर्ता भवति स**

---

१. ''स्वात्मनोऽपि ज्ञात्वैव'' पाठान्तरम् ।

२. अनर्थातिशयद्योतनाय महातस्करत्वोपपादनार्थमदुःखित्वेत्यादि बहुविशेषणम् । ज्ञात्वैवेत्यन्तस्य ब्रह्मत्वं परकीयमेव न स्वकीयमिति ज्ञात्वेत्यर्थः । ज्ञात्वैव तद्भावाभिमतेरित्यनेन स्ववञ्चनं लभ्यते ।

**यदि तस्य कर्ता न भवतीति हतिमुक्त्योरपहारानपहारैकहेतुकत्वश्रुतेः[1]। अन्यथा यदि दृढो भवति यद्यदृढो भवतीत्युच्येत।**

**भाष्यविवृतिः**– यत्परेणोक्तं साक्षेपं विचारे कृतेऽपि सुदृढश्चेदैक्यमुच्यते सन्दिग्ध-श्चेद्धन्यत इत्यत्र दृष्टान्तोऽयमिति तदाशङ्क्य निषेधति– **नचेति**॥ कुतो नेत्याह– **स यदीति**॥ दृष्टान्तेऽपि हतिमुक्त्योः स यदि तस्येत्यादिनाऽपहारहेतुत्वश्रवणान्न तथा कल्पना युक्तेत्यर्थः। हतिमुक्त्योरपहारानपहारहेतुत्वायोगं तदनुगुणप्रयोगदर्शनेन स्फोरयति–**अन्यथेति**॥ **अन्यथा** हतिमुक्त्योरुक्तहेतुत्वाभावे दृढत्वहेतुकत्वे यदि दृढो भवतीत्याद्युच्येतेत्यर्थः।

**भा.– न च सत्यासत्यमात्रम्। तदा सत्यानृतवाग्दृष्टान्तेन पूर्तेरपहारदृष्टान्तो न स्यात्। तस्मादभेदज्ञानेन महान्तं विनाशं प्रदर्श्य भेदज्ञानान्मुक्तिपरमेवैतद्वाक्यम्।**

**भाष्यविवृतिः**– यच्चाद्वैतं सत्यं भेदो मृषा तत्र सत्यवादी चेन्मुच्यते इतरस्तु हन्यते यथा चोर इत्यर्थकं दृष्टान्तवचनमिति तदप्याशङ्क्य निषेधति– **न चेति**॥ उक्तरीत्या सत्यानृतमात्रं दृष्टान्तवचनार्थ इति च नेत्यर्थः। कुतो नेत्यत आह– **तदेति**॥ सत्यानृतवादिदृष्टान्तेन परोक्ताभिप्रायदूषणस्योपयोगं दर्शयन् स्वयं दृष्टान्तवचनस्याभिप्रायमाह– **तस्मादिति**॥

## भेदाभेदोऽपि शास्त्रमहातात्पर्यविरोधी

**भा.– भिन्नस्यैवोत्कर्षो भवतीति। अभिन्नस्य कुत उत्कर्षः स्यात्। अज्ञानदुःखयुक्तत्वाच्च। न हि तत्पक्षे परमार्थदुःखिनो भ्रान्त्या दुःखिनश्च तत्काले कश्चिद्विशेषः। अस्वातन्त्र्यं च भ्रान्तस्य निश्चितमेव। न हि भ्रमः स्वेच्छया युज्यते।**

१. 'हेतुत्वश्रुतेः' पाठान्तरम्।

**स्वात्मानं परमं विष्णुं विदित्वाऽपि स राघवः ।**
**दैत्यानां मोहनार्थाय दर्शयामास मूढताम् ।। इति पाद्मे ।**

**भाष्यविवृतिः**— इतोऽपि पुरुषं सोम्योत हस्तगृहीतमित्यादिदार्ष्टान्तिकवाक्यस्य नैक्यमर्थः । ऐक्यार्थत्वे उत्कर्षाभावेन महातात्पर्यभङ्गप्रसङ्गात् । ननु कथमैक्यार्थत्वे उत्कर्षाभावः । येन महातात्पर्यं भज्येतेत्यत आह— **भिन्नस्यैवेति** ।। न केवलमभिन्नस्यैवोत्कर्षाभाव एवेति । किं त्वपकर्षः स्यादिति भावेन निमित्तान्याह— **अज्ञानेति** ।। अपकर्षः स्यादिति चार्थः । अज्ञानादेः परमार्थत्वाभावात् कथमपकर्षः स्यादित्यत आह— **नहीति** ।। नहि तत्पक्षेऽज्ञानादिकमसत् । अतः परमार्थदुःखिनो भ्रान्त्यादुःखिनश्च तत्काले कश्चिद्विशेषो नह्यस्ति । अतोऽपकर्षः स्यादेवेत्यर्थः । अभिन्नत्वे दोषान्तरं चाह— **अस्वातन्त्र्यं चेति** ।।[1] भ्रान्तस्यास्वातन्त्र्यं कथं निश्चितमित्यतस्तत्समर्थयते— **नहीति** ।। पूर्वेण सम्बन्धः । स्वतन्त्रस्यापि राघवस्य भ्रमदर्शनात् तेन कथमस्वातन्त्र्यसमर्थनमित्यतस्तस्य भ्रान्तिरेव नास्ति तथा नटनमेवेत्येतत्प्रमाणेन समर्थयते— **स्वात्मानमिति** ।।

**भा.— 'ओं जगद्व्यापारवर्जम्' 'ओं प्रकरणात्' इत्यादिनैश्वर्यमर्यादया मुक्तानां ब्रह्मणश्च भेदस्यैव निर्णीतत्वाच्च भगवता ।**

**ब्रह्मसूत्रानुसारेण वेदाद्यं सर्वमेव च ।**
**योज्यं न ब्रह्मसूत्राणि दृश्यमानार्थतोऽन्यथा ।।**
**इति च ब्रह्मवैवर्ते ।**

**चोरदृष्टान्ततो यस्य ह्यभेदज्ञानतस्तमः ।**
**भेदेनोत्कर्षवेत्तुस्तु मुक्तिरेव ह्यचोरवत् ।। इति च ।**

---

१. स्वेच्छानुसारित्वाभावः ।

**भाष्यविवृतिः**– भगवता सूत्रकृताच मुक्तानां च भेदस्यैव निर्णीतत्वाच्च दार्ष्टान्तिकवाक्यस्य नैक्यमर्थ इति सूत्रे पठित्वाऽऽह– **जगदिति** ॥ वेदादावैक्योक्तेर्गौणमुक्तपरे एते सूत्रे इत्यतो नैवं कल्पना युक्तेत्यत्र नियामकमाह– **ब्रह्मेति** ॥ दृश्यमानार्थतोऽन्यथा न योज्यानि । भेदपरतया प्रमाणेन व्याख्यातत्वाच्च नैक्यार्थं दार्ष्टान्तिकवाक्यमित्याशयवांस्तत्पठति– **चोरेति** ॥ यस्य कस्यापि ।

**भा.– सारत्वात् स इति प्रोक्तो ज्ञानत्वाद्य इतीरितः ।**
**सर्वस्येष्ट इति ह्येष मानानामणकोऽणिमा ॥**

**तत्तन्त्रत्वादैतदात्म्यं स सत्यः साधुरूपतः ।**
**तत्ततेः पूर्णतश्चात्मा सादनात् स इतीरितः ॥**

**अतत्त्वमसि पुत्रेति य उक्तो गौतमेन तु ।**
**नवकृत्वः सदृष्टान्तं सर्वभेदेन केशवः ॥**
**तस्मै नमो भगवते चिदचित्परमाय ते ।**
**पुरुषोत्तमाय देवाय पूर्णानन्दैकरूपिणे ॥**

**इति सामसंहितायाम् ।**

**अतः सर्वचिदचिद्विलक्षणः सर्वोत्तमः सर्वगुणपरिपूर्णो[१] भगवान् पुरुषोत्तम इति सिद्धम् ॥**

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमच्छन्दोग्योपनिषद्भाष्ये षष्ठोऽध्यायः ॥

**भाष्यविवृतिः**– स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्वमसीत्यस्याद्वैतिनां प्रधानवाक्यत्वादत्र प्रमादेन भाव्य[२]मित्याशयवान्

१. ''सर्वगुणपूर्णः'' हपाठः ।   २. भवितव्यम् इति खपाठः ।

व्याख्यातत्वेऽपि पुनर्व्याचष्टे– **सारत्वादित्यादिना** ॥ **आणको** नेता । अतिसूक्ष्मश्च । तस्मादन्यदतत् । अस्वतन्त्रं जगत् त्वमसि । एवं प्रमाणेनाध्यायं व्याख्याय प्रमाणाभावतद्विरोधाभ्यां अपरव्याख्यानं प्रदूष्य बुध्यारोहार्थं अध्यायार्थं पिण्डीकृत्य दर्शयन्नुपसंहरति– **अत इति** ॥ **इति षोडशः खण्डः** ॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमच्छन्दोगोपनिषद्भाष्यस्य टीकायां जयतीर्थपूज्यचरणशिष्यव्यासतीर्थकृतायां षष्ठोऽध्यायः** ॥

# अथ सप्तमाऽध्यायः

## अथ प्रथमः खण्डः

### सनत्कुमारसविधे नारदागमनम्

उप.– अधीहि भगव इति होपससाद सनत्कुमारं नारदस्त९ होवाच यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति स होवाच ॥ १ ॥

### नारदाधीतशास्त्रवर्णनम्

उप.– ऋग्वेदं यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्य९ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्या९ सर्पदेवजनविद्यामेतद्भगवोऽध्येमि ॥ २ ॥

उप.– सोऽहं भगवो मन्त्रविदेवास्मि नात्मविच्छुत९ ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तन्मा भगवाञ्छोकस्य पारं तारयत्विति त९ होवाच यद्वै किञ्चैतदध्यगीष्ठा नामैवैतत् ॥ ३ ॥

### नामाभिमानिन्यामुषोदेव्यां भगवदुपासनम्

नाम वा ऋग्वेदः यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमः वेदानां वेदः पित्र्यो राशिः दैवो निधिः वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्या नामैवैतन्नामोपास्वेति ॥ ४ ॥

स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति यो नाम ब्रह्मेत्युपास्तेऽस्ति भगवो नाम्नो भूय इति नाम्नो वाग्वा भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ५ ॥ १ ॥

भा.– यद्वेत्थ तेन तदुक्त्वा मामुपसीद ।

पितृलक्षणं तु पित्र्यं स्याद्राशिः स्यात् पूगलक्षणम् ।
देवतालक्षणं दैवं निधिश्च निधिलक्षणम् ॥

वाकोवाक्यं मूलवेदो वेदसारोपसंहृतिः ।
एकायनमितिप्रोक्तं देवविद्या त्वमानुषी ॥

देवज्ञेयैव या विद्या ब्रह्मविद्या तथाऽऽरणम् ।
भूतविद्या भूतचिह्नं क्षत्रविद्या तु नीतिका ॥

नाक्षत्री ज्यौतिषाख्या च सर्पलक्षणमेव च ।
सर्पविद्येति सम्प्रोक्ता या देवपरिचारगा ॥
सा देवजनविद्या स्यादेता वेद स नारदः ॥

इति सामसंहितायाम् ।

विद्यानां निर्णयाज्ञानादविद्वानुच्यते पुमान् ।
सर्वविद्याविदप्यद्धा तस्मान्निर्णयवित्तये ॥
कुमारमैच्छद्देवर्षिर्नारदो ब्रह्मवित्तमम् ॥ इति च ।

विष्णोर्नाम यतो विद्याः सर्वनामेत्यतः स्मृताः[१] ।
नामाभिमानिनी चोषा तस्यां ब्रह्म परं स्मरेत् ॥

यदेषा न त्वमेया स्यान्मीयते ह्युषसि ध्रुवम् ।
रात्रिमानमजानद्भिस्ततो नामेत्युषा स्मृता ॥ १ ॥

भाष्यविवृतिः– प्रज्ञा[२]धिक्येनात्मानमीश्वरं मन्वानः श्वेतकेतुः भेद-दृष्टान्तैर्भेदज्ञानपूर्वमीश्वरोपासको भवेति बोधितः । षष्ठप्रापठकेन ईश्वरश्च

१. 'स्मृतः' पाठान्तरम् । २. प्रज्ञानाधिक्येन इति खपाठः ।

तारतम्यज्ञानपूर्वमेव तातम्यान्तगत्वोनोपासितो मुक्तिप्रद इत्यतो देवानां तारतम्यमाह । सप्तमेन अज्ञातस्यैवोपदेष्टव्यत्वाज्ज्ञतभागं वदेत्याह– **यद्वेत्थेति** ॥ **अत ऊर्ध्वं** ज्ञातादुपरितनमज्ञातम् । **पञ्चमं वेदं** वेदानां पञ्चमत्वसङ्ख्यापूरकं वेदं । नामवित् प्रतिपादकवित् नात्मवित् न प्रतिपाद्यात्मवित् । आत्मा किमर्थं ज्ञातव्य इत्यतस्तज्ज्ञानस्य प्रयोजनमाह– **श्रुतमिति** ॥

उपदेशमर्थयन्तं प्रति यद्वेत्थ तेन मोपासीदेत्युक्तिरयुक्तेत्यतो ज्ञात-भागस्यैवोपदेष्टव्यत्वेन तदुक्तिं घटयन्ननूद्य व्याचष्टे**यद्वेत्थेति** ॥ पित्र्यादि-शब्दोक्तानप्रतीतेराह– **पितृलक्षणमित्यादिना** ॥ **पूगलक्षणं** सङ्ख्या-लक्षणम् । गणनशास्त्रं राशिःस्यादित्यर्थः । एवम्भूते स्थले निधिस्तिष्ठतीति ज्ञापकं शास्त्रं निधिः । मूलवेदो राशिभूतः, वर्तमानवेदानामनुष्ठानार्थं बादरायणेन तत उधृतत्वात् । **उपसंहृतिः** सङ्गृहः । अमानुषीत्युक्तं विशदमाह– **वेदेति** ॥ अरण्येऽधीयत इत्यरण्यमुपनिषत् । ननु ऋग्वेदादि-पाठादिजन्यत्वात् आत्मज्ञानस्य नारदस्य तत्सद्भावात्कथं सोऽहं मन्त्र-विदेवास्मि नात्मविदित्युक्तिः कथं वा सर्वविद्याविदा नारदेन गुरुत्वेन कुमारवरणमित्यतस्तत्सर्वं घटयन्नाह– **विद्यानामिति** ॥ पाठश्रवणाभ्यां सर्वविदप्युपक्रमादिभिरद्धा विद्यानां निर्णयाज्ञानादविद्वानित्युच्यते यस्मा-दित्यादि योजना । **ब्रह्मवित्तमं** निर्णयज्ञमित्यर्थः । यद्वै किञ्चिदध्यगीष्ट नामैवैतदिति सर्वविद्यानां नामत्वमुक्तम् । तत्कथमित्यतस्तत्प्रकारं दर्शयन् नामब्रह्मेत्युपासीतेत्येतन्नाममात्रत्वप्रतीतिं सामानाधिकरण्यप्रतीतिं च निवारयन् व्याचष्टे– **विष्णोरिति** ॥ ननूषसोऽश्विभार्यायाः नामत्वं केन यज्ज्ञानपूर्वं तस्यां ब्रह्मोपासनं कार्यमित्यतो नामाभिमानित्वात् नामेत्युक्तम् । प्रकारान्तरेण च तन्निरुच्य दर्शयति– **यदेषेति** ॥ अनेनामं अमेयमज्ञेयं न भवतीति नाम उषःकालाभिमानित्वादुष इत्युक्तं भवति । **इति प्रथमः खण्डः** ॥

## अथ द्वितीयः खण्डः

## नामाभिमान्युषोदेव्याः सकाशाद् वागाभिमानिस्वाहादेव्याः उत्तमत्वकथनम्

उप.– वाग्वाव नाम्नो भूयसी वाग्वा ऋग्वेदं विज्ञापयति यजुर्वेद॰ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्य॰ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्या॰ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाकाशं चापश्च तेजश्च देवा॰श्च मनुष्या॰श्च पशू॰श्च वया॰सि च तृणवनस्पती-ञ्छ्वापदान्याकीटपतङ्गपिपीलिकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं च यद्वै वाङ्नाभविष्यन्न धर्मो नाधर्मो व्यज्ञापयिष्यन्न सत्यं नानृतं न साधु नासाधु न हृदयज्ञो वागेवैतत्सर्वं विज्ञापयति वाचमुपास्स्वेति ॥ १ ॥

स यो वाचं ब्रह्मेत्युपास्ते यावद्वाचो गतं तत्रास्य यथाकामचारो भवति यो वाचं ब्रह्मेत्युपास्तेऽस्ति भगवो वाचो भूय इति वाचो भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ २ ॥

भा.– तस्यास्तु भूयसी स्वाहा धर्मज्ञानसुखादिभिः ।
सर्वैर्गुणैर्विमुक्तौ च तथा वन्धे च सर्वदा ॥
वाचोभिमानिनी सैव वाङ्नाम्नी चाञ्चनाद्वसोः ॥ २ ॥

भाष्यविवृतिः– वाग्वाव नाम्नो भूयसीत्यादि केवलं जडवागिन्द्रियादि-परत्वप्रतीतिं निवारयन् व्याचष्टे– **तस्यास्त्वित्यादिना** ॥ स्वाहा वागभि-मानित्वात् वसोरग्नेरञ्चनाच्च वाङ्नाम्नी । चशब्दाद्बन्धेवा सर्वतः धर्मज्ञाना-दिभिः सर्वैर्गुणैः ॥ इति द्वितीयः खण्डः ॥

## अथ तृतीयः खण्डः

## वागभिमानिस्वाहादेव्याः सकाशान्मनोऽभिमानि पर्जन्यस्योत्तमत्त्वकथनम्

उप.– मनो वाव वाचो भूयो यथा वै द्वे वाऽऽमलके द्वे वा कोले द्वौ वाऽक्षौ मुष्टिरनुभवत्येवं वाचं च नाम च मनोऽनुभवति स यदा मनसा मनस्यति मन्त्रानधीयीयेत्यथाधीते कर्माणि कुर्वीयेत्यथ कुरुते पुत्राꣳश्च पशूꣳश्चेच्छेयेत्यथेच्छत इमं च लोकममुं चेच्छेयेत्यथेच्छते मनो ह्यात्मा मनो हि लोको मनो हि ब्रह्म मन उपास्स्वेति ॥ १ ॥

स यो मनो ब्रह्मेत्युपास्ते स यावन्मनसो गतं तत्रास्य यथाकामचारो भवति यो मनो ब्रह्मेत्युपास्तेऽस्ति भगवो मनसो भूय इति मनसो भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ३ ॥

भा.– एवं तस्या विमुक्तौ च पर्जन्यः सर्वतो वरः ।
मनोभिमानी सम्प्रोक्तो वृष्ट्या निर्माणतो मनः ॥ ३ ॥

भाष्यविवृतिः– मा निर्माणे । वृष्ट्या[१]निर्माणतोंऽकुरादिजननाच्च मनः ॥ इति तृतीयः खण्डः ॥

## अथ चतुर्थः खण्डः

## मनोऽभिमानिपर्जन्यात् सङ्कल्पाभिमानिमित्रस्य श्रैष्ठ्यनिरूपणम्

उप.– सङ्कल्पो वाव मनसो भूयान् यदा वै सङ्कल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥ १ ॥

१. खपाठे नास्ति ।

तानि ह वा एतानि सङ्कल्पैकायनानि सङ्कल्पात्मकानि सङ्कल्पे प्रतिष्ठितानि समक्लृपतां द्यावापृथिवी समकल्पेतां वायुश्चाकाशश्च समकल्पन्तामापश्च तेजश्च तेषां संक्लृप्त्यै वर्षं सङ्कल्पते वर्षस्य संक्लृप्त्या अन्नं सङ्कल्पतेऽन्नस्य सङ्क्लृप्त्यै प्राणाः सङ्कल्पन्ते प्राणानां संक्लृप्त्यै मन्त्राः सङ्कल्पन्ते मन्त्राणां संक्लृप्त्यै कर्माणि सङ्कल्पन्ते कर्मणां संक्लृप्त्यै लोकाः सङ्कल्पन्ते लोकानां संक्लृप्त्यै सर्वं सङ्कल्पते स एष सङ्कल्पः सङ्कल्पमुपास्स्वेति ॥ २ ॥

स यः सङ्कल्पं ब्रह्मेत्युपास्ते क्लृप्तान् वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिद्ध्यति । यावत् सङ्कल्पस्य गतं तत्रास्य यथाकामचारो भवति यः सङ्कल्पं ब्रह्मेत्युपास्तेऽस्ति भगवो वाचो भूय इति सङ्कल्पात् भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ३ ॥ ४ ॥

भा.– तथा तस्माद्वरो मित्रो मुक्तौ सङ्कल्पदेवता ।
अह्नि सङ्कल्पयेद्यस्मात् स्वप्स्यन्ति निशि यत्ततः ॥

**भाष्यविवृतिः**– अह्नि सङ्कल्पयेत् । प्रजानां सङ्कल्पानुत्पदयेद्यस्मात्तस्माच्च सङ्कल्पः । अह्नि इति विशेषणोक्तेः कारणमाह– **स्वप्स्यन्तीति** ॥ सङ्कल्पस्य महिमानमेवाह– **यदेत्यादिना** ॥ **मनस्यति** मनः प्रेरयति । **नाम्नि** सर्वविद्यायाम् । **एकं भवन्ति** एकत्र तिष्ठन्ति । **सङ्कल्पैकायनानि** सङ्कल्पैकाश्रितानि । **सङ्कल्पात्मकानि** सङ्कल्पप्रधानानि ॥ इति चतुर्थः खण्डः ॥

## अथ पञ्चमः खण्डः

### सङ्कल्पाभिमानिमित्रात् चित्ताभिमान्यग्नेरुत्तमत्वनिरूपणम्

उप.– चित्तं वाव सङ्कल्पाद् भूयो यदा चेतयतेऽथ सङ्कल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥ १ ॥

तानि ह वा एतानि चित्तैकायनानि चित्तात्मकानि चित्ते प्रतिष्ठितानि तस्माद् यद्यपि बहुविदचित्तो भवति नायमस्तीत्येवैनमाहुर्यदयं वेद यद्वा अयं विद्वान्नेत्थमचित्तः स्यादित्यथ यद्यल्पवित् चित्तवान् भवति तस्मा एवोत शुश्रूषन्ते चित्तꣳ ह्येवैषामेकायनं चित्तमात्मा चित्तं प्रतिष्ठा चित्तमुपास्स्वेति ॥ २ ॥

स यश्चित्तं ब्रह्मेत्युपास्ते चित्तान् वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिद्ध्यति यावत् चित्तस्य गतं तत्रास्य यथाकामचारो भवति यश्चित्तं ब्रह्मेत्युपास्तेऽस्ति भगवश्चित्ताद्भूय इति चित्ताद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ३ ॥ ५ ॥

भा.– तथा मित्राद्वरस्त्वग्निर्मुक्तौ चित्तस्य देवता ।
चितत्वाच्चित्तनामा च .................

भाष्यविवृतिः– चेतयते जानाति । यदपि यद्यपि । यज्ञकुण्डे चितत्वा[१]च्चित्तनामा ॥ इति पञ्चमः खण्डः ॥

## अथ षष्ठः खण्डः

## चित्ताभिमान्यग्नेर्ध्यानाभिमानिवरुणस्याधिक्यकथनम्

उप.– ध्यानं वाव चित्ताद्भूयो ध्यायतीव पृथिवी ध्यायतीव द्यौर्ध्यायतीवान्तरिक्षं ध्यायन्तीवापो ध्यायन्तीव पर्वता ध्यायन्तीव देवमनुष्यास्तस्माद्य इह मनुष्याणां महत्तां प्राप्नुवन्ति ध्यानापादाꣳशा इवैव ते भवन्त्यथ येऽल्पाः कलहिनः पिशुना उपवादिनस्तेऽथ ये प्रभवो ध्यानापादाꣳशा इवैव ते भवन्ति ध्यानमुपास्स्वेति ॥ १ ॥

स यो ध्यानं ब्रह्मेत्युपास्ते यावत् ध्यानस्य गतं तत्रास्य यथाकामचारो भवति यो ध्यानं ब्रह्मेत्युपास्तेऽस्ति भगवो ध्यानाद् भूय इति ध्यानात् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ६ ॥

१. यज्ञकुण्डचितत्वादिति खपाठः ।

भा.– .................तस्माद्वरुण एव च ॥

**ध्यानस्य देवता चासौ तन्नामा च निधानतः ।**
**सत्यानृतविवेकार्थं .................**

**भाष्यविवृतिः**– ध्यायतीव पृथिवीत्यादिना ध्यानस्य महिमानमेवाह । **प्रभवः** प्रभवितुमिच्छन्तः । सत्यानृतविवेकार्थं ब्रह्मणा निधानतो निहित-त्वाच्च ध्याननामा ॥ इति षष्ठः खण्डः ॥

## अथ सप्तमः खण्डः

## ध्यानाभिमानिवरुणात् विज्ञानाभिमानिचन्द्रस्य श्रेष्ठत्ववर्णनम्

उप.– **विज्ञानं वाव ध्यानाद्भूयो विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाकाशं चापश्च तेजश्च देवाꣳश्च मनुष्याꣳश्च पशूꣳश्च वयाꣳसि च तृणवनस्पतीन् श्वापदान्याकीटपतङ्गपिपीलिकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं चान्नं च रसं चेमं च लोकममुं च विज्ञानेनैव विजानाति विज्ञानमुपास्स्वेति ॥१॥**

**स यो विज्ञानं ब्रह्मेत्युपास्ते विज्ञानवतो वै स लोकान् ज्ञान-वतोऽभि-सिद्ध्यति यावद् विज्ञानस्य गतं तत्रास्य यथाकामचारो भवति यो विज्ञानं ब्रह्मेत्युपास्तेऽस्ति भगवो विज्ञानाद् भूय इति विज्ञानाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ७ ॥**

भा.– .................तथा तस्मान्निशाकरः ॥

विज्ञानदेवता चासौ तन्नामा च विवेचनात् ।
सत्यस्य ................ ..............

भाष्यविवृतिः– सत्यस्य विवेचनाच्च तन्नामा विज्ञाननामा ॥ इति सप्तमः खण्डः ॥

## अथ अष्टमः खण्डः

## विज्ञानाभिमानिचन्द्रात् बलाभिमानिप्रवहस्योत्तमत्वम्

उप.– बलं वाव विज्ञानाद्भूयोऽपीह शतं विज्ञानवतामेको बलवानाकम्पयते स यदा बली भवत्यथोत्थाता भवत्युत्तिष्ठन् परिचरिता भवति परिचरन्नुपसत्ता भवत्युपसीदन् द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवति बलेन वै पृथिवी तिष्ठति बलेनान्तरिक्षं बलेन द्यौर्बलेनापो बलेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वया२ंसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलिकं बलेन वै लोकस्तिष्ठति बलमुपास्स्वेति ॥ १ ॥

स यो बलं ब्रह्मेत्युपास्ते यावद् बलस्य गतं तत्रास्य यथाकामचारो भवति यो बलं ब्रह्मेत्युपास्तेऽस्ति भगवो बलाद् भूय इति बलाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ८ ॥

भा.– ......... तस्माच्च तथा वायुर्भूतात्मको वरः ॥
बलात्मकस्तथा ..............................

भाष्यविवृतिः– विज्ञानादाधिक्यज्ञापनाय बलस्य महिमानमाह– शतमपीहेत्यादिना ॥ एवं पूर्वोत्तरत्रापि द्रष्टव्यम् ॥ बलात्मकत्वाद्बलदेवतत्वाच्च भूतं वायुर्बलम् ॥ इति अष्टमः खण्डः ॥

## अथ नवमः खण्डः

### वलाभिमानिप्रवहाद् अन्नाभिमान्यनिरुद्ध उत्तमः

उप.– अन्नं वाव बलाद् भूयस्तस्माद्यद्यपि दशरात्रीर्नाश्नीयाद्यदु ह जीवेऽथवाऽद्रष्टाऽश्रोताऽमन्ताऽबोद्धाऽकर्ताऽविज्ञाता भवत्यथान्नस्याशी द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवत्यन्नमुपास्स्वेति ॥ १ ॥

स योऽन्नं ब्रह्मेत्युपास्तेऽन्नवतो वै स लोकान् पानवतोऽभिसिद्ध्यति यावत् अन्नस्य गतं तत्रास्य यथाकामचारो भवति योऽन्नं ब्रह्मेत्युपास्तेऽस्ति भगवोऽन्नात् भूय इति अन्नात् वाव भूयोस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ९ ॥

भा.– ................. तस्मादन्नदेवोऽनिरुद्धकः ।
अन्ननामाऽनुनादित्वात् .................

भाष्यविवृतिः– अन्नस्य देवतात्वादनुनादित्वाच्चान्ननामा[1] ॥ इति नवमः खण्डः ॥

## अथ दशमः खण्डः

### अन्नाभिमान्यनिरुद्धात् अवभिमान्याहङ्कारिकः प्राण उत्तमः

उप.– आपो वावान्नाद् भूयस्यस्तस्माद्यदा सुवृष्टिर्न भवति व्याधीयन्ते प्राणा अन्नं कनीयो भविष्यतीत्यथ यदा सुवृष्टिर्भवत्यानन्दिनः प्राणा भवन्त्यन्नं वहु भविष्यतीत्याप एवेमा मूर्ता येयं पृथिवी यदन्तरिक्षं यद्द्यौर्यत्पर्वता यद्देवमनुष्या यत्पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलिकमाप एवेमा मूर्ता अप उपास्स्वेति ॥१॥

---

१. अनुनादित्वात् युद्धादौ शत्रुभीपकशब्दवत्वादित्यर्थः ।

स योऽपो ब्रह्मेत्युपास्ते आप्नोति सर्वान् कामान् तृप्तिमान् भवति यावदपां गतं तत्रास्य यथाकामचारो भवति योऽपो ब्रह्मेत्युपास्तेऽस्ति भगवो अद्भ्य भूय इति अद्भ्यो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ १० ॥

भा.– ................. तैजसाहंभवस्ततः ॥

तथा वरिष्ठः प्राणाख्यो वायुः सोऽपां च देवता ।
अम्नामा देहसंव्याप्तेः .........................

भाष्यविवृतिः– प्राणाः प्राणिनः । तैजसाहंभवः तैजसाहंकारजातः । आहङ्कारिक प्राणाख्यावायुः । तथा विज्ञानाद्बलमिव बलात् विशिष्टः । देहसंव्याप्तेश्चाम्नामा ॥ इति दशमः खण्डः ॥

## अथ एकादशः खण्डः

### अबभिमान्याहङ्कारिकप्राणाद् तेजोऽभिमानी पुरन्दर उत्तमः

उप.– तेजो वावाद्भ्यो भूयस्तद्वा एतद्वायुमागृह्याकाशमभितपति तदाहुर्निशोचति नितपति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्यु-द्भिराह्रादाश्चरन्ति तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तेज उपास्स्वेति ॥ १ ॥

स यस्तेजो ब्रह्मेत्युपास्ते तेजस्वी वै स तेजस्वतो लोकान् भास्वतोऽपहततमस्कानभिसिद्ध्यति यावत् तेजसो गतं तत्रास्य यथाकामचारो भवति यस्तेजो ब्रह्मेत्युपास्तेऽस्ति भगवो तेजसो भूय इति तेजसो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ ११ ॥

भा.– ................. तथा तस्मात् पुरन्दरः ॥
तेजोभिमानी तन्नामा तेजो ह्योज इतीर्यते ।

भाष्यविवृतिः– तेज एव पूर्वमात्मानं दर्शयित्वाऽऽपः सृजते । ह्रादा गर्जनानि । तेजआत्मकत्वाच्च तन्नामा तेजः । तेजोनाम किमित्यत उक्तम्– तेजोह्योज इति ॥ ओजः पराभिभवशक्तिः ॥ इति एकादशः खण्डः ॥

## अथ द्वादशः खण्डः

## तेजोऽभिमानिपुरन्दरादाकाशाभिमान्युमाया उत्तमत्वनिरूपणम्

उप.– आकाशो वाव तेजसो भूयानाकाशे वै सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निराकाशेन आह्वयत्याकाशेन शृणोत्याकाशेन प्रतिशृणोत्याकाशे रमत आकाशेन रमत आकाशे जायत आकाशमभिजायत आकाशमुपास्स्वेति ॥ १ ॥

स य आकाशं ब्रह्मेत्युपास्ते आकाशवतो हवै स लोकान् प्रकाशवतोऽसम्बाधानुरुगायवतोऽभिसिद्ध्यति यावदाकाशस्य गतं तत्रास्य यथाकामचारो भवति य आकाशं ब्रह्मेत्युपास्तेऽस्ति भगवो आकाशाद्भूय इति आकाशाद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ १२ ॥

भा.– तथा तस्मादुमा चैव सा चाकाशाभिमानिनी ॥
आकाशनाम्नी दीप्तत्वात् .................

भाष्यविवृतिः– अभिजायते पुत्रपौत्रादित्वेन । आदीप्तत्वाच्चाकाशनाम्नी ॥ इति द्वादशः खण्डः ॥

## अथ त्रयोदशः खण्डः

### आकाशाभिमान्युमायाः सकाशात् स्मरणाभिमानी रुद्र उत्तमः

उप.– स्मरो वा आकाशाद्भूयाꣳस्तस्माद्यद्यपि बहव आसीरन्नस्मरन्तो नैव ते कञ्चन शृणुयुर्न मन्वीरन्न विजानीरन् यदा वाव ते स्मरेयुरथ शृणुयुरथ मन्वीरन्नथ विजानीरन् स्मरेण वै पुत्रान् विजानाति स्मरेण पशूꣳ स्मरमुपास्स्वेति ॥ १ ॥

स यः स्मरं ब्रह्मेत्युपास्ते यावत् स्मरस्य गतं तत्रास्य यथाकामचारो भवति यः स्मरं ब्रह्मेत्युपास्तेऽस्ति भगवो स्मराद् भूय इति स्मराद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ १३ ॥

भा.– ................. तस्याश्चैव सदा शिवः ।
स्थिरस्मृत्यभिमानी स सममेव रतेः स्मरः ॥

भाष्यविवृतिः– स्मरः स्थिरा स्मृतिः । सममेकप्रकारं रतेश्च स्मरः ।
॥ इति त्रयोदशः खण्डः ॥

## अथ चतुर्दशः खण्डः

### स्मरणाभिमानिरुद्रादाशाभिमानिभारत्याः श्रैष्ट्यकथनम्

उप.– आशा वाव स्मराद् भूयस्याशेद्धो वै स्मरो मन्त्रानधीते कर्माणि कुरुते पुत्राꣳश्च पशूꣳश्चेच्छत इमं च लोकममुं चेच्छत आशा-मुपास्स्वेति ॥ १ ॥

स य आशां ब्रह्मेत्युपास्ते आशायास्य सर्वे कामाः समृध्यन्त्यमोघा ह्यस्याऽऽशिषो भवन्ति यावद् आशाया गतं तत्रास्य यथाकामचारो भवति य आशां ब्रह्मेत्युपास्तेऽस्ति भगवो आशाया भूय इति आशाया वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ १४ ॥

भा.– मुख्यवायुप्रिया तस्मात् परमैव सरस्वती ।
वन्धमुक्त्योः सर्वगुणैः सर्वदाऽऽशास्वरूपिणी ॥
शमित्यानन्द उद्दिष्ट आशापूर्णसुखत्वतः ।

भाष्यविवृतिः– आशाभिमानिनी सर्वदा आशास्वरूपिणी च । अतः आशेति योज्यम् ॥ आशास्वरूपमेव निरुच्याह– **शमिति** ॥ इति चतुर्दशः खण्डः ॥

## अथ पञ्चदशः खण्डः

## आशाभिमानिभारत्याः सकाशात् स्वरूपानन्दाभिमानी प्राण उत्तमः

उप.– प्राणो वा आशाया भूयान् यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वꣳ समर्पितं प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः ॥ १ ॥

## मातापित्रादिषु प्राणोपासना

उप.– स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाऽऽचार्यं वा ब्राह्मणं वा किञ्चिद्भृशमिव प्रत्याह धिक्त्वाऽस्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमस्याचार्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीति ॥ २ ॥

अथ यद्यप्येनानुत्क्रान्तप्राणाञ्छूलेन समासं व्यतिषन् दहेन्नैवैनं ब्रूयुः पितृहाऽसीति न मातृहा असीति न भ्रातृहा असीति न स्वसृहाऽसीति नाचार्यहाऽसीति न ब्राह्मणहाऽसीति ॥ ३ ॥

## अथ त्रयोदशः खण्डः

### आकाशाभिमान्युमायाः सकाशात् स्मरणाभिमानी रुद्र उत्तमः

उप.– स्मरो वा आकाशाद्भूयाꣳस्तस्माद्यद्यपि वहव आसीरन्नस्मरन्तो नैव ते कश्चन शृणुयुर्न मन्वीरन्न विजानीरन् यदा वाव ते स्मरेयुरथ शृणुयुरथ मन्वीरन्नथ विजानीरन् स्मरेण वै पुत्रान् विजानाति स्मरेण पशूꣳ स्मरमुपास्स्वेति ॥ १ ॥

स यः स्मरं ब्रह्मेत्युपास्ते यावत् स्मरस्य गतं तत्रास्य यथाकामचारो भवति यः स्मरं ब्रह्मेत्युपास्तेऽस्ति भगवो स्मराद् भूय इति स्मराद् वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ १३ ॥

भा.– ................. तस्याश्चैव सदा शिवः ।
स्थिरस्मृत्यभिमानी स सममेव रतेः स्मरः ॥

भाष्यविवृतिः– स्मरः स्थिरा स्मृतिः । सममेकप्रकारं रतेश्च स्मरः ।

॥ इति त्रयोदशः खण्डः ॥

## अथ चतुर्दशः खण्डः

### स्मरणाभिमानिरुद्रादाशाभिमानिभारत्याः श्रैष्ट्यकथनम्

उप.– आशा वाव स्मराद् भूयस्याशेद्धो वै स्मरो मन्त्रानधीते कर्माणि कुरुते पुत्राꣳश्च पशूꣳश्चेच्छत इमं च लोकममुं चेच्छत आशामुपास्स्वेति ॥ १ ॥

स य आशां ब्रह्मेत्युपास्ते आशायास्य सर्वे कामाः समृध्यन्त्यमोघा ह्यास्याऽऽशिषो भवन्ति यावद् आशाया गतं तत्रास्य यथाकामचारो भवति य आशां ब्रह्मेत्युपास्तेऽस्ति भगवो आशाया भूय इति आशाया वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥ १४ ॥

भा.– मुख्यवायुप्रिया तस्मात् परमैव सरस्वती ।
बन्धमुक्त्योः सर्वगुणैः सर्वदाऽऽशास्वरूपिणी ॥
शमित्यानन्द उद्दिष्ट आशापूर्णसुखत्वतः ।

**भाष्यविवृतिः**– आशाभिमानिनी सर्वदा आशास्वरूपिणी च । अतः आशेति योज्यम् ॥ आशास्वरूपमेव निरुच्याह– **शमिति** ॥ इति चतुर्दशः खण्डः ॥

## अथ पञ्चदशः खण्डः

## आशाभिमानिभारत्याः सकाशात् स्वरूपानन्दाभिमानी प्राण उत्तमः

**उप.– प्राणो वा आशाया भूयान् यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वꣳ समर्पितं प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः ॥ १ ॥**

## मातापित्रादिषु प्राणोपासना

उप.– स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाऽऽचार्यं वा ब्राह्मणं वा किञ्चिद्भृशमिव प्रत्याह धिक्त्वाऽस्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमस्याचार्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीति ॥ २ ॥

अथ यद्यप्येनानुत्क्रान्तप्राणाञ्छूलेन समासं व्यतिषन् दहेन्नैवैनं ब्रूयुः पितृहाऽसीति न मातृहा असीति न भ्रातृहा असीति न स्वसृहाऽसीति नाचार्यहाऽसीति न ब्राह्मणहाऽसीति ॥ ३ ॥

प्राणो ह्येवैतानि सर्वाणि भवति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति तं चेद्ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीत्येव ब्रूयान्नापह्नुवीत ॥ ४ ॥ १५ ॥

भा.– तस्याः श्रेष्ठो मुख्यवायुः प्रकृष्टानां च नायकः ॥

प्राणनामा णइत्येव ह्यानन्दः समुदीरितः ।
आणा सरस्वती प्रोक्ता तत्प्रकृष्टसुखत्वतः ॥
प्राण इत्युच्यते वायुः .... ..... ........।

देवतातारतम्यपरिमाणनिरूपणम्

.... .......... ...... सर्वे त्वेते दशोत्तराः ।
पर्जन्यमित्रशिखिनो भूतवायुस्तथैव च ॥

द्विगुणा एवानिरुद्धोऽनिलात् पञ्चगुणाधिकः ।
पादोनो वरुणादग्निरध्यर्धोनस्स सोमतः ॥

शिवादाशा तथैवास्या मुख्यवायुः शतोत्तरौ ।
सङ्ख्यान्यथात्वं यत्र स्यात् तत्रावेशविशेषतः ॥

अवराणां गुणस्यापि परमीयत्वतस्तथा ।
प्राणात्तु भगवान् विष्णुरनन्तगुणतोऽधिकः ॥
नित्यमुक्तो नित्यशक्तिर्नित्योद्रिक्तगुणः प्रभुः ॥

इति तत्त्वविवेके ।

'सैषाऽऽनन्दस्य मीमांसा भवति' इत्यादेश्च ।

**भाष्यविवृतिः**– प्रथमप्राणो[१] जीवजातम् । **प्राणं** जीवनम् । प्रकृष्टचेष्टावा । **नायको** नेता । प्रकृष्टानां च नेतृत्वात्प्राणनामा । प्राणशब्दाभिधेयत्वे कारणान्तरं च निरुक्त्याह– **ण इत्यादिना ॥ आणा** सर्वदा सुखरूपिणी सरस्वती । तत्प्रकृष्टेत्यनेन प्रकृष्ट आणाया णो यस्यासौ प्राण इति विग्रहः सूचितो भवति ।

नामादिभ्यो वागादीनां गुणैराधिक्यमुक्तम् । तत्कियदिति जिज्ञासायामाह– **सर्वे त्वेत इति ॥** एते सर्वेतूत्तरोत्तरे पूर्वपूर्वेभ्यः **दशोत्तराः** दशगुणेनोत्तराः । तत्रापवादमाह– **पर्जन्येत्यादिना ॥** स्वाहायाः पर्जन्यः, पर्जन्यान्मित्रः, मित्रादग्निः, सोमाद्भूतवायुः द्विगुण इति द्विगुण एव । अनिरुद्धोऽनिलाद्भूतवायोर्ज्ञानादिभिः पञ्चगुणाधिकः । **सः** वरुणः सोमतः **अध्यर्धोनः** पादपादार्धोनः । एवं सति कर्मणो नाम दशोत्तरं । नाम्नः स्वाहा दशोत्तरा । साहंकारिकप्राणात् पुरंदरो दशोत्तरः । पुरंदरादुमा दशोत्तरेति सर्वेत्वेते दशोत्तरा इत्यस्य सामान्यवचनस्यार्थः । एवं तर्हि कथं[२] नामादेः कुत्रचित् स्वाहादिभ्यो भवदुक्तगुणनियमान्यथोक्तिरित्यतस्तां घटयति **सङ्ख्येति ॥** उत्तमावेशविशेषतो घटनीयमिति योज्यम् ।

अस्तु नामोत्तमावेशनिमित्तकं गुणसङ्ख्यान्यथात्वमिति तथापि भवदुक्तगुणनियमभङ्ग इत्यत आह– **अवराणामिति ॥** अवराणां निज[३]गुणस्यापि परमीयत्वं यदा **तथा** तदा[४] किं वाऽऽवेशजन्यस्येति योजना । यावन्तो नामादयः स्वावरेभ्योऽधिका न तावता सत्यादिस्वरूपी विष्णुः प्राणादधिक इत्याह– **प्राणादिति ॥** भगवत उक्तमनन्तगुणत्वं सम्भावयति–

१. प्रथमः प्राण इति खपाठः ।

२. एवं चेत्कथं तर्हि इति खपाठः ।

३. खपाठे निजेति पाठो नास्ति ।

४. अयं पाठः कपाठे नास्ति । परमावश्यकः भाष्यगततथाशब्दस्यार्थकथनात् ।

**नित्यमुक्त इति** ।। न च भगवतो नित्यमुक्तत्वमसिद्धम् । ''न मे मोक्षो न बन्धनम्'' इति भागवतवचनात् सिद्धेः । नित्यमुक्तत्वेन सम्भाविते भगवतोऽनन्तगुणत्वे हेतुमाह– **नित्यशक्तिरिति** ।। नित्यशक्तित्वं नासिद्धं ''पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'' इत्यादि सिद्धेः । इदानीं सम्भावनाप्रमाणाभ्यां सिद्धमर्थमाह– **नित्योद्रिक्तगुण इति** ।। अनन्तेति योज्यम् । ननु नामादिप्रकरणं मुक्तावपि तारतम्यपर-मित्येतत्कुत इत्यतः प्रमाणेन तथा व्याख्यातत्वादित्याशयवान् समाख्यया समर्थयते– **सैषेति** ।।

## मोक्षेऽपि देवतातारतम्यस्य प्रामाणिकत्वनिरूपणम्

**भा.– 'अथातः सम्भूतिः परमाद्विद्या विद्यायाः प्राणः प्राणाच्छ्रद्धा श्रद्धायाः शिवश्शिवाद् बुद्धिः बुद्धेरिन्द्र इन्द्रात् [१]तैजसः प्राणस्तैजसा-दनिरुद्धो अनिरुद्धात् स्पर्शवातः स्पर्शवातात् सोमस्सोमाद्वरुणो वरुणादग्निरग्नेर्मित्रो मित्रात् पर्जन्यः पर्जन्यात् स्वाहा स्वाहाया उषा जायते तेषां परः परो ज्यायान् गुणैरुत्तरः उत्तरः प्रत्यवरः परस्मात् परस्मादुत्तर उत्तरो मुच्यते स्वं स्वं भावमापद्यते । नैषां पारावर्य-मुच्छिद्यते कदाचन । नैषां पारावर्यमुच्छिद्यते कुतश्चन । पारावर्येणैव ब्रह्मोपयन्ति पारावर्येण मुक्ताः सञ्चरन्ति ।' इत्यादि श्रुतेश्च ।**

**भाष्यविवृतिः**– नामादेस्तारतम्यस्य सर्वदा सत्वं प्रमाणान्तरेण समर्थयते– **अथात इत्यादिना** ।। सम्भूतिरुत्पत्तिः कथ्यते । **तैजसः प्राणः** अहङ्कारिकप्राणः । **तेषां** नामादीनाम् । परः परोज्यायान् । **तेषां** परमादीनां उत्तर उत्तरः प्रत्यवरः । मुच्यत इत्युक्तं मुक्तस्वरूपमेव विशदमाह– **स्वं स्वं भावमापद्यत इति** ।। अविद्यावृतत्वलक्षणमन्यथारूपं हित्वा ज्ञानानन्दाद्यात्मकलक्षणं स्वं स्वभावमापद्यत इत्यर्थः ।[२]

१. ''तैजसप्राणः'' पाठान्तरम् ।

२. मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिरिति वचनात् ।

## नामादिब्रह्मोपासना नाम नाभेदोपासना

भा.– **नामादिमारुतान्तेषु देवेष्वेभ्यश्च भेदतः ।**
**उपासितो हरिर्मुक्तिं दद्यान्नास्त्यत्र संशयः ॥ इति सत्तत्त्वे ॥**

**भाष्यविवृतिः**– सयो नाम ब्रह्मेत्युपास्त इत्यनुवादान्नामोपास्वेत्यादावपि नामब्रह्मोपास्वेति लभ्यते तथाचोभयत्र सामानाधिकरण्यान्नामादेर्ब्रह्मत्वं प्रतीयते तन्निवारणाय नामादिप्रथमा सप्तम्यर्थेत्याह **नामेति** ॥

भा.– **उषादिमारुतान्तेषु समः समगुणोऽपि सन् ।**
**ध्यातः प्रीतिं हरिर्यायादधिकामुत्तरोत्तरे ॥**

**उत्तमेषूत्तमा प्रीतिस्तस्य तत्र स्मृतस्ततः ।**
**ध्यातुरप्युत्तमां प्रीतिं यायान्नास्त्यत्र संशयः ॥**

**तारतम्यपरिज्ञानात् तेषु ध्यातो विमुक्तिदः ।**
**प्रीतिं न चान्यथा यायादिति शास्त्रस्य निर्णयः ॥**
**इति तत्त्वविवेके ।**

**भाष्यविवृतिः**– उषआदिमरुतान्तेषु नीचोच्चेषु तिष्ठन् हरिः स्वयमपि नीचोच्चभावेन तिष्ठति इति प्रतीतिं निवारयन्नामादयो भगवदुपास्तौ मुख्यप्रतिमेत्याह– **उपेति** ॥ उषेत्याकारान्तोऽप्यस्ति । सूषा चमे सुदिनं च मे इत्यादि प्रयोगदर्शनात् । प्रीतौ विशेषमाह– **अधिकामिति** ॥ उत्तरोत्तरे ध्यातः । उक्तमेव हेतुपूर्वमाह– **उत्तमेष्विति** ॥ तत इति श्रवणाद्यत इति योज्यम् । नामादिमारुतान्तेषूपासितः मुक्तिं ददत्तत्तारतम्यज्ञानपूर्वमेवोपासित इत्याह– **तारतम्येति** ॥ तदविहायेत्यर्थः । **ध्यातः** ध्यानेन प्रीतः । **अन्यथा** तारतम्यपरिज्ञानं विहाय ।

## नामादिषु ब्रह्माभेदो न श्रुत्यभिप्रेतः

भा.– नामादिप्राणपर्यन्ताः सप्तम्यर्थाः प्रकीर्तिताः ।
तृतीयापञ्चमीषष्ठीचतुर्थ्यर्थाश्च सर्वशः ॥

शब्दास्ते ब्रह्मशब्देन सम्बध्येयुर्यदा तदा ।
ब्राह्मणोऽस्य मुखं यद्वदात्मा वै पुत्रको यथा ॥

यथा च यूप आदित्य एवमेष प्रकीर्तितः ।
सप्तसु प्रथमा यस्माद् भूयो भूयस्त्वतस्तथा ॥

षट्सुद्वितीया यस्माच्च कारणत्वात् परस्य च ।

**भाष्यविवृतिः**– नाम ब्रह्मोपास्वेत्याद्युक्तद्वितीयाः सयो नाम ब्रह्मेत्युपास्त इत्याद्युक्ताः प्रथमाश्च सप्तम्यर्थतया व्याख्याताः तदेव स्पष्टमाह– **नामेत्यादिना** ॥ नामादिप्राणपर्यन्ताः सर्वशः शब्दाः ।[१] यत्र कुत्रापि श्रूयमाणानां नामादिशब्दानां सप्तम्याद्यङ्गीकारप्रतीतिं निवारयन् तदवसरमाह– **शब्दा इति** ॥ प्रथमायाः सप्तम्याद्यर्थत्वं क्वोपलब्धं येनात्रापि तदङ्गीकुर्म इत्यत आह– **ब्राह्मणेति** ॥ ब्राह्मणोऽस्य मुखमासीदित्यत्र मुखमिति प्रथमा यद्वत् यथा मुखादिति पञ्चम्यर्था । आत्मा वै पुत्रनामाऽसीत्यत्र पुत्रकः पुत्रः आत्मनः पुत्र इति यथा । यथा वाऽऽदित्यो यूप इत्यत्र यूपे आदित्य इति एवमेवैष नामादिः सप्तम्यर्थः प्रकीर्तितः । नियामकं सूत्रं च पठति– **सप्तस्विति** ॥ नामब्रह्मेत्यादौ नामादेर्ब्रह्मैक्यमेवार्थः किन्न स्यादित्यतस्तत्र बाधकमह– **भूयो भूयस्त्वत इति** ॥ नामादिभ्यो वागादीनामुत्तमत्वोक्तेः ब्रह्मणो नामाद्यात्मकत्वे ब्रह्मण

१. तृतीयार्थत्वे नाम्ना ब्रह्मोपास्वेति । पञ्चम्यर्थत्वे तु नाम्नोऽभिव्यक्तं ब्रह्मेति । षष्ठ्यर्थत्वे नाम्नः प्रीति-विषयो ब्रह्मेति । चतुर्थ्यर्थत्वे तु नाम्ने फलप्रदं ब्रह्मेति । उपास्वेति वाक्ययोजना द्रष्टव्या ।

एवोत्तमत्वाधमत्वप्रसङ्गात् नैवमित्यर्थः । द्वितीयायाः सप्तम्याद्यर्थत्व-नियामकं पठति– **पट्स्विति** ।। नामरूपे व्याकरोदिति परस्य नामाद्युत्पत्तिकारणत्वाच्च न तदात्मकं ब्रह्माङ्गीकार्यमित्याह– **कारणत्वात्परस्य चेति** ।। स यो नामब्रह्मेत्युपास्त इत्यत्र प्रथमान्तब्रह्मशब्दस्य पञ्चम्यर्थत्वे वा योजनां दर्शयति– **कारणत्वात्परस्य चेति** ।। ब्रह्मणो नामादिकं जातमित्यर्थः ।

## अन्यथोपासानाया अनर्थकारित्ववर्णनम्

**भा.– न ह्यन्यदन्यदित्येव[१]ध्यातं स्यात् पुरुषार्थदम् ।।**

**अनर्थश्च भवेत् तस्माद् भृत्ये[२] राजेति वोधवत् ।**
**राजपूजां यथा भृत्ये कुर्याद्राजा हिनस्ति हि ।।**

**तद्वशत्वात् तथा भृत्य एवं नामादिकं च यः ।**
**उपास्ते ब्रह्मरूपेण तं ब्रह्माथेतराणि च ।।**
**पातयन्ति तमस्यन्धे तस्मान्नेक्षेत तांस्तथा ।।**

**इति सामसंहितायाम् ।**

**भाष्यविवृतिः**– ननु न वयं नामाद्यात्मकं ब्रह्मेति ब्रूमः किं तु नामाद्यात्मकतया ध्यानं कार्यमिति अतो नोक्तदोष इत्यतस्तत्र बाधकमाह– **नहीति** ।। **तस्मात्** अधमस्योत्तमत्वज्ञापनात् । न वयं नामादौ ब्रह्मबोधः कार्य इत्यर्थं ब्रूमः । ब्रह्मणीव नामादौ पूजा कार्येत्यतो नोक्त दोष इत्यतस्तत्रापि बाधकमाह– **राजपूजां** छत्रचामरात्मकामिति ।। तद्वशत्वाच्च तथा राजभृत्यश्च तं हिनस्ति । **इतराणि** नामादिदैवतानि । **तान्** नामादीन् देवान् । **तथा** ब्रह्मत्वेन नेक्षेत ।

२. 'नेहयदन्य इत्येव' इपाठः । ३. 'भृत्यो' इपाठः ।

## अचेतन–अयोग्य–असत्योपासना अनर्थकारिण्यः

भा.– अचेतनमयोग्यं च तथैवाताात्त्विकं क्वचित् ।
नोपासीत परोऽनर्थः स्यात् तथोपासनाकृतः ॥

दर्भचर्मादयश्चातो देवता ह्यभिमानिनः ।
न ह्यचेतनकं किञ्चित् फलदं स्यात् कथञ्चन ॥

औषधादिषु चैतस्माद्देवा एव वरप्रदाः ।
औषधादिस्थिता देवास्तेऽज्ञे दृष्टफलप्रदाः ॥

ज्ञानिन्यदृष्टदाश्च स्युर्नादैवं किञ्चिदिष्यते ।

**भाष्यविवृतिः**– नामादीनि जडान्येवोपास्यतयोक्तानीति कस्मान्नाङ्गीक्रियत इत्यतस्तथाऽङ्गीकारे बाधकमाह– **अचेतनमिति** ॥ ननु यज्ञे दर्भादयोऽचेतना उपासिताः फलदाः श्रूयन्ते तथा च कथमचेतनोपास्तिरनर्थफलेत्यत आह– **दर्भेति** ॥[1] अत इत्युक्तं हेतुमेव दर्शयति– **नहीति** ॥ ननु रसादेरचेतनस्यैवारोग्यप्रदत्वप्रतीतेः कथमेवमुक्तिरित्यतस्तदसिद्धमित्याह– **औषधादिष्विति** ॥ एतस्मादचेतनस्य फलदातृत्वा(भावा)त् । एवं चेदौषधस्थितदेवमजानतः फलं न स्यादित्यतो देवानां स्वभावमुत्तरमाह– **औषधादिस्थिता इति** ॥

भा.– यथाऽज्ञस्यापि[2] राज्ञस्तु भोजनं क्लृप्तमिष्यते ॥
न त्वविज्ञाय[3] राजानं ग्रामप्राप्तिस्ततो भवेत् ।
एवं देवा दृष्टफलं दद्युरज्ञस्य चाल्पतः ॥

---

१. अतोऽचेतनोपास्तेरनर्थफलत्वादेव । तत्र श्रुतौ दर्भादिशब्दास्तदभिमानिदेवतापरा इत्यर्थः ।

२. 'यथाऽज्ञस्यैव' पाठान्तरम् ।     ३. ''न क्वचाज्ञाय'' हृपाठः ।

किञ्चिज्ज्ञानकृतादृष्टात् तच्च नैवान्यथा भवेत् ।
अदृष्टाख्यं फलं यत्तु तज्ज्ञस्यैव न चान्यगम् ॥

तस्मादचेतनोपासां न कुर्यात् क्वापि कश्चन ।
न चासत्यां न चायोग्यां यदीच्छेदुत्तमं फलम् ॥

यदि नेच्छेत् तमो गन्तुं यदि चेच्छेद्धरेः प्रियम् ।
अथ कर्तव्यकारी च मुमुक्षुरथवा भवेत् ॥
सोऽपीच्छेत हरेः प्रीतिं नात्र कार्या विचारणा ॥

इत्युपासनालक्षणे ।

**भाष्यविवृतिः**– उक्तमर्थं दृष्टान्तोक्त्याऽनुभवारूढं करोति– **यथेति** ॥ **ग्रामप्राप्तिः** ग्रामलाभः । एवमदृष्टा अपि देवाः रोगनिवृत्तेरल्पतः अल्पत्वे कारणादज्ञस्य च दृष्टफलं दद्युरिति योजना । औषधादिस्थिता अपि अजानन्तोऽपि फलं दद्युश्चेत्कथमौषधस्वीकारेऽपि रोगनिवृत्ते[१]रित्यतः समाधानमाह– **किञ्चिदिति** ॥ आपाततो जडत्वेन प्रतीता अपि फलदातृत्वाद्ययोगाद्देवता अङ्गीकार्या इत्युक्तम् ।

## अचेतनोपासना वृथेति निरूपणम्

भा.– 'ओम् अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' 'ओं पयोम्बुवच्चेत् तत्रापि' इति भगवद्वचनम् । 'देवेषु चर्मादिनामानि संवादादेः' इति च देवमीमांसायाम्[२] । 'अचेतनासत्यायोग्यान्यनु-पास्यान्य फलत्वविपर्ययाभ्याम्' इति सङ्कर्षणसूत्रम् । 'ओषधयः संवदन्ते

१. 'रोगानिवृत्तिरिति' पाठेन भाव्यम् ।
२ 'देवतामीमांसायाम् । पाठान्तरम् ।

**सोमेन सह राज्ञा' । 'प्र वो ग्रावाणः सविता देवः सुवतु धर्मणा' । 'न ऋते त्वत्क्रियते किञ्चनारे महामर्कं मघवन् चित्रमर्च' ।**

**भाष्यविवृतिः**– तत्र सूत्राणि पठति– **अभिमानीति** ॥ मृदाद्यभिमानिदेवताभिधायीनीति शेषः । अचेतनोपास्तौ बाधकं सूत्रं पठति– **अचेतनेति** ॥ फलाभावोऽफलत्वं विपर्ययोऽनर्थः । आपाततो जडत्वेन प्रतीता अपि संवादादेर्देवता अंगीकार्या इत्युक्तम् । कस्मिन् वाक्ये संवादाद्युक्तं यद्बलाद्देवता अङ्गीकार्या इत्यपेक्षायां वाक्ये पठति– **ओषधय इत्यादि** ॥ हे ग्रावाणः युष्मान् सविता देवः धर्मेण प्रसुवतु । न केवलं जडानां संवादित्वफलदातृत्वाद्यनुपपन्नमिति किंतु किञ्चिदपि कारणमित्यत्र प्रमाणमाह– **न ऋत इति** ॥

**भा.– 'न देवानामतिव्रतं शतात्मा न जीवति' । 'अनेहसो व ऊतयः सु ऊतयो व ऊतयः' ।**

**भाष्यविवृतिः**– नकेवलमापाततो जडत्वेन प्रतीतानामप्यदेवत्वे संवादाद्यनुपपत्तिः अपि तर्हि स्तुत्यत्वानुपपत्तेश्चेति मंत्रान् पठति– **नदेवानामित्यादि** ॥ देवानां वः युष्माकं व्रतं । **अति** अतिक्रम्य कोऽपि न जीवति । वः **ऊतयः** इच्छाः । **अनेहसः** निष्पापाः । वः **सु ऊतयः** सुरक्षका इति ग्राव्णी स्तुतिः ।

**भा.– द्यावापृथिवी जनयन्नभिव्रताय ओषधीर्वनिनानि यज्ञिया ।**
**अन्तरिक्षं स्वारापप्रुरूतये वशं[1] देवासस्तन्वी३ नि मामृजुः ॥**

**भाष्यविवृतिः**– आपो देवासः देवताः द्यावापृथिवी च वनिनानि स्तुत्यानि वन्यानीति णः । **यज्ञिया** यज्ञियानि । ओषधीः । **व्रता** व्रतानि । **अभिजनयन्** जनयन्त्यः । अन्तरिक्षं स्वाश्च ऊतये रक्षायै । **आपप्रुः** अपूरयन् । **तन्वीः** तनूः शरीराणि । **निमामृजतुः** शुद्धान्यकुर्वन् ।

१. 'वशं यथेच्छमित्यर्थः । वशकान्ताविति हि धातुः, कान्तिश्चेच्छा ।

भा.– अचेतनं चेतनेभ्यो दैवतेभ्यश्च चेतनाः ।
देवाः प्राणाच्च स प्राणो विष्णोरेव सदैव तु ॥

स्वभावं च प्रवृत्तिं च विकारं च समाप्नुयुः ।
कश्चिद्भाव ऋते तेषां नैव स्याच्च[१] कदाचन ॥

अचेतनप्रवृत्तौ तन्न दृष्टान्तोऽस्ति कश्चन ।
चेतनानां प्रवृत्तेश्च दृष्टत्वादेव सर्वशः ॥

अदृष्टं दृष्टवज्ज्ञेयं यथा दृष्टप्रणेतृकम् ।
विसर्पत् तण्डुलं दृष्ट्वा कल्प्या तत्र पिपीलिका ॥

न तद्दृष्ट्वैव दृष्टानामपिपीलिकसर्पणम् ।
एवं दृष्टानुसारेण चिदधीनमचेतनम् ।

**भाष्यविवृतिः**– अचेतनस्य फलदातृत्वाद्यनुपपत्तिमेव चेतनाचेतन-प्रवृत्तिप्रकारप्रदर्शनेन दृढयति– **अचेतनमिति** ॥ साधुत्वासाधुत्वस्वभावम् । एतत् एतेभ्यः चेतनादिभ्यः ऋते तेषामचेतनादीनां । कश्चिदपि भावो नैव स्यात् । चोऽवधारणार्थः । केचिदचेतनाः स्वतः प्रवर्तन्ते अयस्कान्त-सन्निधावयःप्रवृत्तदर्शनादिति चेत् न । अचेतनंचेतनेभ्य इति वचनाद-विवाददृष्टन्ताभावादित्याह– **अचेतनेति** ॥ ननु चेतनोऽपि शरीरेणाचेतनेन विना प्रवर्तितुमशक्त इति समः समाधिरित्यत आह– **चेतनानामिति** ॥ एवमात्मप्रेरिताना चेतनानां शरीरादिप्राप्तिसंभवाच्चेतनानां प्रवृत्तेरस्तु सर्वशः सर्वत्र दृष्टत्वादेव न समः समाधिरित्यर्थः । अचेतनप्रवृत्तावित्युक्त-मपपादयन्नाह– **अदृष्टमिति** ॥ अदृष्टमप्रतीतकर्तृकमपि कूलपतनादिकं दृष्टवत् देवदत्तपातितवस्तुपतनवत्सकर्तृकं ज्ञेयम् । कूलपतनादिकमचेतना-

१. ''नैतैः स्याच्च'' हृपाठः । नैतत्स्याच्च पाठान्तरम् ।

धीनमेव कस्मान्नाङ्गीक्रियत इत्याशङ्कां लोकन्यायप्रकारप्रदर्शनेन शमयति– **यथेति** ॥ तत्र विसर्पत्तण्डुलसमीपे तण्डुलसर्पणकारयित्री पिपीलिकाधीन-सर्पणवत्त्वेन दृष्टानाम् अचेतनं प्रवर्तत इति शेषः ।

**भा.– दुर्घटा शक्तिरपि हि[१] पिशाचानां हि[२] दृश्यते ।**
**देवानां किमु किम्वेव परमस्य हरेः प्रभोः ॥**
**इत्यादेश्च ब्रह्मतर्के ।**

**भाष्यविवृतिः**– न च कूलपतनादेः सकर्तृकत्वसाधनं कार्यत्वहेतु-श्चेतनस्यानुपलम्भबाधितमिति अनुपलम्भमात्रस्य साधनबाधनाक्षमत्व-दित्याशयवान् शरीरादिमत एव कर्तृत्वात् तस्योपलम्भयोग्यत्वात्तदनुप-लम्भबाधितमित्यतस्तदसिद्धिं कैमुत्या समर्थयते– **दुर्घटेति** ॥ दुर्घटा शक्तिः शरीरादिमतामप्यदृश्यत्वपरकायप्रवेशत्वादिशक्तिः ।[३]

## हृदयेत्यादिशब्दानां विवक्षितार्थकथनम्

**भा.– हृदयज्ञो भगवत्तत्त्वज्ञः । हृद्ययनाद्धृदयम् । 'उदरं ब्रह्मेति शार्कराक्ष्या उपासते हृदयं ब्रह्मेत्यारुणयः' इति श्रुतिः । 'कोलं पूगफलं प्रोक्तं कलं ताम्बूलपत्रकम्' इत्यभिधानम् ।**

**भूतानां भौतिकानां च मन्त्राहुतिगणस्य च ।**
**अचेतनगणस्यास्य कल्पको मित्रनामकः ॥**

**प्राणा भूतानि मन्त्राद्याश्चिदचित्त्वविभेदिनः ।**
**अचितां कल्पको मित्रश्चितां वाय्वादयः स्मृताः ॥**
**इति वस्तुतत्त्वे ।**

**सर्वमचेतनं सङ्कल्प्यते ।**

---

१. 'तु' हृपाठः । २. 'च' हृपाठः । ३. लोके पिशाचादीनां अनीश्वराणां तादृशशक्तिमत्त्वे सर्वेश्वराणां सुतरां तत्सिद्धेरिति भावः ।

**भाष्यविवृतिः**– मनोज्ञत्वप्रतीतिं निवारयन् हृदयज्ञशब्दमनूद्य व्याचष्टे **हृदयज्ञ इति** ॥ ननु रूढ्या योगेन वा[१] व्याख्यानम् । तत्र किमनुसृत्यैवं हृदयशब्दस्य भगवदर्थत्वेन व्याख्यानमित्यतस्तत्र योगं दर्शयति– **हृदीति** ॥ **अयनात्** प्रवर्तनात् । रूढिं दर्शयति– **उदरमिति** ॥ कोल-शब्दार्थमप्रतीतेरभिधानेनाह– **कोलमिति** ॥ समक्लृपतां द्यावापृथिवी इत्यारभ्य लोकानां संक्लृप्त्यै सर्वं सङ्कल्प्यत इत्यन्तेन सङ्कल्पात् सर्वजग-दुत्पद्यत इति प्रतीयते तदयुक्तमतस्तद्विवेकेनाह– **भूतानामिति** ॥ अचेतनगणस्येति सूचितं विभागं विशदमाह– **प्राणा इति** ॥ इति वचनात्सर्वमचेतनं मित्रः सङ्कल्प्यते जनयतीति योजना ।

भा.– **'अस्थिरस्मरणं चित्तं स्थिरसंस्मरणं स्मरः'** इति शब्दनिर्णये ।
**'वेदनं ज्ञानमात्रं स्याद् विद्वत्त्वं तु विशेषतः'** इति च ।

**मोक्षे यस्मिन् प्रवेशः स्यात् सा प्रतिष्ठा हि मुख्यतः ।**
**उपचारतस्त्ववस्थानमिति शब्दविदो विदुः** ॥ इति च ।

**देवा मनुष्यतां प्राप्ता विज्ञेया देवमानुषाः ।**
**ध्यानं कुर्वन्त इव ते नैव स्युर्बहुभाषिणः ॥**
**ब्रूयुरर्थवतीं वाचं नानर्थां[२] प्रायशो हि ते** ॥ इति पाद्मे ।

**बलं ज्ञानबलं चैव बाह्यं चेति द्विधा मतम् ।**
**युक्तिज्ञता ज्ञानबलं सा ज्ञानादधिका मता[३] ॥**

इति तत्त्वसारे ।

**भाष्यविवृतिः**– चित्तस्मरशब्दयोरप्रतीतेरर्थावाह– **अस्थिरेति** ॥ यदयं वेद यद्वा अयं विद्वानित्यनयोरेकार्थत्वप्रतीतिं निवारयन् अर्थावाह–

१. योगेन च इति खपाठः । २. 'नानार्थां' पाठान्तरम् ।
३. ''युक्तिज्ञानाद् ज्ञानबलं तत् ज्ञानादधिकं मतम्'' हृपाठः ।

**वेदनमिति** ।। अयनप्रतिष्ठाशब्दयोरेकार्थत्वप्रतीतिं निवारयन्नर्थभेदमाह- **मोक्ष इति** ।। उपचारतोऽमुख्यतोऽवस्थानमयनमित्यर्थः। देवांश्च मनुष्यांश्चेति प्रतीतिं निवारयन् ध्यायतीव पृथिवीत्यादिबहुवारमावृत्तेवशब्दार्थं चाप्रतीतेराह- **देवा इति** ।। एको बलवान् विज्ञानवतां शतमप्याकंपयते इत्युक्तं बलस्य च विज्ञानादाधिक्यमयुक्तं प्रतीयतेऽतस्तद्धटयन् व्याचष्टे- **बलमिति** ।। बाह्यशरीरदार्ढ्यलक्षणम् ।

## अन्नाद्यचेतनपदार्थेष्वपि तारतम्यनिरूपणम्

भा.- अन्नं ज्ञानरसान्नं च वाह्यमन्नमिति द्विधा ।
ज्ञानान्नं ज्ञानवलतः श्रेष्ठं ज्ञानरतिर्हि तत् ।।

यद्बाह्यं तु बलं तस्माद् वाह्यमन्नं विशिष्यते ।
आपश्च द्विविधः प्रोक्तास्तृप्तिर्या ज्ञानतो रतेः ।।

ता ज्ञेया आन्तरा आपो बाह्यास्तु द्रवरूपकाः ।
आन्तरान्नादान्तरापो वाह्याद्बाह्यास्तथा वराः ।।

एवं तेजः प्रातिभाख्यं बाह्यं चेति द्विधा मतम् ।
प्रातिभं ज्ञानतृप्तेश्च परमाकाश एव च ।।

स्थिरा तु प्रतिभान्तस्थाः छिद्रमेव तु वाह्यगः[१] ।
स्थिरा हि प्रतिभा श्रेष्ठा चञ्चला या स्मराभिधा ।।

एकधैव स्मृतिः श्रेष्ठाऽऽशाऽपरोक्षदृगात्मकम् ।
श्रेष्ठं सुखं ततो मोक्षे प्राणाख्यं परमं सुखम् ।।

---

१. ''बाह्यगम्'' पाठान्तरम् ।

**भाष्यविवृतिः**– युक्तिजं ज्ञानं चेद्बलं कथं तर्ह्यन्नस्य तस्मादुक्तं भूयस्त्वं घटत इत्यतस्तद्घटयन् व्याचष्टे– **अन्नमिति** ॥ ज्ञानरसान्नस्य ज्ञानबलत उक्तं श्रैष्ट्यमुपपादयति– **ज्ञानेति** ॥ आपश्चेत्याद्यप्युक्त शङ्का-परिहारपरं व्याख्यानं द्रष्टव्यम् । ज्ञानतो ज्ञाने रतेः कारणात्तृप्तिर्विषये-ष्वलम्बुद्धिर्याऽस्ता इति योज्यम् ॥ बाह्याद्भ्यो बाह्यं च तैजः परमिति योज्यम् । आकाशश्च द्विधैव । चञ्चलायाः प्रतिभायाः । अचञ्चल-प्रतिभायाः[1] स्मराभिधा एकधैवाच्छिद्रा स्मृतिः श्रेष्ठा । स्मरादाशा श्रेष्ठेति योज्यम् । आशास्वरूपं निरूपयति– **अपरोक्षदृगात्मकं श्रेष्ठं सुखमिति** ॥ परमं सुखं श्रेष्ठमिति योज्यम् ।

भा.– **उत्तरोत्तरमेतद्धि वाय्वन्ताभिमतं सदा ।**
**बाह्याद्भ्यो बाह्यमन्नं च जायतेऽन्यत् तदन्यथा ॥**

**व्यक्तिरन्तर्गतानां तु विपरीतक्रमाद्भवेत् ।**
**तथापि मोक्षगं यस्मात् स्वभावो नित्य एव तु ॥**

**अतस्तस्मादापरोक्ष्यं कादाचित्कं हि जायते ।**
**दृष्ट्यधीना स्मृतिश्चेयं प्रतिभा स्मृतिसम्भवा ॥**

**स्थैर्यमालम्ब्य तु चलमन्यथा नैव तिष्ठति ।**
**प्रतिभातस्य तृप्तिः स्यादतृप्तस्य तु का रतिः ॥**
**तत एवं क्रमादेवं वरिष्ठः प्राणजो गुणः ॥ इति च ॥**

**योऽसौ प्राणः स प्राणेन परब्रह्मणा याति । स एष[2] भगवान् प्राणं**

---

१. अकारप्रश्लेषेणाचञ्चलाया इत्यत्रापि संबध्यते ।

२. 'स एव' पाठान्तरम् ।

**प्रत्यभीष्टं ददाति । प्राणस्य प्राणमिति श्रुतेः । प्राणो वायुः परमात्मानं च ज्ञानेन दर्शयंन् ददाति ।**

सर्वस्मादतीतमुत्तमं वदतीत्यतिवादी ॥ १५ ॥

**भाष्यविवृतिः**– उत्तरोत्तरमवस्थितं नामादिकं प्राणावसानमित्याह– **उत्तरोत्तरमिति** ॥ सदोत्तरोत्तरमुत्तमत्वेन स्थितमेतन्नामादिकं वाय्वन्ताभिमतं हीति योज्यम् । उत्तरोत्तरस्थितस्य जडस्य पूर्वपूर्वजडादुत्तमत्वे युक्तिमुपलक्षणत्वेनाह– **बाह्यान्नेच इति** ॥ बाह्यान्नाच्च बाह्यं बलं जायते इत्यादि योजना द्रष्टव्या । कार्यकारणयोः कारणं श्रेष्ठम् । पितुस्तद्दर्शनादिति भावः । अन्यदान्तरान्नादिकम् । तदन्यथेत्युक्तं विशदमाह– **व्यक्तिरिति** ॥ विपरीतक्रमाच्चलप्रतिभयास्थिरप्रतिभेत्यादिविपरीतक्रमात् ।[१] पूर्वपूर्वदेवादुत्तरोत्तरं देवाभिव्यक्तिरिति वार्थः । मुक्त्यादेर्ज्ञानाद्यपेक्षयाऽऽविर्भावश्चेन्मोक्षादेर्ज्ञानाद्यपेक्षयोत्तमत्वं न स्यादित्यत आह– **तथापीति** ॥ अत्र योजनाक्रमः । यद्यपि ज्ञानव्यङ्ग्यो मोक्षस्तथापि प्राणजो गुण आनन्दो ज्ञानाद्वरिष्ट इत्युपरिसम्बन्धः । तत्कथमित्यत उक्तम् **मोक्षगामिति** ॥

यस्मान्मोक्षगं सुखं स्वभाव एवातः स्वभावत्वान्नित्य एव तु । तस्मात्सुखस्य स्वरूपत्वाद्योग्यस्यापरोक्ष्यं जायते । अन्तःकरण विकार[२]-त्वादापरोक्ष्यं कादाचित्कम् । स्थिरा स्मृतिः दृष्ट्यधीना योग्यस्य भवति । स्मृतिभवेयं प्रतिभा योग्यस्य भवति । चलं प्रातिभं ज्ञानं स्थैर्यमालंब्य योग्यस्य तिष्ठति । अन्यथा नैव प्रतिष्ठति । प्रतिभातश्च तृप्तिः स्यात्तृप्तिश्च

---

१. ज्ञानबलात् ज्ञानरतिः, रतेस्तृप्तिः, तृप्तेश्चलप्रतिभा । चलप्रतिभायाः स्थिरप्रतिभेत्यादि-बाह्यबलान्नादिकार्यकारणभावक्रमापेक्षया वीपरीतक्रमेण कार्यकारणभावो भवेदित्यर्थः ।

२. विकारादिति खपाठः ।

योग्यस्य स्यात् । तृप्तस्य हि ज्ञानरतिर्भवेत् । अतृप्तस्य तु का रतिः ? न कापि । एवमुक्तक्रमादुक्तक्रमेण । ततः ज्ञानादेर्मोक्षाधीनत्वात् प्राणजो गुणो वरिष्ट इति ।

प्राणः प्राणेन यातीत्येतदप्रतीतेर्व्याचष्टे– **य इति** ॥[1] परमात्मनैव प्रेरितो याति । प्राणोवा आशाया भूयानिति आशापरत्वेन प्रकृतः प्राणो योऽसाविति परामृश्यते । प्राणः प्राणं ददातीत्येतदप्रतीतेरपेक्षितं पूरयन् व्याचष्टे– **स एष इति** ॥ तमेवार्थं श्रुत्या समर्थयते– **प्राणस्येति** ॥ प्राणः प्राणं ददातीत्येतदुक्तार्थघटनाय प्रकारान्तरेण व्याचष्टे– **प्राण इति** ॥ ददाति शिष्येभ्य इति योज्यम् । **व्यतिषं** विलुण्ठ्यम् । लोकप्रतीत्याऽतिवादीत्येतदन्यथाप्रतीतेर्व्याचष्टे– **सर्वस्मादिति** ॥ **इति पञ्चदशः खण्डः** ॥

## अथ षोडशः खण्डः

## मुख्यप्राणादपि विष्णुरुत्तमः

**उप.– एष तु वा अतिवदति यः सत्येनातिवदति सोऽहं भगवः सत्येनातिवदानीति सत्यं त्वेव विजिज्ञासितव्यमिति सत्यं भगवो विजिज्ञास इति ॥ १–१६ ॥**

भा.– 'एष तु वा अतिवदति' इति तुशब्दोऽर्थान्तरवाची । अस्ति भगवः प्राणाद्भूय इति प्रश्नो व्यतिहार्यः[2] ।

**यत्रानवसरोऽन्यत्र पदं तत्र प्रतिष्ठितम् ।**
**यत्र प्रमाणं वाक्यं वा व्यतिहार्यं न संशयः ॥**

---

१. आद्यः प्रथमान्तः प्राणशब्दः आशोत्तमतया प्रकृतप्राणपरः । द्वितीयः परब्रह्मपरः । तृतीयोऽव्यवधानेन प्रकृतपरब्रह्मपर इति भावः ।

२. 'प्रश्नोऽप्यध्याहार्यः' इति पाठः ।

'ओं व्यतिहारो विशिंषन्ति हीतरवत्' इति च भगवद्वचनम् ।

अतिवादी प्राणवादी विष्णुवादी विशेषतः ।
स सत्यो भगवान् विष्णुर्यन्निर्दोषो नियामकः ॥

**भाष्यविवृतिः**– एषतु वा अतिवदतीत्यस्य प्राणातिवाद्यनुवादित्वप्रतीतिं निवारयंस्तुशब्दार्थमाह– **एषतु वा अतीति** ॥ अस्ति भगव आशाया भूय इत्यादाविव प्रश्नोत्तराभावात्कथमर्थान्तरवाचीत्यत आह– **अस्तीति** ॥ **व्यतिहार्यः** अध्याहार्यः । प्राणाद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति सत्यं वाव प्राणाद्भूय इत्यप्यध्याहार्यमिति योज्यम् । एकप्रकरणत्वे तुशब्दायोगादिति भावः ।[1] अत्र न्यायमप्याह– **यत्रेति** ॥ यत्र वाक्ये पदमपेक्षितं अन्यस्य पदस्यानवसरः अनाकाङ्क्षितत्वेन । तत्र तत्प्रतिष्ठितमेव। यत्र प्रमाणं वाक्यं वा अपेक्षितं तत्र तदध्याहार्यमिति योज्यम् । सूत्रकृताचाध्याहरणकरणस्योक्तत्वाच्चाध्याहार इति भावेन सूत्रं पठति–**व्यतीति** ॥ भिन्नप्रकरणत्वे विप्रतिपत्तेस्तत्प्रमाणेन च व्याचष्टे– **अतीति** ॥ प्राणात्सत्यस्येव सत्याद्विज्ञानादिषट्कस्य पृथक्त्वप्रतीतिं निवारयन् सत्यादिशब्दान् व्याचष्टे– **स सत्य इति** ॥ इति षोडशः खण्डः ॥

## अथ सप्तदशः खण्डः

## भगवान् सत्यज्ञानादिगुणपरिपूर्णः

**उप.– यदा वै विजानात्यथ सत्यं वदति नाविजानन्सत्यं वदति विजानन्नेव सत्यं वदति विज्ञानं त्वेव विजिज्ञासितव्यमिति विज्ञानं भगवो विजिज्ञास इति ॥ १-१७ ॥**

---

१. प्राणातिवादिनोऽतिवादित्वमुक्त्वा सत्यवादिनोऽप्यतिवादित्वमुच्यते । तत्र प्रणातिवादिनः सत्यातिवादी तुशब्देन विशिष्यते । तेन ज्ञायतेऽन्योऽसावन्योऽयमितीति भावः ।

यदा वै मनुतेऽथ विजानाति नामत्वा विजानाति मत्वैव विजानाति मतिस्त्वेव विजिज्ञासितव्येति मतिं भगवो विजिज्ञास इति ॥१-१८॥

भा.– विशिष्टज्ञानरूपश्च सामान्यज्ञानरूपकः ।

उप.– यदा वै श्रद्दधात्यथ मनुते नाश्रद्दधन्मनुते श्रद्दधदेव मनुते श्रद्धा त्वेव विजिज्ञासितव्येति श्रद्धां भगवो विजिज्ञास इति ॥ १-१९ ॥

यदा वै निस्तिष्ठत्यथ श्रद्धधाति नानिस्तिष्ठञ्छ्रद्दधाति निस्तिष्ठन्नेव श्रद्दधाति निष्ठा त्वेव विजिज्ञासितव्येति निष्ठां भगवो विजिज्ञस इति ॥ १-२० ॥

भा.– नित्यश्रद्धास्वरूपश्च तथैव स्थैर्यरूपकः ॥

उप.– यदा वै करोत्यथ निस्तिष्ठति नाकृत्वा निस्तिष्ठति कृत्वैव निस्तिष्ठति कृतिस्त्वेव विजिज्ञासितव्येति कृतिं भगवो विजिज्ञास इति ॥ १-२१ ॥

यदा वै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोति सुखं त्वेव विजिज्ञासितव्यमिति सुखं भगवो विजिज्ञास इति ॥ १-२२ ॥

भा.– स एव सर्वकर्ता च सुपूर्णानन्दरूपकः ।

## पूर्णसुखात्मकत्वं भगवतो लक्षणम्

उप.– यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति ॥ १-२३ ॥

भा.– स च सर्वगुणैः पूर्णो भूमेत्युच्चार्यते ततः ।

## अथ चतुर्विंशः खण्डः

### स्वातन्त्र्यनित्यमुक्तत्वे अपि भगवल्लक्षणे

उप.– यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाऽथ यत्रान्यत् पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यꣳ स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि यदि वा न महिम्नीति ॥ १ ॥

गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति नाहमेव ब्रवीमीति होवाचान्यो ह्यन्यस्मिन् प्रतिष्ठित इति ॥ २ ॥ २४ ॥

भा.– यदधीनं विना नान्यत् किञ्चिदस्ति कुतश्चन ॥
स भूमोक्तोऽतिपूर्णत्वादन्यदल्पमुदीर्यते ।
स सर्वगुणसम्पूर्णः सर्वदेशेषु सर्वदा ॥

स्वतन्त्रः सर्ववस्तूनि तदधीनानि सर्वशः ।
पूर्णत्वात् सुखरूपोऽसौ सर्वकर्ता सुखत्वतः ॥

कर्तृत्वात् सुस्थिरश्चासौ स्थिरत्वादास्तिकस्तथा ।
आस्तिकत्वाच्च मन्ताऽसौ विज्ञाता च ततो हरिः ॥
विज्ञातृत्वाच्च निर्दोषः सर्वस्यापि नियामकः ।

**भाष्यविवृतिः**– भूम्नो साधारणधर्मान् निरूपयति– यत्र नान्यदित्यादिना ॥ भूम्नोऽसाधारणधर्मस्योक्तस्यातिव्याप्तिं परिहरति– यत्रान्यदित्यादिना ॥ यत्र दृष्टोऽन्यदभावान्न पश्यतीति प्रतीतिं निवारन् यत्र नान्यदित्यादिवाक्यं व्याचष्टेयदधीनमिति ॥ स च सर्वेत्युक्तं भूमशब्दार्थ-

मेव सङ्कोच्याह– **स भूमेति** ॥ यत्रान्यत्पश्यतीत्यादि व्याचष्टे– **अन्यदल्पमुदीर्यत इति** ॥ अन्यदल्पमत एवास्वतन्त्रमुदीर्यते । भूमशब्दार्थं विशदमाह– **स सर्वेति** ॥ असाधारणधर्ममेव विशदमाह– **स्वतन्त्र इति** ॥ सत्यत्वादिना भगवान् विज्ञानादिमान् विज्ञेय इति सत्यादिप्रकरणतात्पर्यं व्युत्क्रमेणाह– **पूर्णत्वादित्यादिना** ॥ सर्वत्र पूर्णत्वादेवेत्यवधारणं योज्यम् । गो अश्वमिव गो अश्वस्य महिमेव । स्वे महिम्नीत्यनङ्गीकारे बाधकान्तरमाह– **हस्तीति** ॥ इति श्ववत् अन्योऽज्ञः ॥ **इति चतुर्विंशः खण्डः** ॥

## अथ पञ्चविंशः खण्डः

## सर्वत्रव्याप्तत्वमपि भगवल्लक्षणम्

**उप.– स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेदꣳ सर्वमित्यथातोऽहङ्कारादेशो एवाहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदꣳ सर्वमिति ॥ १ ॥**

**अथात आत्मादेश एवात्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदꣳ सर्वमिति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवत्यथ येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषाꣳ सर्वेषु लोकेष्वकामचारो भवति ॥ २ ॥ २५ ॥**

भा.– भूमा नारायणाख्यः स्यात् स एवाहङ्कृतिः स्मृतः ॥

आकार्योऽहमिति ह्येष ततोऽहङ्कार उच्यते ।

जीवस्थस्त्वनिरुद्धो यः सोऽहङ्कार इतीरितः ॥

सोऽप्यणुत्वेऽपि संव्यापी परमैश्वर्ययोगतः ।
यथा वालतनौ विष्णौ मार्कण्डेयेन धीमता ॥

प्रविश्य नान्तोऽधिगत एवं व्याप्तो हरिः परः ।
अणुरूपोऽपि भगवान् वासुदेवः परो विभुः ॥
आत्मेत्युक्तः स च व्यापी न च भेदो हरौ क्वचित् ॥
इति परमसारे ।

भूमप्रसादं विना नाल्पे सुखमस्ति । मर्त्यं च पूर्वम् ।

'अल्पापि ह्यमृता देवी श्रीः पूर्णातिप्रियत्वतः' इति च ।

आत्मरतिर्भगवद्रतिः । स्वो भगवान् । सोऽस्य प्रत्यक्षतः आज्ञापयिता भवतीति स्वराट् ।

**भाष्यविवृतिः**– भूमा स्वे महिम्नि प्रतिष्ठित इत्यस्योपपादनाय सर्वव्यापकत्वलक्षणं महिमानमाह– **स एवाधस्तादित्यादिना** ॥ अहङ्कारात्मकलक्षणरूपान्तरेण महिमप्रकारमुपदिशति– **अथात इत्यादिना** ॥ अथातः-शब्दार्थौ वक्ष्यति । अहङ्कारस्यादेश उपदेशः क्रियते । भगवतः कानि रूपाणि भूमादिनामकानीति जिज्ञासायां भूम्नोऽहङ्कारादेर्भेदप्रतीतिं निवारयंस्तत्प्रकरणं व्याचष्टे– **भूमेति** ॥ जीवान्तश्चेदणुरेव न स व्यापीत्यत आह– **सोऽपीति** ॥ सोऽपि जीवान्तस्थोऽप्यणुत्वेऽपि संव्यापी । अणुत्वमहत्वयोरेकत्र समावेशे घटकमाह– **परमेति** ॥ अस्तु घटकं भगवति अणुत्वमहत्वसमावेशे प्रमाणं वक्तव्यमित्यतो मार्कण्डेयप्रत्यक्षं प्रमाणमाह– **यथेति** ॥ **अणुरूपोपीति** पूर्वत्र सम्बध्यते । भगवानित्याद्युत्तरत्र । ननु पूर्णमेकमेव अतः कथं बहवः पूर्णा उच्यन्त इत्यतो न भिन्ना इत्याह– **नचेति** ॥ यो वै भूमा तत्सुखं यत्सुखं स भूमेति यावत् । तथा च

मुक्तानामपूर्णानामपि सुखत्वाद्यत्सुखं स भूमेत्युक्तिरयुक्तेत्यतः यत्स्वतन्त्रं सुखं स भूमेत्यतो नायुक्तिरित्याह– **भूमेति** ॥

ननु मुक्तज्ञातमल्पं भवत्यतः कथं यदल्पं तन्मर्त्यमित्युक्तिरित्यतस्तद्घटयति– **मर्त्यमिति** ॥ पूर्वं सभयमिति[1] चशब्दार्थः । एतेन भूमा सदाऽमृतमभयमित्युक्तं भवति । नन्वल्पाऽपि श्रीरमृताऽतः कथं यदमृतं स भूमेत्युक्तिरित्यतस्तां विना यदमृतं स भूमेति योज्यमित्याह– **अल्पापीति** ॥ साऽपि लक्ष्यान्तर्गतेति नोक्तदोष इत्याह– **पूर्णेति** ॥ आत्मापरोक्षज्ञानिनः फलमाह– **सवा एष इत्यादिना** ॥ दर्शनस्य मननं साधनं मननस्य श्रवणं साधनमित्याह– **एवं मन्वान एवं विजानन्निति** । आत्मनो स्वेनैव रतिर्यस्येत्यादिप्रतीतिं निवारयन् व्याचष्टे**आत्मेति** ॥ भगवता रतिर्यस्येति भगवद्रतिः । स्वराट् स्वतन्त्रो भवतीति प्रतीतिं निवारयन् व्याचष्टे– **स्व इति** ॥ स्वः स्वतन्त्रो भगवानस्यास्तीति स्वराट् । सोऽस्य प्रत्यक्षत आज्ञापयतीति मुक्तस्य वैशेष्यम् ॥ इति **पञ्चविंशः खण्डः** ॥

## अथ षड्विंशः खण्डः

## मुक्तो भगवत्कार्याणि साक्षात् पश्यति

**उप.– तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशाऽऽत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः सङ्कल्पः आत्मतो मन आत्मतो वागात्मतो नामात्मतो मन्त्रा आत्मतो कर्माण्यात्मत एवेद९ सर्वमिति ॥ १ ॥**

---

१. सभयश्चेति खपाठः ।

भा.– आत्मतः प्राण आत्मत आशेत्यादि मुक्तः सन् प्राणादीनां सृष्ट्यादिकं पश्यतीत्यर्थः। 'सर्वं हि पश्यः पश्यति' इति वाक्यशेषात्। पश्य इति द्रष्टा। 'यदा पश्यः पश्यते रुक्मवर्णम्' इति श्रुतेः।

भूमोपासनयोग्यस्तु साक्षाद्ब्रह्मैव मुख्यतः।
स तद्विद्यावलेनैव विष्णुना रतिमाप्नुयात्॥

तेनैव क्रीडते नित्यं स्त्रीरूपो मिथुनीभवेत्।
तदानन्दः स एवास्य राजा भवति नापरः॥

पश्येच्च प्राणसृष्ट्याद्यं ये तदन्य उपासकाः।
ते यथायोग्यमाप्स्यन्ति फलं मुक्तौ न संशयः॥

इति परमतत्त्वे।

**भाष्यविवृतिः**– आत्मतः प्राण आत्मतः आशेत्यादौ मुक्तात्प्राणादिसृष्टिर्भवतीत्यन्यथा प्रतीतिं निवारयितुमनुवदति– **आत्मत इति** ॥ अनूदितस्यार्थमाह– **मुक्त इति** ॥ आत्मतो भवत्प्राणसृष्ट्यादिकं पश्यतीत्येवार्थः कुत इत्यत आह– **सर्वं हीति** ॥[१] पश्यः क इति जिज्ञासायां पश्यतीति पश्यो द्रष्टा जीव इत्याह– **पश्य इति** ॥ द्रष्टा भवतु स जीव इति कुत इत्यत आह– **यदेति** ॥ भूमोपास्तौ यः कोऽप्यधिकारी तस्य सर्वस्याप्यत्मरतिरित्याद्युक्तं फलं भवतीति प्रतीतिं निवारयन् फलप्रकरणं व्याचष्टे– **भूमेति** ॥ तदानन्दः तन्निमित्तानन्दः।

## अहङ्कारशब्दवाच्यो भगवाननिरुद्धः, न जीवः

भा.– न च भूमानं भगवो विजिज्ञास इति पृष्टः सन् भूम्नो लक्षणं स एवाधस्तात् स उपरिष्टादित्यादिना पूर्णत्वं भगवतोऽन्यस्याहङ्कार-

१. सर्वं भगवत्कर्तृकं प्राणसृष्ट्यादिकमित्यर्थः।

**स्योपदिशतीति युज्यते । न चाहङ्कारस्य पूर्णत्वमस्ति । न च मुख्ये पूर्णत्वे युज्यमाने उपचरितं युज्यते । न चाहङ्कारस्य काचित् प्रस्तुतिः । अथशब्दस्तु रूपान्तरापेक्षया युज्यते । अतःशब्दस्तत्प्रसादादिति ।**

**भाष्यविवृतिः–** जीवान्तस्थोऽनिरुद्धाख्यो भगवानहंकार इति व्याख्यातं तत्परिशुद्धये अथातोऽहङ्कारादेश इत्यादिना अविद्याप्रथमकार्याहङ्कारग्रन्थि-र्निरूप्यत इति कश्चित् । तत् प्रकरणानुपपत्या दूषयति– **नचेति** ॥ इत्यादिनोक्तं अहमेवाधस्तादित्यादिनोपदिशतीति न युज्यते अतिव्याप्तेरिति भावः । नकेवलमतिव्याप्तिप्रसक्त्या न युज्यत इति किंत्वहङ्कारस्य भगव-दन्यत्वे असम्भविचेत्याह– **न चेति** ॥[१] न वयं मुख्यतोऽहङ्कारं पूर्णं ब्रूमः । येनोक्तदोषः स्यात् । किंतु देहादिविषयत्वेन पूर्णम् इत्युपचर्यत इत्यत आह– **न चेति** ॥ अहङ्कारस्य भगवद्रूपत्वाङ्गीकारेण मुख्ये पूर्णत्वे युज्यमाने प्रकृतसङ्गत्यभावाच्च नाविद्याग्रन्थिरहङ्कार उच्यत इत्याह– **न चेति** ॥ प्रकृते सङ्गत्यभावेपि प्रकरणान्तरत्वद्योतकाथशब्दबलदहङ्कारोङ्गी-क्रियत इत्यतस्तस्य गतिमाह **अथेति** ॥ प्रसङ्गप्राप्तत्वादथशब्द-सन्निहितातःशब्दार्थमप्रतीतेराह– **अत इति** ॥[२]

## "आत्मरतिः स्वराट्" इत्यत्र आत्मस्वशब्दौ विष्णुवाचकौ

**भा.– आत्मरतिः स्वराडित्यादि । यो ब्रह्माणं विदधाति पूर्वमिति ब्रह्मण[३] उत्पत्तिप्रसिद्धेः स्वयम्भूरात्मभूरित्यादिष्वात्मशब्दः स्वयंशब्दश्च यथा विष्णुवाची तद्वदेवात्राप्यात्मशब्दो विष्णुवाच्येव ।**

---

१. पूर्णत्वं सर्वगतत्वमित्यर्थः ।

२. इत्यर्थतया युज्यत इति संबन्धः । अशब्दः परमात्मवाची । अ इति ब्रह्म इति श्रुतेः । तस्मादिति पदार्थमभिप्रेत्य तत्प्रसादादिति तात्पर्यकथनमिति भावः ।

३. "इति ब्रह्मणः प्रसिद्धः" ह.पाठः ।

**भाष्यविवृतिः**– आत्मस्वशब्दौ विष्णुपरौ व्याख्यातौ तत्प्रयोगप्रदर्शनेन द्रढयति– **आत्मरतिरित्यादिना** ।। अत्र योजनाक्रमः स्वयम्भूरात्मभूरित्यादिष्वात्मशब्दः स्वयंशब्दश्च यथा विष्णुवाची तद्वदेवात्राप्यात्मरतिः स्वराडित्यादावपि आत्मशब्दः स्वयंशब्दश्च विष्णुवाच्येव ।[१] स्वस्माद्भवतीति स्वयम्भूरात्मनो भवतीत्यात्मभूरित्यर्थत्वे कथमयं दृष्टान्त इत्यतो नैवं व्याख्यानं युक्तमित्युक्तम्– **यो ब्रह्माणमित्यादिना** ।। ब्रह्मण उत्पत्तिप्रसिद्धेर्विष्णोरिति योज्यम् ।

## मुक्तेभ्यः सकाशात् प्राणादिसृष्टिनिराकरणम्

**भा.– न च मुक्तेभ्यः प्राणादिकमुत्पद्यते । 'ओं जगद्व्यापारवर्जम्' इति निर्णीतत्वात् ।[२] भगवता । आत्मत एव प्राणो जायत इत्यवधारणान्न भगवतोऽन्यस्मात् प्राणो जायते ।**

**आत्मेति मुख्यतो विष्णुस्तदन्ये तूपचारतः ।**
**तथैव स्व इति प्रोक्तस्तस्माद् ब्रह्माऽऽत्मभूः स्वभूः ।।**
**इति स्कान्दे ।**

**भाष्यविवृतिः**– आत्मतः प्राण इत्यादिना मुक्तात्मतः प्राणाद्युत्पत्तिरुच्यत इत्यर्थः किं नस्यात् ? नस्यात् प्रमाणभावादित्याह **नचेति** ।। इत्यत्र प्रमाणमिति योज्यम् । न केवलं तत्र प्रमाणाभावः । किंतु तद्राहित्यस्य निर्णीतत्वाच्चेत्याह– **जगदिति** ।। आत्मत एवेदं सर्वमित्युपरित-

१. न तु स्वात्मार्थः । नच तत्राप्यात्मस्वयंशब्दौ विष्णुपरौ कुत इति वाच्यम् । स्वजन्यत्वस्यात्माश्रयग्रस्ततया दूपितत्वात् । तस्मदात्मा च स्वयश्च भगवांस्ततो भूतत्वादत्मभूः स्वयम्भूरित्येवार्थो वर्णनीयः । चतुर्मुखे विष्णुजातत्वस्य यो ब्रह्माणम् इत्यादिश्रुतिसिद्धत्वादित्यर्थः ।

२. 'वर्णितत्वाद्' पाठान्तरम् ।

नमवधारणं आत्मत एष प्राण इत्यादावप्यनुवर्तनीयमित्याशयवांस्तद्दर्शयन्नात्मशब्दस्य मुक्तात्मपरत्वे तद्बाधकञ्चाह– **आत्मत एवेति** ॥[1] नन्वेवमपि जीवात्मन्यात्मशब्दप्रवृत्तेरत्रात्मस्वशब्दौ भगवत्पराविति कुतो निर्णय इत्यतो मुख्यामुख्ययोर्मुख्ये सम्प्रत्यय इति न्यायमनुसन्दधत् प्रमाणं पठति– **आत्मेति** ॥

## स एवेदं सर्वं इत्येतत् नाभेदपरम्

**इदं नामातिसामीप्यात् सर्वं[2] पूर्णगुणत्वतः ।**
**भूमाऽहमात्मेति हरिस्त्रिविधोऽपि हि सर्वदा ॥**

**इति विश्वनिर्णये ।**

**भाष्यविवृतिः**– स एवेदं सर्वमहमेवेदं सर्वमात्मैवेदं सर्वमिति भूमादीनां जगदात्मकत्वमुच्यते इत्यन्यथाप्रतीतिं निवारयन्नुपपन्नार्थमाह– **इदमिति** ॥ भूमाहमात्मनामा त्रिविधोऽपि हरिरिदंनामेत्यादि योजना ।

## लिङ्गत्रयमपि भगवति युक्तम्

**स्त्रीगुणाः पुंगुणाश्चैव नपुंसकगुणा अपि ।**
**यदधीना व्यत्ययः स्याद् लिङ्गानां तत्र सर्वशः ॥**
**कः किं कं तत्सर्वमात्माऽदितिर्देवादयस्ततः ॥**

**इति लिङ्गनिर्णये ।**

---

१. आत्मत एव प्राणो जायते इति षट्प्रश्नोपनिषदि आत्मत एवेत्यवधारणाद्भगवत एव प्राणो जायते न ततोऽन्यस्मात् । ततश्च आत्मतः प्राण इत्यत्र न मुक्तजन्यत्वं प्राणस्येत्यर्थः ।

२. 'सर्वः' हृपाठः ।

**भाष्यविवृतिः**– सामीप्याद्यर्थत्वे स एवायं सर्व इत्यादिप्रयोगः स्यादित्यतो "यन्निमित्तमुपादाय पुल्लिङ्गमनुवर्तते । तदेव चेत्क्लीबवृत्तावुक्तलिङ्गं तदुच्यते" इति न्यायमनुसन्दधत् प्रमाणमुत्तरमाह– **स्त्रीगुणा इति** ॥ **सर्वशः** सर्वेषाम् । लिङ्गव्यत्ययमेव विशदमाह– **क इति** ॥ कः किमित्यादिसर्वनामशब्दाः देवादयः देवशब्दादयः पुल्लिङ्गशब्दाः ॥ किं तत्सर्वमित्यादिनपुंसकलिङ्गशब्दाश्च ततः तत्र भगवति वर्तन्त इति योजना ।

उप.– तदेष श्लोकः ॥

**न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् ।**
**सर्वꣳ ह पश्यः पश्यति सर्वमाप्नोति सर्वश इति ॥**

**स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादशः स्मृतः ।**

**शतं च दश चैकं च सहस्राणि च विꣳशतिः ॥**

**आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः ॥**

**स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदितकषायाय तमसः पारं दर्शयति देवर्षये नारदाय भगवान् सनत्कुमारस्तꣳ स्कन्द इत्याचक्षते तꣳ स्कन्द इत्याचक्षते ॥ २ ॥ २६ ॥**

॥ इति श्रीमच्छान्दोग्योपनिषदि सप्तमोऽध्यायः ॥

## शास्त्रश्रवणशुद्धिरेवाहारशुद्धिः

भा.– गुरोर्विद्याहृतिर्या तु स आहार इति स्मृतः ।
तच्छुद्धौ ज्ञानशुद्धिः स्याज्ज्ञानशुद्धौ स्थिरा स्मृतिः ॥

**स्मृतिस्थैर्ये त्वापरोक्ष्यं हरेर्मोक्षस्ततो भवेत् ॥**
**इति साधननिर्णये ॥ २६ ॥**

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमच्छन्दोग्योपनिषद्भाष्ये सप्तमोऽध्यायः ॥

**भाष्यविवृतिः**– आत्मज्ञानिनः सर्वलोकेषु कामचारत्वसिध्यर्थं मृत्युदर्शनाद्यभावं प्रस्ताव्य श्लोकेनाह– **तदेष इति** ॥ सर्वं भगवन्तं आत्मत एव प्राण इत्याद्युक्तं वा सर्वं भगवन्तमाप्नोति । अभीष्टं सर्वमिति वा । अपेक्षितावाप्तिभावेन सर्वशः सर्वान् । आत्मज्ञान्यवस्थानप्रकारं निरूपयति– **स एकधेति** ॥ अविद्याविषयकषाय निरसन[१]हेतुभूतभगवदापरोक्ष्यस्य स्थैर्येणावस्थितिकारणमाह– **आहारेति** ॥ मृदितो अविद्यालक्षणः कषायो यस्यासौ मृदितकषायः तस्मै मृदितकषायाय । **तमसः पारं** **अविद्यान्तम्** । परमात्मस्वरूपं दर्शयति अदर्शयत् । तस्मै इत्यादि वेदपुरुषवाक्यम् । सनत्कुमारनामा भगवांश्चास्ति तत्प्रतीतिनिवारणाय– **स्कन्द इति** ॥ नारदो महाप्रज्ञस्तदुपदेष्टृत्वं कथं सनत्कुमारस्येत्यतस्तद्घटनाय चोक्तं– **स्कन्द इति** ॥ पुनः स्कन्द इति प्रपाठकसमाप्तिज्ञापनाय ।

यद्यपि रस्याः स्निग्धा इत्यादिना निरूपितोऽप्याहारो भवति तथाऽपि तत्राभ्यर्हितमपूर्वमप्याहारशब्दस्यार्थं वदंस्तद्वाक्यं व्याचष्टे– **गुरोरिति** ॥ **विद्याहृतिः** शास्त्रश्रवणम् ॥ इति षड्विंशः खण्डः ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितछन्दोगोपनिषद्भाष्यस्य
टीकायां व्यासतीर्थकृतायां सप्तमोऽध्यायः ॥

---

१. निरसने इति खपाठः ।

# अथ अष्टमाऽध्यायः

## प्रथमः खण्डः

## हृदयकमले भगवदुपासना

उप.– ॐ अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति ॥ १ ॥

भा.– यदिदमस्मिन् ब्रह्मपुर इति ब्रह्मपुरशब्देन ब्रह्माख्यं पुरं पूर्णत्वात् पुरमिति परं ब्रह्म ब्रह्मणः पुरमिति शरीरं चोभयं विवक्षितम् ।

प्राप्तोऽवध्यं ब्रह्मपुरं राजेव निवसाम्यहम् ।
अस्मिंश्चेद्यदिदं ब्रह्मपुरे सर्वं समाहितम् ॥

[१]'यदैतज्जराऽवाप्नोति प्रध्वंसते वा किं ततोऽतिशिष्यत इति स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिता एष आत्माऽपहतपाप्मा विजरो विमृत्युः' इत्यादि वाक्यशेषाद्भगवद्वचनाच्च ब्रह्मपुरशब्देन पुरं ब्रह्मोच्यत इत्यवसीयते । 'यत्पुण्डरीकं पुरमध्यसंस्थं यदिदं शरीरं तदेतदाद्यं देवसदनम्' इत्यादेः शरीरं च ।

### हृत्कमलस्थभगवानेव हृत्कमलस्याप्याधार इति निरूपणम्

'यद्वैतद्ब्रह्मेतीदं वाव तद्योऽयं वहिर्धा पुरुषादाकाशः । यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति' इत्यादिना परब्रह्मण्येव हृदयं स्थितम् ।

भाष्यविवृतिः– सप्तमप्रपाठके सर्वगतत्वादिसर्वगुणैः भूमादिरूपी भगवान्निरूपितः । स तथा सर्वमुमुक्षुभिरुपासितुमशक्योऽतस्तदर्थं

१. "यदेनं जरा" हृपाठः । "यदैनज्जरा" प्रपाठः ।

सर्वमुमुक्षुसाधारणोऽप्युपास्यं ब्रह्मपुरं निरूपयत्यष्टमप्रपाठेन । अर्थाप्रतीतेर्ब्रह्मणः पुरमिति समासप्रतीतेश्चानूद्यार्थमाह– **यदिदमिति** ।। भवतां ब्रह्मपुरशब्दस्य ब्रह्म शरीरंचार्थः । अत्रोभयोः को विवक्षित इत्यपेक्षायामाह– **उभयमिति** ।। ननु ब्रह्म शरीरं च ब्रह्मपुरशब्दार्थश्चेत् प्रयोगप्रसिद्धिर्दर्शनीयेत्यतस्तत्र शरीरे प्रयोगं दर्शयति– **प्राप्त इति** ।। **निवसाम्यहमिति** ।। भगवद्वचनादिति योज्यम् । ब्रह्मणि ब्रह्मपुरशब्दप्रयोगं ब्रह्मपुरशब्देनात्र विवक्षितमित्येतद्वाक्यशेषमुदाहृत्य समर्थयते– **अस्मिंश्चेदित्यादिना** ।। सर्वाश्रयत्वाहृन्यत्वसर्वकामभोक्तृत्त्वापहतपाप्मत्वादेरन्यत्रासम्भवादस्मिंश्चेदित्यादि वाक्यशेषात् अत्र ब्रह्मपुरशब्देन ब्रह्मोच्यत इत्यवसीयत इत्यर्थः । अत्र ब्रह्मपुरशब्देन शरीरं च विवक्षितमित्येतत्समर्थयते– **यत्पुण्डरीकमिति** ।। यदिदमिति तत्रैव श्रुत्यन्तरम् । ननु ब्रह्मपुरशब्दार्थो भगवानपि चेत् न तर्ह्यस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्मेत्युक्तहृत्पुण्डरीकस्य कथं भगवति स्थितत्वं युक्तम् । शरीरस्थं हि तदित्यतो भगवदर्थत्वेऽपि तद्धटयते– **यद्वै तदिति** ।। पुरुषाज्जीवाद्बहिर्धा देहे व्यापी योऽयमात्माकाश इत्युक्त्याऽर्थाद्यस्त्विवति सर्वाश्रयत्वोक्त्याच परब्रह्मण्येव च हृदयं स्थितं सिद्धमित्यर्थः ।

**उप.– तं चेद्ब्रूयुर्यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति स ब्रूयात् ।। २ ।।**

**यावान् वा अयमाकाशस्तावनेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितमिति ।। ३ ।।**

## हृदयस्थदहराकाशस्य परब्रह्मत्वाभावनिरूपणम्

भा.– 'दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम् । दहरोस्मिन्नन्तर आकाशः किं तदत्र विद्यते' इत्यत्राकाशशब्देन भूताकाशो विवक्षितः । किं तदत्र विद्यत इत्यस्यायं परिहारः– अस्मिन् भूताकाशे परब्रह्माख्य आकाशो विद्यते । आसमन्तात् काशनादाकाशः । आसमन्तात् कमश्नातीति वा । 'अस्मिन् कामाः समाहिताः' इति वाक्यशेषात् । आसमन्तात् कामानश्नातीति वा । स च यावान् बहिः परमात्मा व्याप्तोऽस्ति तावानेव विद्यते गुणतः । पूर्णगुणत्वात् । अल्पपरिमाणस्यापि महत्परिमाणत्वं च युज्यते । अचिन्त्यशक्तित्वात् ।

'यस्मिन् विरुद्धगतयोऽप्यनिशं[१] पतन्ति विद्यादयो विविधशक्तय आनूपूर्व्या' इति वचनात् ।

आनुपूर्व्येति श्रुतिप्रमाणादित्यर्थः ।

'आनुपूर्वी श्रुतिर्वेद आम्नायश्चेति कथ्यते' इत्यभिधानात् ।

अन्यथाऽनिशमित्युक्तिविरोधात् । 'एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्याः' इति हृदयस्थस्यैवाणुत्वमहत्वोक्तेश्च ।

गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्रशङ्का ।
चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाङ्गैर्हि तथा प्रतीताः ॥
इति च श्रुतिः ।

---

१. 'ह्यनिशं' इ्पाठः ।

**सुविरुद्धा अश्रुताश्च गुणाः सन्त्येव सर्वशः ।**
**दोषाः केऽपि[1] न सन्त्येव श्रुता अपि तु सर्वशः ॥ इति गारुडे ॥**

**भाष्यविवृतिः**– दहरोऽस्मिन्नन्तराकाश इति प्रस्तावितस्य दहरोस्मिन्नन्तराकाश इत्यत्रानुदितस्य यावान्वा अयमाकाशस्तावानेषोंतर्हृदय इत्यनेनैकत्वप्रतीतिं निवारयन्नाह– **दहर इत्यादिना** ॥ किं तदत्र विद्यत ? इति प्रश्नस्य परिहारानुक्तेरभिप्रेतमुत्तरमाचार्यः स्वयमाह– **किं तदत्रेति** ॥ ब्रह्माख्ये आकाशे आकाशब्दं त्रेधा निर्वक्ति– **आ समंतादित्यादिना** ॥ अभिप्रेताध्याहारसङ्गतत्वेन यावान्वा अयमाकाशस्तावानेषोन्तर्हृदय आकाश इति वाक्यमर्थाप्रतीतेर्व्याचष्टे– **सचेति** ॥ अन्तर्हृदये य एष आकाशः स च यावान्वा अयं बहिः परमात्मा व्याप्त आकाशोऽस्ति तावानेव गुणतो महत्त्वादिभिर्विद्यते पूर्णत्वात् । ननु हृदयाकाशगतोणुस्तस्य कथं महत्वं युज्यते इत्यतस्तद्घटकोत्त्या सम्भावयति– **अल्पेति** ॥ ननु घटकमस्तीत्येतावता प्रमेयमङ्गीकर्तुमशक्यं किं तु प्रमाणेन । प्रमाणाधीनत्वात् प्रमेयस्येत्यतः प्रमाणमप्याह– **यस्मिन्निति** ॥ विरुद्धगतयोन्यत्र भिन्नाश्रया अपि पतन्ति वर्तन्ते । न च कालभेदेन भगवत्यणुत्वमहत्वे वर्तेते इति शङ्क्यमित्याह– **अनिशमिति** ॥ अणुत्वमहत्वाश्रयत्वं कथमीश्वरस्यैव महिमा मुक्तानामपि तद्भावादित्यतो विद्या आदिः कारणं एषां ते विद्यादयः । तेषां युगपदणुत्वमहत्वादेर्विद्यासाध्यत्वात् । ईश्वरस्याजानसिद्धत्वादुक्तं युक्तमिति भावः ।

भगवति विरुद्धाणुत्वमहत्त्वभावे श्रुतिं च प्रमाणमाह– **आनुपूर्व्येति** ॥ सिद्धा इति योज्यम् । नन्वानुपूर्व्येत्युत्त्या कालभेदतोणुत्वमहत्वे भगवति वर्तेत इति लभ्यत इत्यतस्तदनूद्य व्याचष्टे– **आनुपूर्व्येति** ॥ नन्वानुपूर्वी

---

१. 'दोषा अपि' हृपाठः ।

श्रुतिरिति कुत इत्यतस्तत्राभिधानं पठति– **आनुपूर्वीति** ॥ ननु भवत्वानुपूर्वी श्रुतिः अत्र सेति कुतः नत्वनुक्रम इत्यत आह– **अन्यथेति** ॥ अन्यथानुक्रमार्थत्वे । भगवति युगपदणुत्वमहत्वप्रतिपादिकानुपूर्व्येत्युक्ता श्रुतिः केति जिज्ञासायां तां पठति– **एष इति** ॥ विप्रतिपत्तेस्तत्रैवार्थे श्रुत्यन्तरं पठति– **गुणा इति** ॥ लोकप्रतीत्या सुविरुद्धाः । लोकप्रतीत्या विरुद्धधर्मसद्भावे स्मृतिंचाह– **सुविरुद्धा इति** ॥

## दहराकाशस्थमहाकाशस्य परब्रह्मत्वकथनम्

**भा.– किं तदत्र विद्यत इति पृष्टत्वात् हृद्गत आकाशो हृदयशब्देनोच्यते । हृद्ययनात् । तस्मिन् हृदयाख्य आकाशे बहिराकाशो विद्यत इत्यर्थः । अन्यथा कथं भूताकाशस्य दहरस्य ब्रह्माख्य आकाशो विद्यत इत्यर्थः । अन्यथा कथं भूताकाशस्य दहरस्य बहिराकाशसमत्वम् ? दहरोऽस्मिन् अन्तराकाश इति पूर्वोक्ताकाशस्य दहरत्वमुक्तम् । उत्तरस्य तु यावान् वा अयमाकाश इत्यनन्तरपरिमाणत्वम् । अतो ब्रह्माकाश एवोत्तरः । पूर्वोक्तस्याभूताकाशत्वे 'तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यं तत्रापि दहरं[१] गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यं, सहस्रशीर्षं देवम्' इत्यादि कथं युज्यते? न हि भगवदन्तःस्थितमेवान्यत् किञ्चिद्विजिज्ञास्यम् । तद्वावेत्यवधारणाय । उत्तरस्यापरब्रह्मत्वे च सर्वाधारत्वं 'नास्य जरयैतज्जीर्यते न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिता एष आत्माऽपहतपाप्मा' इत्यादि न युज्यते ।**

**भाष्यविवृतिः–** अन्तर्हृदय इत्यत्र हृदयशब्दोऽस्मिन् भूताकाश इति भूताकाशार्थो व्याख्यातस्तत्तथैवेत्यत्रोपपत्तिमाह– **किं तदत्रेति** ॥ हृद्गत

१. 'दहं हृपाठः ।

आकाशो भूताकाशः परमात्माकाशार्थत्वे किं तत्र विद्यत इति प्रश्नायोगादित्यर्थः । किं हृदयशब्दस्याकाशो रूढत्वादन्त हृदये भूताकाशे इति व्याख्यानमित्यतो योगेनाह– **हृद्ययनादिति** ॥ अनेन हृदोन्तरं तर्हृतस्मिन्वर्तत इत्यन्तर्हृदयं भूताकाशमित्युक्तं भवति । प्रागध्याहृतमुत्तरमुत्तरवाक्यबलादिति सूचयन् व्यक्तमाह– **तस्मिन्निति** ॥ हृदयाकाशे ब्रह्माख्य आकाशो विद्यत इति कस्मादङ्गीकार्यम् । यावान्वा अयमाकाशस्तावानेषोन्तर्हृदय आकाशो हृद्गत आकाश इति प्रश्नस्य उभे अस्मिन्नित्यादिना तदन्तर्गतं द्व्यादिकमुत्तरत्वेनोपास्यमुच्यत इत्यर्थः कस्मान्न[१]स्यादित्यतस्तत्र भूताकाशेन हृदयाकाशस्य तावानेषान्तर्हृदय आकाश इत्युक्तं समत्वायोगं बाधकमाह– **अन्यथेति** ॥

नन्वेकस्मिन् प्रकरणे श्रुतस्याकाशशब्दस्यार्थद्वयाङ्गीकारोन्याय्यः प्रसक्तबुद्धिबाधनरूपत्वादित्यतो बाधकाभावे सत्येवं सति बाधके नैवमित्याह– **दहर इति** ॥ पूर्वस्तु भूताकाश इति योज्यम् । ननु पूर्वोक्ताकाशोपि भगवानेव तस्यापि दहरत्वभावादित्यतो बाधकान्याह– **पूर्वोक्तस्येत्यादिना** ॥ इत्याद्युक्तमुपास्यत्वं भगवतोन्यस्य कथं युज्यत इत्यर्थः । ननु भगवदन्तस्थितमप्यप्रधानतयान्यदस्तूपास्यम् । तथा च तस्मिन् यदन्तरित्याद्युक्तं युज्येतैवेत्यतो नैवमत्रोक्तिरित्याह– **नहीति** ॥ भगवदन्तस्थितमेवान्यत् किञ्चित् प्रधानतया विजिज्ञास्यं नहीत्यर्थः । नन्वत्र विजिज्ञास्यमुक्तम् । प्रधानतया विजिज्ञास्यं कुत्रोक्तं यद्बाधकमित्यतस्तद्दर्शयति– **तद्वावेति** ॥ एवं पूर्वाकाशस्य भूताकाशत्वे ज्ञापकान्युक्त्वोत्तराकाशस्य परब्रह्मत्त्वज्ञापकान्याह– **उत्तरस्येत्यादिना** ॥

## परब्रह्मस्थप्रपञ्चो न जिज्ञासार्हः

**भा.–** 'किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यम्'

१. किं न स्यात् इति खपाठः ।

**इत्यस्य य एषोऽन्तर्हृदय आकाश इत्येव परिहारः । न तु 'उभे अस्मिन् द्यावापृथिवी' इत्यादि । तत्तु विजिज्ञासितव्यत्वे हेतुत्वेन सामर्थ्यकथनमेव । न हि द्यावापृथिव्यादेरेव विजिज्ञास्यत्वम् । 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ' इति हि श्रुतिः ।**

## मुक्तामुक्तसकलदेवानां भगवानेवाश्रयः

**उभे अस्मिन् द्यावापृथिवीत्याद्युभयशब्दो मुक्तामुक्तराशिव्यपेक्षया । 'यच्चास्येहास्ति यच्च नास्ति' इति वाक्यशेषात् । अस्येति संसारिणः । न हि संसारिणो मुक्ता उपकारकाः । यद्यस्य नोपकारकं तत्तस्य नास्तीत्युच्यतेऽन्यस्य सत्वेऽपि । यथा वित्तादि ।**

**भाष्यविवृतिः–** अध्याहारस्य युक्तत्वं प्रसाध्योपसंहारति **किं तदत्रेति** ।। तस्मादित्यादौ योज्यम् । **इत्यस्य** प्रश्नस्य । ननु यावान्वेत्यादि प्रश्नस्य उभे अस्मिन्द्यावापृथिवीत्युक्तं परिहार इत्यर्थः । अन्तर्हृदय आकाश इत्यस्य परिहारत्वे यावान्वेत्यस्य उभे अस्मिन्नित्यादेश्च वैय्यर्थ्यमित्यतस्तस्य सार्थक्यमाह– **तत्त्विति** ।। ननूभे अस्मिन्नित्यादिनोक्तमेव जिज्ञास्यमिति किं न स्यात् ? न स्यात् । तद्भावेत्यवधारणेन भगवदन्यस्य जिज्ञास्यत्वा-योगस्योक्तत्वात् । भगवदन्यस्य प्राधान्येन जिज्ञास्यत्वमस्तु बाधका-भावादित्यतः प्रतिज्ञाय प्रमाणं बाधकमाह– **नहीति** ।। द्यावापृथिवी-त्युक्त्यैव द्वित्वसिद्धेः पुनरुभे इत्युक्तिर्व्यर्थेत्यतस्तद्विवक्षितार्थमाह– **उभे इति** ।। इत्यनेन मुक्ता अमुक्ताश्च गृह्यन्त इत्यत्र किं ज्ञापकमित्यत आह– **यच्चेति** ।। यच्चेत्यस्य स्फुठं मुक्तपरत्वाप्रतीतेरस्येत्यस्यार्थमाह– **अस्येति** ।। नन्वस्त्वस्येति संसारी अस्तुवा यच्च नास्तीति मुक्ता इति तथापि कथं ते तस्यासन्त इत्यतोऽनुपकारित्वादित्याह– **नहीति** ।। ननु सदप्यनपुकारित्वेन कथं नास्तीत्यतस्तन्निदर्शनेन घटयन्नाह– **यद्यस्येति** ।।

## अनित्यहृदयस्थोऽपि भगवान् नित्यः

उप.– तं चेद्ब्रूयुरस्मिꣳश्चेदिदं ब्रह्मपुरे सर्वꣳ समाहितं सर्वाणि च भूतानि सर्वे च कामा यदैतज्जरावाप्नोति प्रध्वꣳसते वा किं ततोऽतिशिष्यत इति ॥ ४ ॥

स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत् सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिता एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः यथा ह्येवेह प्रजा अन्वाविशन्ति यथानुशासनं यं यमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति ॥ ५ ॥

भा.– यथायोग्यमेवैनं भगवन्तं प्रजा मुक्ता अन्वाविशन्ति तच्छासनानुसारेण यं यं कामं कामयते[1] तं तस्मादेवोपजीवन्ति ।

भाष्यविवृतिः– यथाह्येवेत्यत्र यथाशब्दस्योपमार्थत्वप्रतीतिं निवारयंस्तद्वाक्यं व्याचष्टे– **यथायोग्यमिति** ॥ यं यमन्तमित्यस्य भगवन्महिमाप्रतिपादकत्वाप्रतीतिं अभिप्रेताध्याहारेण वारयति– **यं यं काममिति** ॥

उप.– तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते तद्य इहात्मानमननुविद्य व्रजन्त्येताꣳश्च सत्यान् कामाꣳस्तेषाꣳ सर्वेषु लोकेष्वकामचारो भवत्यथ य इहात्मानमनुविद्य व्रजन्त्येताꣳश्च सत्यान् कामाꣳ स्तेषाꣳ सर्वेषु लोकेषु कामचारो भवति ॥ ६ ॥ १ ॥

भा.–तदविदुषां पुण्यानि क्षयिष्णुफलान्येव भवन्ति । एतांश्च सत्यान् कामान् भगवदीयान् ।

---

१. 'यं यं कामयते' इ॒पाठः ।

वृहत्त्वात् पूर्णकामत्वाद् विष्णुर्ब्रह्मपुराभिधः ।
तस्मिंस्तस्य पुरं देहस्तस्मिन् हृदयमास्थितम् ॥

हृदयाकाशगो विष्णुस्तस्मिन् सर्वमिदं स्थितम् ।
स सत्यकामो भगवान् यदिष्टं तस्य तद्भवेत् ॥

**तस्मिन् समाहिताः कामाः सत्याः पुंसामपि ध्रुवम् ।**
**तस्यैव ह्यनुसारेण सत्यत्वं नान्यथा क्वचित् ॥**

**भाष्यविवृतिः–** एवमेवामुत्रेत्यादिवाक्यं भगवन्महिमापरत्वाप्रतीतेरपेक्षिताध्याहारपूर्वं व्याचष्टे– **तदविदुषामिति** ॥ यं यमन्तमभिकामा भवन्ति इत्याद्युक्ता मनुष्यकामा एतांश्चेति परामृश्यन्त इति प्रतीतिं निवारयन्नाह– **एतांश्चेति** ॥

सत्येवं पदयोजना । अथ यदिदमस्मिन् ब्रह्मपुर इत्यादेः अस्मिन् ब्रह्मपुरे शरीरे यदिदं बुद्धिसन्निहितमन्तःस्थितं वा दहरमल्पं पुण्डरीकं वेश्मास्मिन्नंतर्दहर आकाशोऽस्ति तस्मिन् दहराकाशान्तर्ब्रह्मपुराख्यं यदाकाशमस्ति तत्तत्प्राप्त्यर्थमन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम् ॥ नामानुक्तेरन्यतर[1] परिहारेण विजिज्ञास्यत्वे महिमानुक्तेश्च तं शिष्याः ब्रूयुश्चेत् प्रश्नप्रकारमेवोक्तानुवादेनाह– **यदिदमित्यादिना** ॥ अथ[2] दहराकाशे यत् विद्यते तत्किम् ? किंनामकम्? किंमहिमकमिति? किंशब्दार्थः । नामप्रश्नस्यान्तर्हृदय आकाश इत्याकाशनामक[3]मुत्तरमाह । दहरभूताकाशस्थिताकाशनामकस्य परममहत्वलक्षणं महिमानमाह– **यावान्वेत्यादिना** ॥ अन्यपरिहारेण जिज्ञास्यत्वसिध्यर्थमेवोभे अस्मिन्नित्यादिनापि सर्वाश्रयत्व-

१. अन्यपरिहारेणेति खपाठः । २. ''तस्मिन्'' खपाठः ।
३. मित्युत्तरमिति खपाठः ।

लक्षणं महिमानमेवाह । दहराकाशान्तःस्थिते अस्मिन् ब्रह्मपुराकाशे एव समाहिते । उभे इत्युक्तां द्वयीं[१] विधां विशदमाह– **यच्चास्येहेति** ॥ अस्य संसारिण उपकारित्वेनेह यच्चास्ति अमुक्तं द्यावापृथिव्यादि । यच्चानुपकारित्वेन नास्ति मुक्तं द्यावापृथिवीत्यादिकं जगत् तत्सर्वमस्मिन् समाहितम् ।

उक्तं सर्वाधारत्वमाक्षिप्य समादधति– **तमिति** ॥ उक्तं ब्रह्मपुरस्य सर्वाधारत्वमयुक्तमिति तं शिष्याः ब्रूयुश्चेत् । सर्वाधारत्वस्यायुक्तत्वप्रकारमेवानूद्याह– **अस्मिंश्चेदित्यादिना** ॥ ततः किमपि नातिशिष्यते यत्सर्वाधारं स्यादिति किंशब्दस्यार्थः । सर्वाधरत्वघटनायोक्तमुत्तरमाह– **स ब्रूयादित्यादिना** ॥ जरादिरहितं चेत् किं तर्हि सत्यं निर्विकारं अतः सर्वाधारत्वं युक्तमित्याह– **अस्मिन्कामा इति** ॥ कामाः कामादि । नास्य जरयैतदित्यादिनोक्तं प्रकटमाह– **एष आत्मेत्यादिना** ॥ यथा ह्येवेत्यपि महिमानमेवाह । यथाह्येवेत्युक्तमुक्तावस्थितिप्रकारमेवाह– **तं तमेवोपजीवन्ति** ॥ कामितस्थले वर्तन्त इत्यर्थः ।

पुनरपि भगवन्महिमानमेवाह– **यद्यथेहेति** ॥ कर्मजितो ग्रहादिः । एवमेव भगवन्तमजानतोऽमुत्र पुण्यजितो लोकः क्षीयत इति महिमैव । यं यमन्तमभिकामा भवन्तीति सत्यकामत्वमुक्तं तत्केन भवतीति जिज्ञासायामात्मज्ञानादित्याह– **तद्य इहात्मानमिति** ॥ सत्यान् कामान् सत्यकामत्वादिभगवद्धर्मान् । भगवद्ज्ञानस्य सत्यकामत्वसाधनमुक्त्वा तदभावे तद्व्यतिरेकमाह– **अथ य इहेति** ॥

एवं ब्रह्मपरतया शरीरपरतयाच ब्रह्मपुरशब्दं व्याख्यायोपपाद्यच सर्वं तद्दृढीकुर्वन्नादित एव प्रमाणेन व्याचष्टे– **बृहत्वादित्यादिना** ॥ तस्य विष्णोः पुरं देहः । ततो देहोऽपि ब्रह्मपुरम् । स तस्मिन् विष्णौ तिष्ठति ।

---

१. द्वितीयामिति खपाठः ।

तस्मिन् विष्णौ हृदयमास्थितमिति योजना । इदं सर्वं– द्यावापृथिव्यादिकं जगत् । सत्यकामत्वमेव विशदयतोक्तम्– **यदिष्टमिति** ॥ अनेनास्मिन् कामाः समाहिता इत्येतद्व्याख्यतं भवति य आत्मनमनुविद्येत्यादि व्याचष्टे– **तस्मिन्निति** ॥ तदेव विशदयति **तस्येति** ॥ १ ॥ इति **प्रथमः खण्डः** ॥

## अथ द्वितीयः खण्डः

## मुक्ताकाङ्क्षितं सकलं सुलभ्यमिति निरूपणम्

**उप.– स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन सम्पन्नो महीयते ॥ १ ॥**

**अथ यदि मातृलोककामो भवति सङ्कल्पादेवास्य मातरः समुत्तिष्ठन्ति तेन मातृलोकेन सम्पन्नो महीयते ॥ २ ॥**

**अथ यदि भ्रातृलोककामो भवति सङ्कल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति तेन भ्रातृलोकेन सम्पन्नो महीयते ॥ ३ ॥**

**अथ यदि स्वसृलोककामो भवति सङ्कल्पादेवास्य स्वसारः समुत्तिष्ठन्ति तेन स्वसृलोकेन सम्पन्नो महीयते ॥ ४ ॥**

**अथ यदि सखिलोककामो भवति सङ्कल्पादेवास्य सखायः समुत्तिष्ठन्ति तेन सखिलोकेन सम्पन्नो महीयते ॥ ५ ॥**

अथ यदि गन्धमाल्यलोककामो भवति सङ्कल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतः तेन गन्धमाल्यलोकेन सम्पन्नो महीयते ॥ ६ ॥

अथ यद्यन्नपालोककामो भवति सङ्कल्पादेवास्यान्नपाने समुत्तिष्ठतः तेनान्नपानलोकेन सम्पन्नो महीयते ॥ ७ ॥

**अथ यदि गीतवादित्रलोककामो भवति सङ्कल्पादेवास्य गीतवादित्रे समुत्तिष्ठतः तेन गीतवादित्रलोकेन सम्पन्नो महीयते ॥ ८ ॥**

**अथ यदि स्त्रीलोककामो भवति सङ्कल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति तेन स्त्रीलोकेन सम्पन्नो महीयते ॥ ९ ॥**

**यं यमन्तमभिकामो भवति यं कामं कामयते सोऽस्य सङ्कल्पादेवास्य समुत्तिष्ठति तेन सम्पन्नो महीयते ॥ १० ॥ २ ॥**

भा.– **यथा बिम्बानुसारेण प्रतिबिम्बप्रकाशनम् ।**

**भाष्यविवृतिः**– यं यमन्तमभिकामा भवन्तीत्युक्तसत्यकामत्वं विशदमाह– **स यदीत्यादिना** ॥ पितृलोकेन पितृदर्शनेन सम्पन्नो युक्तः । एवमुत्तरत्रापि द्रष्टव्यम् । माल्यं स्रक् । अन्तं देशम् ।

इतरकामानां भगवत्कामाधीनत्वं दृष्टान्तेनोपपादयति– **यथेति** ॥ २ ॥
इति द्वितीयः खण्डः ॥

## अथ तृतीयः खण्डः

## संसारे आकाङ्क्षितं सर्वं कुतो न लभ्यते इत्यत्र कारणवर्णनम्

उप.– त इमे सत्याः कामा अनृतापिधानास्तेषाꣳ सत्यानाꣳ सतामनृतमपिधानं यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते ॥१॥

भा.– तस्माद्ये मुक्तियोग्याः स्युस्तेषां कामाः पुराऽपि तु ॥

सत्याः सन्तस्तदज्ञानान्न दृश्यन्ते तथाऽखिलाः ।
अज्ञानमनृतं प्रोक्तमृगताविति धातुतः ॥

**तस्माद् द्रष्टुं यदिष्टं स्यात् तद्दृष्टिनियमो न तु ।[१]**
**अमुक्तस्य ........ ...... .............**

**भाष्यविवृतिः–** मुक्तस्य सत्यकामत्वमुक्तं किं तस्य कामाः पूर्वमसन्तो जायन्ते उताविर्भवन्ति । आविर्भावे तेषां किमावरणमित्यपेक्षायामाह– **त इम इति ॥** अनृतस्यापिधानाः अनृतापिधाना इति षष्ठी समासप्रतीतिं निवारयन्नाह– **तेषामिति ॥** अतः कामादेरनृतापिधानत्वाद्यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते ।

**तस्मात्** प्रतिबिम्बधर्मस्य बिम्बानुसारित्वात् । पुराऽपि यद्यपि सत्याः कामाः तथाऽपि तथा सत्यत्वेन तदज्ञानात् । तेषामज्ञानाधीतत्वात् । अनृतेन हि प्रत्यूढा इत्यत्रानृतमित्येतत् तदज्ञानादित्यज्ञानार्थत्वेन व्याख्यातम् । तत्कथमित्यपेक्षायां व्युत्पाद्य दर्शयति– **अज्ञानमिति ॥ ऋगताविति धातुतः** ऋगतौ इति धातुव्याख्यानादिति यावत् । ज्ञानं ऋतं, तद्विरुद्धं अनृतमज्ञानमिति यावत् । यो यो ह्यस्येतः प्रैतीत्यादि व्याचष्टे– **तस्मादिति ॥** अज्ञानावृतत्वादिति यावत् ।

## मुक्तिर्नैजसुखानुभूतिरेव

**उप.– अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते सर्वं तदत्र गत्वा विन्दतेऽत्र ह्यस्यैते सत्याः कामा अनृतापिधानास्तद्यथापि हिरण्यनिधिं निहतमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः ॥ २ ॥**

**स वा एष आत्मा हृदि तस्यैतदेव निरुक्तꣳ हृदयमिति तस्माद्धृदयमहरहर्वा एवंवित्स्वर्गं लोकमेति ॥ ३ ॥**

१. 'स्याददृष्टं नियमेनतु' हृपाठः ।

## परमात्मनः पूर्णानुग्रहादेव मुक्तिरिति कथनम्

अथ य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभि-निष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति ॥ ४ ॥

## सत्यशब्दवाच्यो मुक्तामुक्तनियामको भगवान्

तानि ह वा एतानि त्रीण्यक्षराणि सत् ति यमिति तद्यत् सत् तदमृत-मथ यत् ति तन्मर्त्यमथ यद्यं तेनोभे यच्छति यदनेनोभे यच्छति तस्माद्यमहरहर्वा एवंवित् स्वर्गं लोकमेति ॥ ५ ॥ ३ ॥

भा.– ........ हरेर्लोकं मुक्तो गत्वा हि पश्यति ॥

अज्ञत्वादेव सुप्तौ तु नित्यं यान्तोऽपि माधवम् ।
नैव पश्यन्त्यसौ विष्णुर्हृदयं नाम हृद्गतेः ॥

एवं हृदयनामानं विष्णुं जानन्ति नित्यशः ।
विष्णुलोकगतेः पुण्यमाप्त्वा विष्णुं व्रजेत् तथा ॥

यस्य सम्यक् प्रसादोऽस्ति विष्णोरेव स उच्यते ।
सम्प्रसादः स उत्थाय शरीरात् प्राप्य केशवम् ॥

यथास्वरूपस्तु भवेद्यं प्राप्यासौ स्वरूपताम् ।
आप्नोति स परो ह्यात्मा भगवानिन्दिरापतिः ॥

इत्याह सा रमादेवी पश्यन्ती परमं पदम् ।
सदित्यमृतधर्माणो मुक्ताः श्रीरपि चेरिताः ॥

**तीत्युक्ता मर्त्यधर्माणस्तेषां नियमानाद्धरिः ।**
**सत्यमित्युच्यते सद्भिः ........ .........**

**भाष्यविवृतिः**– अनृतनिवृत्तौ तु प्रकारमाह– **अथ ये चास्येहेति** ॥ अनृतनिवृत्तौ तु वैकुण्ठादिकं गत्वा अत्र सर्वमिष्टं विन्दते तद्विशदमाह– **अत्र हीति** ॥ हृत्पुण्डरीकाकाशे ब्रह्मपुराभिधो भगवांश्चेत्तिष्ठति प्रतिदिनं तत्र गच्छद्भिरस्माभिः कुतो नोपलभ्यते अतः स नास्तीत्याशङ्कां सदृष्टान्तं परिहरति– **तद्यथेति** ॥ अनुपलम्भे निमित्तमाह– **अनृतेनेति** ॥ अनृत-प्रत्यूढत्वादस्माभिर्हृदि विद्यमानोऽपि स एष आत्मा नोपलभ्यत इत्यर्थः । हृद्गताकाशगतस्यात्मेत्येकं नामोक्तम् । निरुक्तिपूर्वं नामान्तरमाह **तस्येति** ॥ **तस्य** ब्रह्मलोकस्य । **तस्य** हृदयमिति वक्ष्यमाणस्य नाम्नः । हृदि अयते वर्तत इति हृदयम् । हृदयनामनिरुक्तिपूर्वं भगवन्तं जानतः फलमाह– **अहरहर्वेति** ॥

न ज्ञानसामर्थ्यान्मुक्तो भवति । किं तर्हि तत्प्रसादादित्याह– **अथ य एष इति** ॥ नन्वात्मानमुपसंपद्येति वक्तव्ये कथं परंज्योतिरुपसंपद्येत्युक्ति-रित्यत आह– **एष परंज्योतिरात्मेति** ॥ परमात्मनो नामान्तरं तदक्षरार्थ-पूर्वं तद्वेत्तुः फलमाह– **तस्य हेत्यादिना** ॥ इति तृतीयः खण्डः ॥

सर्वं तदत्रेत्यादि व्याचष्टे– **हरेर्लोकमिति** ॥ तद्यथा हिरण्यनिधि-मित्यादि व्याचष्टे– **अज्ञत्वादित्यादिना** ॥ सम्यक् प्रसादः संप्रसादः प्रसन्नतेत्येव प्रतीतिं निवारयन् अथ य एष संप्रसाद इत्यादि व्याचष्टे– **यस्येत्यादिना** ॥ ज्योतिषो लिङ्गव्यत्ययेनात्मत्वाप्रतीतेरेष आत्मेति होवाचेत्येतद्व्याचष्टे– **यं प्राप्येति** ॥ तस्य हवा एतस्य ब्रह्मणो नाम सत्य-मित्याद्यप्रतीतेर्व्याचष्टे– **सदित्यादिना** ॥ **सद्भिः** विद्वद्भिः ॥ ३ ॥

## अथ चतुर्थः खण्डः

### निर्दुःखभगवत्प्राप्तितो दुःखनाश इति कथनम्

उप.– अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय नैतꣳ-सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतꣳ सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः ॥ १ ॥

तस्माद्वा एतꣳ सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवति विद्धः सन्नविद्धो भवत्युपतापी सन्ननुपतापी भवति तस्माद्वा एतं सेतुं तीर्त्वाऽपि नक्त-महरेवाभिनिष्पद्यतेऽसकृद्विभातो ह्येवैष ब्रह्मलोकः ॥ २ ॥

तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषाꣳ सर्वेषु लोकेषु कामचारो भवति ॥ ३ ॥ ४ ॥

भा.– ........ ......... सेतुश्चापि विधारणात् ॥

सितमस्मिन् जगत्सर्वमिति सेतुरितीरितः ।
एतं सेतुं प्रतिपुमानन्यत्तीर्त्वा ह्यदोषवान् ॥

स प्राप्यो ब्रह्मचर्येण मनोवाक्कर्मभिस्तु यत् ।
चरणं ब्रह्मणि परे ब्रह्मचर्यं हि तत्स्मृतम् ॥

तेनैव ब्रह्मचर्येण भवेयुर्ब्रह्मलोकगाः ।
एतेषां ब्रह्मलोकः स्यात् परं ब्रह्मैव लोकनात् ॥

ब्रह्मलोक इति प्रोक्तं तस्य लोकोऽपि कथ्यते ।

भाष्यविवृतिः– जिज्ञासितव्यत्वे परमात्मनोमहिमान्तरमाह– **अथ य आत्मेति** ॥ विधृतिः धारणक्षमः । महिमान्तरमेव विशदमाह– **नैतं**

**सेतुमिति** ॥ अहारोत्रानां तार्यत्वमेव तत्प्रयुक्तजराद्यभावेन विशदमाह– **न जरेत्यादिना** ॥ अपहतपाप्मत्वादिकमुपपादयति– **तस्मादिति** ॥ तस्मात् अपहतपाप्मना आत्मना । तत्प्रसादादिति यावत् । पूर्वमन्धः सन्नविद्या-वृतः सन् । अन्येप्येतं सेतुगन्तुं अन्यदविद्यादिकं तीर्त्वा अनन्धो भवति । तस्मात् अपहतपाप्मत्वादिसकलदोषरहितभगवत्प्रसादादेवैतं सेतुं गन्तुमन्यत् तीर्त्वा वर्तमानस्य नक्तमप्यहरेव निष्पद्यते । तत्रोक्तं कारणं विशदमाह– **असकृदिति** ॥ ज्ञानफलं ह्येतत् । तत्राभ्यर्हितसाधनज्ञानापेक्षायामाह– **तद्य इति** ॥

सेतुरिव सेतुर्धार्या बहिष्ठः सन् धारक इति प्रतीतिं निवारयंस्तद्व्याचष्टे– **सितमिति** ॥ एवं सेतुं प्रति गन्तुमिति योज्यम् । तद्य एवैतं ब्रह्मलोक-मित्यादि व्याचष्टे– **स प्राप्य इति** ॥ ननु ब्रह्मचर्यं नाम गुह्येन्द्रियनियमनम् । तेन कथं ब्रह्मलोकप्राप्तिरश्रवणादिरूपत्वात्तस्येत्यत-स्तद्व्याचष्टे– **मन इति** ॥ ब्रह्मविषयं चरणं ब्रह्मचर्यम् । तच्छ्रवणादिकं भवत्यतो नोक्तदोष इत्यर्थः । ब्रह्मचर्येण ब्रह्मलोकमनुविंदतीत्युक्तब्रह्मलोकज्ञानप्रकारमाह– **तेषामेवैष ब्रह्मलोक इति** ॥ तद्व्याचष्टे– **तेनैवेति** ॥ तस्य लोकोऽपि ब्रह्मलोकशब्देन कथ्यत इति योज्यम् । ब्रह्मचर्येणापरोक्षज्ञानिनः सन्तो ब्रह्मलोकं गत्वा ब्रह्मलोकं भगवन्तं पश्यतीर्थः ॥ ४ ॥ इति चतुर्थः खण्डः ॥

## अथ पञ्चमः खण्डः

## ब्रह्मचर्यस्वरूपकथनम्

**उप.– अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दतेऽथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येवेष्ट्वाऽऽत्मान-मनुविन्दते ॥ १ ॥**

अथ यत्सत्रायणमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव सत आत्मनस्त्राणं विन्दतेऽथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येवात्मानमनुविद्य मनुते ॥ २ ॥

अथ यदनाशकायनमित्यचक्षते ब्रह्मचर्यमेव तदेष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते ।

## अद्भुतं श्वेतद्वीपाख्यं विष्णुधाम

अऽथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेवतत् । अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरं मदीयꣳ सरस्तदश्वत्थः सोमसवनस्तदपराजिता पूर्ब्रह्मणः प्रभुविमितꣳ हिरण्मयम् ॥ ३ ॥

तद्य एवैतावरं च वै ण्यं चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषाꣳ सर्वेषु लोकेषु कामचारो भवति ॥ ४ ॥ ५ ॥

भा.– यज्ञ इष्टं च सत्रं च मौनं चानशनं तथा ॥
परस्य ब्रह्मणो ज्ञानं सर्वमेतदुदीरितम् ।
परस्य ब्रह्मणो लोके श्वेतद्वीपाभिधे परे ॥

अरण्यौ चार्णवौ दिव्यौ चिदानन्दरसात्मकौ ।
यावानुच्चः स्वर्गलोकस्तावानुच्चस्तथा स च ॥

श्वेतद्वीपो दिविष्टोऽतस्तत्र मद्यं सरोवरम् ।
सर्वभोज्यात्मकं दिव्यं तत्राश्वत्थाः सुधास्रवाः ॥

तत्र विष्णोः पुरं दिव्यमपराजितनामकम् ।
विमिताख्यं च पर्यङ्कं विष्णोर्मानेन सम्मितम् ॥

**चित्सुवर्णमयं दिव्यं लक्ष्मीस्तत्तत् स्वरूपिणी ।**
**स श्वेतद्वीपगो विष्णुः पर्यङ्कब्रह्मनामकः ॥**

**भाष्यविवृतिः–** ज्ञानस्य ब्रह्मचर्यं साधनं चेद्विविदिषन्तीत्योदिना यज्ञादिसाधनत्वोक्तिः कथमित्यतस्तत्सर्वं ब्रह्मचर्यमेवेत्याह– **अथ यद्यज्ञ इत्यादिना** ॥ तत्र व्युत्पत्तिः याति जानाति ज्ञमनेनेति यज्ञः । मनुते अवगच्छत्यनेनेति मौनम् । अनाशकमयते अनेनेत्यनाशकायनम् ।[१] एवमिच्छत्यनेनेतीष्टम् । आप्नोति पूर्तं पूर्णमनेनेत्यापूर्तम् । सतस्त्राणमनेनेति सतस्त्राणं[२] यत्सत्रायणमित्यादि द्रष्टव्यम् । अरण्यायनं ब्रह्मचर्यमित्युक्तं । अरण्याविति कौ कुत्रत्यौ च ? ऋते यत्साधनं ब्रह्मचर्यमित्यपेक्षायां तत्सर्वं विविच्याह– **अरश्चेत्यादिना** ॥ अर्णवे इवार्णवौ । चिदानन्दामृतसरसी । इतस्तृतीयस्यां दिवि ब्रह्मलोकः । **तत्तत्र** ब्रह्मलोके । स ऐरं सुरामयं मदीयं मदकारि सरश्च विद्यते । सोमस्राव्यश्वत्थवनं च विद्यते । प्रभुसमानं हिरण्यात्मकं पर्यङ्कं च विद्यते ।

अथ यद्यज्ञ इत्यादि व्याचष्टे– **यज्ञ इत्यादिना** ॥ **ज्ञानं** ज्ञानसाधनं श्रवणादि । ननु श्वेतद्वीपश्चेत् ब्रह्मलोकः कथं तस्य तृतीयस्यामितो दिवि इति दिविष्ठत्वं भूगतत्वादित्यतस्तद्घटयन्नाह– **यावानिति** ॥ **मद्यं** मदकारि । पर्यङ्कादेश्चिदानन्दाद्यात्मत्वं घटयन्नाह– **लक्ष्मीरिति** ॥ श्वेतद्वीपगतस्य नामाह– **स श्वेतेति** ॥ ५ ॥ **इति पञ्चमः खण्डः** ॥

## अथ षष्ठः खण्डः

## हृदयस्थनाडीषु भगवद्रूपोपासना

**उप.– अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति**

---

१. नाशशून्यं ब्रह्म ज्ञायते इत्यर्थः ।

२. यस्मात् तदिति खपाठः । खपाठेनास्त्ययं भागः ।

शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितः ॥ १ ॥

तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुष्मादादित्यात् प्रतायन्ते त आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्तेऽमुष्मिन्नादित्ये सृप्ताः ॥ २ ॥

तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति तं न कश्चन पाप्मा स्पृशति तेजसा हि तदा सम्पन्नो भवति ॥ ३ ॥

अथ यत्रैतदवलिमानं नीतो भवति तमभित आसीना आहुर्जानासि मां जानासि मामिति स यावदस्माच्छरीरादनुत्क्रान्तो भवति तावज्जानाति ॥ ४ ॥

## सुषुम्नानाडीत उत्क्रमणं मुक्तेर्द्वारम्

अथ यत्रैतस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वं आक्रमते स ओमिति वा होद्वा मीयते स यावत् क्षिप्येन्मानस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम् ॥ ५ ॥

## उक्तार्थे मन्त्रकथनम्

तदेष श्लोकः–

शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति उत्क्रमणे भवन्ति ॥ ६ ॥ ६ ॥

भा.– स एष हृदि नाडीषु पञ्चरूपः प्रतिष्ठितः ।
विष्णोरणिम्नो रूपाणि पञ्चनाडीस्थितानि तु ॥

नारायणाख्यं सौषुम्नं मध्यस्थं रक्तवर्णकम् ।
शुक्लं तु वासुदेवाख्यं नान्दिन्यामग्रतः स्थितम् ॥

पिङ्गलायां पिङ्गलं च रूपं सङ्कर्षणाभिधम् ।
पश्चिमे वज्रिकायां च पीतं प्रद्युम्ननामकम् ॥

इडायामनिरुद्धाख्यं नीलरूपं व्यवस्थितम् ।
सूर्येऽप्येवं पञ्चरूपो भगवान् संव्यवस्थितः ॥

आदित्यनामा चादित्वात् तद्व्याप्तं सूर्यमण्डलम् ।
तद्रश्मिभिस्तथा व्याप्ताः समस्ताः सूर्यरश्मयः ॥

तस्मिन्नाडीषु च प्रोक्तास्तथा नाडीस्थरश्मयः ।
तन्नीडीसंस्थितं विष्णुं मध्ये जीवः प्रपद्यते ॥

तत्तेजसा हि सम्पन्नः सुप्त इत्यभिधीयते ।
ओमित्येव वहन्नित्यं वायुरोंवाडितीरितः ॥

तेन वामत्वमायाति मुक्तिकाले ह्युपासकः ।
दिव्यचिद्रूपभावो हि वामभाव उदीरितः ॥

यदैनं नेतुमन्विच्छन्मनः क्षिपति मारुतः ।
आदित्याख्यं तदा विष्णुं याति जीवः स्वविद्यया ॥

इति पर्यङ्कोपासनायाम् ॥ १-६ ॥

**भाष्यविवृतिः**– हृदयोस्थोपास्तिप्रकारं विविच्याह– **अथ या इत्यादिना** ॥ नाडयः पिङ्गलादिरूपिणः अणिम्नोधिकरणभूतास्तिष्ठन्ति । प्रसङ्गप्राप्तत्वाद्भावनार्थमादित्ये पिङ्गलादिपञ्चरूपी तिष्ठतीत्याह– असाविति ॥

न केवलं हृदयस्थस्य सूर्यस्थेन रूपसादृश्यमपि तर्हि रश्मिसंसृप्तत्वं चेत्याह– **तद्यथेत्यादिना** ॥ उभौ लोकौ गच्छतीत्युक्तमेव गतिप्रकारं विशदमाह– **अमुष्मादित्यादिना** ॥ हृदयनाडीस्थितस्य तत्प्राप्त्या पाप्माप्यपाप्मा भवतीत्यपि महिमानमाह– **तद्यत्र तदा यत्रेति** ॥ एतत्सुप्तः एषप्तः सामसु उपसंहृतन्द्रियः अत एव संप्रसन्नः पापास्पर्शे कारणमाह– **तेजसा हरिणेति** । नाडीस्थोपासनस्य प्रयोजनमाह– **यत्रैतदित्यादिना** ॥ एतत् एषः ओमिति नामानं भगवन्तं वहतीत्येवादू-वायुः तेनोद्धामीयते भद्रीक्रियते मनः क्षिपति ॥ ज्ञानिनो ब्रह्मनेतिमिति शेषः । ब्रह्मोपासकस्य ब्रह्मलोको हि गन्तव्यः । किमादित्यगमनेनेत्यत-स्तत्तद्गमनद्वारमित्याह– **एतदिति** । प्रपदं प्राप्यम् । हृदयस्थोपासको नाडीस्थरश्मिभिः सूर्यद्वारा मुक्तो भवतीत्युक्तार्थे मन्त्रं प्रस्ताव्य तत्र मोक्षनाडीविशेषमाह– **तदेष इति** ॥

अथ या एता हृदयस्य नाड्य इत्यादि व्याचष्टे– **स एप इत्यादिना** ॥ **नाडीस्थरश्मयः** नाडीस्थितस्य रश्मयः । सूर्ये व्याप्तास्तथा समस्ताः सूर्यरश्मयश्च तस्मिन्नाडीस्थे तेषु[१] च प्रोता इति योजना । तत्र तत्सुप्त इत्यादि व्याचष्टे– **स एष इत्यादिना** ॥ वायुना तदुपदेशेनेति यावत् ।[२] वामत्वमेव विशदमाह– **दिव्येति** ॥ ६ ॥ **इति षष्ठः खण्डः** ॥

## अथ सप्तमः खण्डः

## इन्द्रविरोचनौ प्रति चतुर्मुखब्रह्मकृत उपदेशः

उप.– **य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स**

१. नाडीषु इति खपाठः ।

२. अत्र मातृकात्रयेष्वपि त्रुटितमस्ति इति भाति ।

सर्वा॑श्च लोकानाप्नोति स सर्वा॑श्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच ॥ १ ॥

तद्धोभये देवासुराः अनुबुबुधिरे ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वा॑श्च लोकानाप्नोति सर्वा॑श्च कामानितीन्द्रो ह वै देवानामभिप्रवव्राज विरोचनोऽसुराणां तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः ॥ २ ॥

तौ ह द्वात्रि॑शतं वर्षाणि प्रजापतौ ब्रह्मचर्यमूषतुस्तौ ह प्रजापतिरुवाच किमिच्छन्ताववास्तामिति तौ होचतुर्य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वा॑श्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह भगवतो वचो हरन्तो वेदयन्ते तमिच्छन्तावावास्तमिति ॥ ३ ॥

तौ ह प्रजापतिरुवाच य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेत्यथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इत्येष उ एवैषु सर्वेष्वन्तेषु परिख्यायत इति होवाच ॥ ४ ॥ ७ ॥

भा.– इन्द्रो विरोचनश्चैव श्रुत्वा तु[१] ब्रह्मणोऽक्षिगम् ।
विष्णुमानन्दरूपं तं सम्यग्ज्ञानविपर्ययौ ॥

आपतुस्तत्र देवेन्द्रो जानन्नपि विरोचनम् ।
मोहयन्ननुरूपाणि तस्य वाक्यान्युवाच ह ॥

१. 'श्रुत्वा तं' इ.पाठः ।

यथा विरोचनो नैव जानीयाद्विष्णुमञ्जसा ।
स्ववाक्यं चानृतं न स्यात् तथा ब्रह्माऽप्युवाच ह ॥

अयोग्या ह्यसुरा ज्ञाने वक्तव्यं नैव चानृतम्[१] ।
मच्छापादासुरो भावो प्रह्लादादेर्न तु स्वतः ॥

अयं त्वासुर एवातो वक्ष्याम्यस्योभयं यथा ।
इन्द्रस्तु शुद्धभावत्वात् पुनरायास्यति ध्रुवम् ॥

इत्यभिप्रायतः प्रोक्तो ब्रह्मणाऽक्षिगतो हरिः ।
अयोग्यत्वात्तु तच्छ्रुत्वा प्रतिरूपं विरोचनः ॥

मत्वाऽप्स्वादर्शके चैव पप्रच्छ कतमस्त्विति ।
तत्रापि तु हरेर्भावं हृदि कृत्वा चतुर्मुखः ॥
दृश्यते ह्येष एवेति तत्त्ववेदिविवक्षया ॥ ७ ॥

**भाष्यविवृतिः**– ब्रह्मचर्यं ब्रह्मज्ञानसाधनमित्युक्तम् । तत्किमनुष्ठितमनुतिष्ठतां सर्वेषामपि तदापादयति । किं वा[२] केषाञ्चिदेव केषाञ्चिच्छ्रूम इति जिज्ञासायां योग्यस्यैवेत्येतमर्थं प्रस्ताव्याख्यायिकामाह– **य आत्मेत्यादिना** ॥ अन्वेष्टव्य इत्युक्तमन्वेषणमेव विशदमाह– **विजिज्ञासितव्यो मीमांसितव्य इति** ॥ श्रवणादिनाऽनुविद्य विजानात्यपरोक्षतः । देवानामर्थे । **असंविदानौ** सम्प्रीतिरहितौ । ब्रह्मचर्यमात्मश्रवाणार्थं तमात्मानं ज्ञातुमिच्छन्तौ[३] **एपः** प्रतिबिम्बगतः । **अन्तेपु** स्थलेषु ॥ ७ ॥

य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच चेत्यादि

१. ''वक्तव्यं चैव नानृतम्'' ह्पाठः । २. उत इति खपाठः ।

३. तमात्मापरोक्षमिच्छन्तौ इति खपाठः ।

सर्वाꣳश्च लोकानाप्नोति स सर्वाꣳश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच ॥ १ ॥

तद्धोभये देवासुराः अनुबुबुधिरे ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामानितीन्द्रो ह वै देवानामभिप्रवव्राज विरोचनोऽसुराणां तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः ॥ २ ॥

तौ ह द्वात्रिꣳशतं वर्षाणि प्रजापतौ ब्रह्मचर्यमूषतुस्तौ ह प्रजापतिरुवाच किमिच्छन्ताववास्तामिति तौ होचतुर्य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वाꣳश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह भगवतो वचो हरन्तो वेदयन्ते तमिच्छन्तावावास्तमिति ॥ ३ ॥

तौ ह प्रजापतिरुवाच य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेत्यथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इत्येव उ एवैषु सर्वेष्वन्तेषु परिख्यायत इति होवाच ॥ ४ ॥ ७ ॥

भा.– इन्द्रो विरोचनश्चैव श्रुत्वा तु[1] ब्रह्मणोऽक्षिगम् ।
विष्णुमानन्दरूपं तं सम्यग्ज्ञानविपर्ययौ ॥

आपतुस्तत्र देवेन्द्रो जानन्नपि विरोचनम् ।
मोहयन्ननुरूपाणि तस्य वाक्यान्युवाच ह ॥

---

१. 'श्रुत्वा तं' इ.पाठः ।

**यथा विरोचनो नैव जानीयाद्विष्णुमञ्जसा ।**
**स्ववाक्यं चानृतं न स्यात् तथा ब्रह्माऽप्युवाच ह ॥**

**अयोग्या ह्यसुरा ज्ञाने वक्तव्यं नैव चानृतम्[१] ।**
**मच्छापादासुरो भावो प्रह्लादादेर्न तु स्वतः ॥**

**अयं त्वासुर एवातो वक्ष्याम्यस्योभयं यथा ।**
**इन्द्रस्तु शुद्धभावत्वात् पुनरायास्यति ध्रुवम् ॥**

**इत्यभिप्रायतः प्रोक्तो ब्रह्मणाऽक्षिगतो हरिः ।**
**अयोग्यत्वात्तु तच्छुत्वा प्रतिरूपं विरोचनः ॥**

**मत्वाऽप्स्वादर्शके चैव पप्रच्छ कतमस्त्विति ।**
**तत्रापि तु हरेर्भावं हृदि कृत्वा चतुर्मुखः ॥**
**दृश्यते ह्येष एवेति तत्त्ववेदिविवक्षया ॥ ७ ॥**

**भाष्यविवृतिः**– ब्रह्मचर्यं ब्रह्मज्ञानसाधनमित्युक्तम् । तत्किमनुष्ठितमनुतिष्ठतां सर्वेषामपि तदापादयति । किं वा[१] केषाञ्चिदेव केषाञ्चिच्छ्रूम इति जिज्ञासायां योग्यस्यैवेत्येतमर्थं प्रस्ताव्याख्यायिकामाह– **य आत्मेत्यादिना** ॥ अन्वेष्टव्य इत्युक्तमन्वेषणमेव विशदमाह– **विजिज्ञासितव्यो मीमांसितव्य इति** ॥ श्रवणादिनाऽनुविद्य विजानात्यपरोक्षतः । देवानामर्थे । **असंविदानौ** सम्प्रीतिरहितौ । ब्रह्मचर्यमात्मश्रवाणार्थं तमात्मानं ज्ञातुमिच्छन्तौ[३] **एषः** प्रतिबिम्बगतः । **अन्तेषु** स्थलेषु ॥ ७ ॥

य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच चेत्यादि

१. ''वक्तव्यं चैव नानृतम्'' हृपाठः । २. उत इति खपाठः ।

३. तमात्मापरोक्षमिच्छन्तौ इति खपाठः ।

संमुग्धोक्तित्वेनाभिप्रेतार्थाप्रतीतेर्विप्रतिपत्तिं निवारयन्निन्द्रो विरोचनश्चेत्यादि-प्रमाणेनाभिप्रेतार्थं व्यञ्जयन् व्याचष्टे । आदेयं मातीत्यात्मशब्दं व्याचष्टे– **आनन्दरूपमिति** ॥ नन्विन्द्रः सम्यक् ज्ञानमवाप चेत् योऽयमप्सु परिख्यायते कतम एष इति कथं पप्रच्छेत्यतस्तस्याभिप्रायमाह– **तत्रेति** ॥ तत्वं जानन् । तस्य मोहस्यानुरूपाणि वाक्यान्युवाच । एष एव सर्वेष्वन्तेषु इति सम्मुग्धोक्तेरभिप्रायमाह– **यथेति** ॥ विरोचनो विष्णुं जानातु स्ववाक्यं चानृतं भवतु किमनिश्चयेन संमुग्धोक्तिर्वक्तव्येत्यतोऽनिष्ट-माह– **अयोग्या इति** ॥ अतः सम्मुग्धमुवाचेति शेषः । ननु प्रल्हादादि-रसुरो ज्ञानी दृष्टस्तत्कथमयोग्या असुरा ज्ञान इत्युक्तिरित्यतो नायमसुरः स्वभावत इत्याह– **मदिति** ॥ अतः कारणादस्येन्द्रस्यास्य विरोचनस्य चोभयं ज्ञानमज्ञानं च यथा स्यात्तथा सम्मुग्धोक्तिं वक्ष्यामि । ननु सम्मुग्धोक्त्येन्द्रो विपर्यस्थो भविष्यतीत्यतो भावमाह– **इन्द्र इति** ॥ हरिः प्रोक्तः । समुग्धमिति शेषः । विरोचनस्तु स एषोऽन्तरक्षिणीत्युक्तं श्रुत्वा प्रतिरूपं ब्रह्मेति मत्वा अक्षिगतस्य प्रतिबिम्बत्वेनाब्रह्मत्वे कथं तर्हि य एषोऽन्तरक्षिणि पुरुषो दृश्यत एष आत्मेत्युक्तिरित्यतस्तस्याभिप्रायमाह– **तत्रापीति** ॥ ७ ॥ इति सप्तमः खण्डः ।

## अथ अष्टमः खण्डः

## विरोचनस्य अयथार्थज्ञानमुत्पन्नमिति निरूपणम्

**उप.– उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति तौ होदशरावेऽवेक्षाञ्चक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति तौ होचतुः सर्वमेवेदमावां भगव आत्मानं पश्याव आलोमभ्य आनखेभ्यः प्रतिरूपमिति ॥ १ ॥**

तौ ह प्रजापतिरुवाच साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति तौ ह साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षाञ्चक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति ॥ २ ॥

तौ होचतुर्यथैवेदमावां भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृतौ स्व एवमेवेमौ भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृताविति एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तौ ह शान्तहृदयौ प्रवव्रजतुः ॥ ३ ॥

तौ हान्वीक्ष्य प्रजापतिरुवाचानुपलभ्यात्मानमननुविद्य व्रजतो यतर एतदुपनिषदो भविष्यन्ति देवा वाऽसुरा वा ते पराभविष्यन्तीति स ह शान्तहृदय एव विरोचनोऽसुरान् जगाम तेभ्यो हैतामुपनिषदं प्रोवाचात्मैवेह महय्य आत्मा परिचर्य आत्मानमेवेह महय्यन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमं चामुं चेति ॥ ४ ॥

तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरासुरो बतेत्यसुराणाꣳ ह्येषोपनिषत् प्रेतस्य शरीर भिक्षया वसनेनालङ्कारेणेति सꣳस्कुर्वन्त्येतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते ॥ ५ ॥ ८ ॥

भा.– तथापि योग्यतैवात्र भूयसीति निवेदितुम् ॥

दर्शयन् प्रतिरूपस्य दोषानाह प्रजापतिः ।
अलङ्कारादिभिर्युक्तः पश्यस्वेति विवेचयन् ॥

यथा देहगुणे गौण्यं दोषे दोषास्तथैव[१] तु ।
तथाऽप्यशुद्धभावत्वात् प्रतिरूपस्य तद्गुणान् ॥

परस्य ब्रह्मणो जानन्ययौ तुष्टमनाः स्वयम् ।
असुराणामविश्वासनिवृत्त्यर्थं पितामहः ॥

---

१. 'तथेति तु' पाठान्तरम् ।

**माध्यस्थ्यं ज्ञापयानश्च जानन् वैरोचनं मनः ।**
**प्राहाज्ञानां पराभाव इत्युच्चैश्च पुनः पुनः ॥**

**तथाप्यशुद्धभावत्वादजानन्नेव निर्ययौ ।**
**गत्वा चैव परंब्रह्म प्रतिरूपात्मकं सदा ॥**

**दिदेश सर्वासुराणां शरीरालङ्कृतेरपि ।**
**अलङ्कृतिं ब्रह्मणश्च प्रत्यक्षेणोपलम्भिताम् ॥**

**अतोऽसुरा न दास्यन्ति न यजन्त्यात्मनः परम् ।**
**स्वभोगेनैव तृप्तिः स्यादिति सर्वेऽपि मेनिरे ॥**

**तत्संस्कारवशेनैव स्वयं ब्रह्मेति [१]वेदिनः ।**
**अभवन्नपतंश्चैव तमोऽन्धे नित्यदुःखिताः ॥**

**भाष्यविवृतिः**– इदमावां सर्वमेवेत्युक्तं सर्वत्वमेव विशदयति **आलोमभ्य इति ॥** सर्वं लोमनखादि सहितमिति यावत् । भवद्भ्यां दृष्टं तत्किं? प्रतिरूपमित्यूचुतुः । **परिष्कृतौ** अनुलेपनादिमन्तौ । इदमावां साध्वलङ्कृतावित्यादिवक्ष्यमाणप्रकारेण । एष किमात्माऽमृतमभयमित्यादि काका योजनीयम् । अनुपलभ्य श्रवणतः । तस्मात् आत्मैव देह एव महय्य इत्यस्यासुरपक्षत्वादेव । इहाद्यापि विरोचनेनोपदिष्टास्ते प्रेतस्य मृतस्य शरीरं भिक्षयाऽन्नपानेन वसनादिनेति भावेन संस्कुर्वन्ति । इतीत्युक्तं भावमेव विशदमाह– **एतेन ह्यमुमिति ॥ ८ ॥**

उदशराव आत्मानमित्याद्यभिप्रायं व्यञ्जयन् व्याचष्टे– **तथाऽपीति ॥** शरीरानलङ्कृतावनलङ्कृतस्य तदलङ्कृतावलङ्कृतस्य प्रतिबिम्बस्य यद्यप्यब्रह्मत्वं

१. 'वादिनः' इ.पाठः ।

स्फुटं ज्ञातुं शक्यं तथापीति योजना । विवेचयन् प्रजापतिः प्रतिरूपस्य दोषान् दर्शयन् अलङ्कारादिभिर्युक्तः पश्यस्व पश्येत्याह । विवेचयन्नित्युक्तं विशदमाह– **यथेति** ॥ कारणत्वादिदोषाः । तद्गुणान् तावद्गुणान् । य एषोऽन्तरक्षिणित्यादि सम्मुग्धोक्तेरभिप्रायं व्यञ्जयन्नात्मयोनिर्गमनावसरेऽनुपलभ्यात्मानमित्याद्युक्तेरभिप्रायमाह– **असुराणामिति** ॥ एवं मुक्तावपि वैरोचनं मनो न निवर्तत इति जानन् । यद्यप्येवमाह ब्रह्मा तथाऽपि दिदेश उपदिदेश । सदा शरीरालंकृतेः । सदा ब्रह्मणश्चालंकृतिमप्युपदिदेश । प्रेतस्य शरीरमित्यादि व्याचष्टे **अत इति** ॥ प्रतिबिम्बमेव परं ब्रह्मेत्युपदिष्टत्वादिति यावत् । यथा बिम्बशरीरस्यालङ्कृतौ प्रतिबिम्बशरीरस्यालङ्कृतिस्तयोरैक्यात् । एवं ब्रह्म जीवश्च बिम्बप्रतिबिम्बावतस्तावभिन्नौ । अतो जीवमहेन ब्रह्ममह इति । तत्संस्कारवशेन तमसाऽन्धयति । प्रविष्टं ब्रह्मविद्विषमिति । तमोंऽधे नित्यनरके ॥ ८ ॥ इति **अष्टमः खण्डः** ॥

## अथ नवमः खण्डः

## इन्द्रकृतनिरन्तराध्ययनम्

**उप.– अथ हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श यथैव खल्वयमस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति ॥ १ ॥**

**नाहमत्र भोज्यं पश्यामीति स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन् यच्छान्तहृदयः प्राव्राजीः सार्धं विरोचनेन किमिच्छन् पुनरागम इति स होवाच यथैव खल्वयमस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोज्यं पश्यमीति ॥ २ ॥**

**एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिꣳशतं वर्षाणीति स हापराणि द्वात्रिꣳशतं वर्षाण्युवास तस्मै स होवाच ॥ ३ ॥ ९ ॥**

**भा.– इन्द्रस्तु[1] जानन्नपि तु मोहयन्नसुरं तदा ।**
**गत्वा निववृते पश्चादिव पश्यन् सदोषताम् ॥**

**पुनः पुनश्च मोहाय गत्वा गत्वा निवर्तते ।**
**कथञ्चिदेव विज्ञातं मयेत्यज्ञान् विमोहितुम् ॥**

**भाष्यविवृतिः**– कुष्ठादिना स्रामे[2] । **परिवृक्णे** भग्नहस्तादिमति । **भोग्यं** उपादेयं । **एषः** प्रतिबिम्बः । **एवं** त्वदुक्तप्रकारवान् ॥ ९ ॥ **इति नवमः खण्डः ॥**

नन्विन्द्रोऽक्ष्याद्यन्तर्गतपुरुषान्तर्गतं परं ब्रह्मेति ब्रह्मोपदिष्टप्रकारेण जानात्येव । तत्किमर्थं देवानप्राप्यैव भयं पश्यन् पुनः पुनः प्रजापतिरकाशमाजगामेत्याशङ्कानिवारणायाथ देहेन्द्रिय इत्यादिशाक्रप्रवर्तिवाक्यजातमभिप्रायं व्यञ्जयन् व्याचष्टे– **इन्द्रस्त्वित्यादिना** ॥[3] पश्यश्चात्सदोषतां पश्यन्निव । मोहायेत्युक्तं विशदमाह– **कथञ्चिदिति** ॥ ९ ॥

## अथ दशमः खण्डः

## तत्वज्ञानप्राप्तौ योग्यताऽऽवश्यकीति कथनम्

**उप.– य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयमे-**

---

१. 'इन्द्रश्च' पाठान्तरम् ।

२. विवर्णे इति वा स्रावे सतीति वाऽर्थः ।

३. गत्वेत्यादिना इति खपाठः ।

तद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श तद्यद्यपीद९ँ शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥ १ ॥

न वधेनास्य हन्यते नास्य स्रामेण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीति ॥२॥

स समित्पाणिः पुनरेयाय त९ँ ह प्रजापतिरुवाच मघवन् यच्छान्तहृदयः प्राव्राजीः किमिच्छन् पुनरागम इति स होवाच तद्यद्यपीद९ँ शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥ ३ ॥

न वधेनास्य हन्यते नास्य स्रामेण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीत्येवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रि९ँशतं वर्षाणीति स हापराणि द्वात्रि९ँ-शतं वर्षाण्युवास तस्मै स होवाच ॥ ४ ॥ १० ॥

भा.– तद्योग्यान्येव वाक्यानि ब्रह्माप्याह पुनः पुनः ।
गरीयसी योग्यतेति ज्ञापयन्पूर्ववत् पुनः ॥

सन्दिग्धान्येव वाक्यानि प्रोवाचेन्द्राय चात्मभूः ।
स्वप्नं प्रदर्शयन्यस्तु पूज्यते सर्वदैवतैः ॥

स एव विष्णुरित्याह तत्राप्याह पुरन्दरः ।
दर्शयन्नासुरीं बुद्धिं स्वप्नदृश्यविवक्षया ॥

घ्नन्तीवैनमदन्तीव तथा च स्यात् परो हरिः ॥ १० ॥

**भाष्यविवृतिः**– यद्यपि शरीरमन्धं भवति स स्वप्ने महीयमानोऽनंधो भवति । तत् तर्हि ।। घ्नन्ति वैनमित्यादि योज्यम् ।। १० ।।

ननु ब्रह्मज्ञानायोग्यश्चेत् विरोचनोऽपगतः इन्द्रश्चेत्तद्योग्योऽतः किमर्थं तं प्रत्यपि य एष स्वप्ने महीयमानश्चरत्येष आत्मेत्यादि सम्मुग्धमवोचदित्यत-स्तदभिप्रायं व्यञ्जयन् व्याचष्टे– **गरीयसीति ।।१०।। इति दशमः खण्डः ।।**

## अथ एकादशः खण्डः

## एकशतवर्षावधिकः इन्द्रकृतगुरुकुलवासः

**उप.– तद्यत्रैतत्सुप्तः समस्तः सन् प्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श नाहं खल्वयमेवꣳ सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विना शमेवापीतो भवति नाहमत्र भोग्यं पश्यमीति ।। १ ।।**

**स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन् यच्छान्त-हृदयः प्राव्राजीः किमेवेच्छन् पुनरागम इति स होवाच नाहं खल्वयमेवꣳ सम्प्रत्यात्मानं जानात्ययमह-मस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यमीति ।।२।।**

**एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्माद् वसापराणि पञ्च वर्षाणीति स हापराणि पञ्च वर्षाण्युवास तान्येकशतं सम्पेदुरेतत् तद्यदाहुरेकशतꣳ ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास तस्मै स होवाच ।। ३ ।। ११ ।।**

भा.– इत्युक्त आह ब्रह्मैव सुप्तिस्थो भगवानिति ।।

**यत्र सुप्तो ह्ययं जीव इत्युक्तः[1] प्राह वासवः ।**
**नाहं जानामि मत्तोऽन्यं सुप्तौ[2] नान्योऽपि दर्शयेत् ॥**

**अहमस्मीति भूतानि न च पश्यन्ति कानिचित् ।**
**यदि जीवः परात्मा वाऽप्यन्योन्यस्मिन्नपीतताम् ॥**
**गतौ तदाऽप्यपीतस्तु शं विनैव भवेदिति ॥ ११ ॥**

**भाष्यविवृतिः**– **यत्र** यस्मिन्नात्मनि । अहं खलु सुप्तः सम्प्रति अयमहमस्मीति **न जानाति** न जानामि । **एवं** ब्रह्मणा निरूपित-प्रकारेणाधिकरणभूतमात्मानंच न जानामि । सुतरामिमानि भूतान्यात्मानं नो एव जानन्ति । अतोऽधिकरणभूतमात्मानुपलम्भान्नास्तीति योजना । सुप्तावेकीभूतत्वादधिकरणभूतौ नोपलभ्यत इत्यत एकीभावे बाधकमाह– **विनेति** ॥ यद्यपीत एकीभूतस्तर्हि शं विना भवति । एकीभूतश्चेत् सुखं विनैव भवेदेतावन्तं कालं सुखं सुप्तोऽस्मीत्युत्थितः सुखानुसन्धाता न भवेत् । ऐक्यवादे सुखानुपपत्तेरित्यर्थः । **एतस्मात्** वक्ष्यमाणादुपदेशा-दन्यत्र । तस्मादृत इति यावत् । नैवोपदिशामि । यदाहुस्तत् एतत् । यदाहुरित्युक्तमेव विशदमाह– **एकशतमिति** ॥

यत्रैतत्सुप्त इत्यादिसम्मुग्धोक्तिनार्थाप्रतीतेरेव व्याख्याति– **इत्युक्त इति** ॥ सुप्तिस्थ इत्युक्तमेव विशदमाह– **यत्रेति** ॥ असुबन्तत्वेन पुरुषव्यत्ययेन चार्थाप्रतीतेर्नाहं खल्वित्यादि व्याचष्टे– **नाहमिति** ॥ योजनातु सुप्तोऽह-मस्मीति नाहं जानामि । मत्तोऽन्यं च न पश्यामि । नकेवलमहमिमानि भूतानि कानिचिदन्यं न पश्यन्ति । सुप्तावन्योऽपि न दर्शयेत् । तस्यानुपलम्भादिति । विना शमेवापीतो भवतीत्येतदप्रतीतेर्विनाशार्थत्व-प्रतीतेश्च व्याचष्टे– **यदीति** ॥ तदाऽपीतो जीवस्तु ब्रह्मीभूतत्वाच्छं विनैव भवेत् । सुखी नैव भवेदित्यर्थः ॥ ११ ॥ इति **एकादशः खण्डः** ॥

१. 'इत्युक्तम्'' हृपाठः । २. 'सुप्तः'' हृपाठः ।

## अथ द्वादशः खण्डः

## सति शरीराभिमाने दुःखमवर्जनीयम्

उप.– मघवन् मर्त्यं वाव इदꣳ शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ॥ १ ॥

भा.– उक्तो ब्रह्माऽब्रवीच्छक्रं ज्ञापयंस्तत्त्वमञ्जसा ॥
योऽयं शरीरसम्बन्धी जीव इत्यवधार्यताम् ।
भूतैष्यद्वर्तमानेषु यस्य नो देहसङ्गतिः ॥

सोऽशरीरः परो विष्णुरमृतो नित्यपूर्तिमान्[१] ।
अधिष्ठाय तथाऽपीमं देहमास्ते स ईश्वरः ॥

जरामृत्युपरीतोऽयं जीवात्मा देहसङ्गतेः ।
परेणेयं सुखं प्रोक्तं प्रियमित्येव पण्डितैः ॥

परेणेयमभद्रं यदप्रियं तदुदीरितम् ।
न जीवस्य तयोर्हानिः कदाचिद्विद्यते क्वचित् ॥
अशरीरं परं ब्रह्म नैव ते स्पृशतः क्वचित् ।

भाष्यविवृतिः– जीवस्य जाग्रत्सुषुप्तिस्वप्नावस्थाप्रवर्तकः परमात्मेत्युपदिश्य प्रकारान्तरेण तस्य जीवाद्वैलक्षण्यमुपदिशति– मघवन्नित्यादिना ॥ तत्र तावज्जरामृत्युपरीतशरीरवत्वतद्राहित्यलक्षणं जीवब्रह्मणोर्वैलक्षण्य-

१. नित्यमूर्तिमान् पाठान्तरम् ।

मादावाह– **मघवन्निति** ॥ योजना तु मघवन्निदं शरीरं वाव मृत्यु-नाऽऽप्तमतो मर्त्यं विनाशि । अभिमानित्वेन जीवस्तद्वान् । परमात्मातु तद्रहितः । किं तु तच्छरीरममृतस्याशरीरस्यास्यात्मनोऽधिष्ठानम् । तद्वाक्यं केवलजीवात्मपरत्वप्रतीतिं निवारन् व्याचष्टे– **योऽयमिति** ॥

ननु कथमशरीरस्येत्युक्तमशरीरत्वं मुक्तसमं विष्णोरेव विशेषणमित्यत उक्तं– **भूतैष्यद्वर्तमानेष्विति** ॥ कालेष्विति शेषः । व्याप्तत्वाद्विष्णुः । आप्नोतीत्यात्मेत्युक्तः । जीवात्मपरमात्मनोः शरीरित्वाशरीरित्वाभ्यां प्राप्तं वैलक्षण्यमेव स्फोरयति– **जरेति** ॥ जरादिरहितः परमात्मेति वाक्यशेषः । जीवात्मपरमात्मनोः प्रियाप्रियात्तत्वानात्तत्वलक्षणं वैलक्षण्यान्तरमाह– **आत्त इति** ॥ जीवस्य प्रियाप्रियात्तत्वं न यदाकदाचिदित्याह– **न ह वा इति** ॥ अशरीरस्य परमात्मनस्तु तत्कदाऽपि नास्तीत्यत आह– **अशरीरं वावेति** ॥

प्रियाप्रियात्तत्वं कथं जीवस्य परमात्मनो वैलक्षण्यापादकमित्यतस्तं निरुच्य दर्शयति– **परेणेति** ॥ **ईयं** प्राप्यं । **पण्डितैः** शब्दनिर्वचनं जानद्भिर्विद्वद्भिः । अ इति प्रतिषेधार्थत्वादभद्रवाची । तथा च परेणेय-मित्यादि योज्यम् । केवलं जीवात्मपरमात्मप्रतीतिं निवारयन्नात्तो वै सशरीर इत्यादिवाक्यं व्याचष्टे– **न जीवस्येति** ॥

## प्राकृतशरीररहितभगवत्सकाशादेव मुक्तिः

**उप.– अशरीरो वायुरभ्रं विद्युत्स्तनयित्नुरशरीराण्येतानि तद्यथैतान्य-मुष्मादकाशात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते ॥ २ ॥**

**एवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन**

रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स यत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा नोपजनॅं स्मरन्निदॅं शरीरॅं स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्तः ॥ ३ ॥

भा.– अम्रामा भगवान् विष्णुर्व्याप्तत्वात् परमेश्वरः ॥

तेनैव भ्रियमाणत्वाद् ब्रह्माभ्रमिति कीर्तितः ।
वायोः पत्नी विद्युदुक्ता विशेषद्युतिहेतुतः ॥

ब्रह्माणी स्तनयित्नुः स्यात् सर्वशब्दात्मिका यतः ।
एतेषां ज्ञानवैशेष्यान्नातिदेहेन सङ्गतिः ॥

अतः प्रियाप्रिये तेषामपि न ब्रह्मणः किमु ।
विष्ण्वीयं हि सुखं तेषां स्वभर्त्रीयमथापि च ॥

न ह्यन्येयं सुखं तेषामतस्ते प्रियवर्जिताः ।
यथा ते परमाकाशाद्विष्णोरेव समुत्थिताः ॥

तमेव प्राप्य संयान्ति नैजमानन्दमूर्जितम् ।
एवं सम्यक्प्रसादेन विष्णोर्मुक्तोऽपि योऽपरः ॥

यं प्राप्य ते निजानन्दमाप्नुवन्ति स केशवः ।
तं प्राप्य रमते मुक्तः स्त्रीभिर्यानैश्च बन्धुभिः ॥

भाष्यविवृतिः– जीवन्मुक्तान् वाय्वादीनपि प्रियाप्रिये न स्पृशतः किमु विष्णुमशरीरमिति कैमुत्येनाह– वायुरित्यादिना ॥ तदनिलमेघादि-सम्प्रतीत्याऽसङ्गतत्वप्रतीतिं निवारयन् व्याचष्टे– अम्रामेति[1] ॥

**स्तनयित्नुः** शब्दजनकः । ननु वाय्वादीनां परेणेयसुखाभावात् कथं तेषां प्रियं नेत्युक्ति रित्यतस्तदभावादित्याह– **विष्ण्वीयमिति** ॥ मुक्तोऽपि तत्प्रसादादेव भोगान् भुङ्क्ते अतो जीवेशयोर्वैलक्षण्यमित्याह– **तद्यथैता-नीत्यादिना** ॥ तत्स्पष्टं व्याचष्टे– **यथेत्यादिना** ॥ **ते** वाय्वादयः । एवम-परोऽपि यः कोऽपि मुक्तः विष्णोः सम्यक् प्रसादेन निजमानन्दं संयाति । एतत् स्वेन रूपेण निष्पद्यत इत्यस्यार्थः । उक्तवैलक्षण्यसिद्धमर्थमाह– **स उत्तमपुरुष इति** ॥ तत्प्रकृतमुक्तपरमिति प्रतीतिं वारयन् व्याचष्टे– **यमिति** ॥ ते मुक्ताः । स केशव उत्तमपुरुष इति योज्यम् । मुक्तस्य[२] विषयैश्चरण[३] प्रकारमाह– **तत्रेति** ॥ **तत्र** अमुक्तस्थाने । **पर्येति** परितश्चरति । **जक्षन्** भक्षयन् । हंसश्च । **ज्ञातिभिः** सहमुक्तैः । **अज्ञातिभिः** पूर्वमुक्तैः । तद्व्याचष्टे **तमिति** ॥ रमणातिशयकारणमाह । **उपजनं** परिसरवर्तिजनम् । स्वस्येदं शरीरं च न स्मरन्निति । शरीरमशरीरस्यात्मनोऽधिष्ठानमित्यत्र शरीराधिष्ठाता हरिरित्युक्तम् । तत्र जीवश्चक्षुरादि वा भवतुशरीराधिष्ठात्रित्यतो जीवस्यासमर्थत्वाच्चक्षुरादेः करणत्वान्न शरीराधिष्टातृत्वमिति सदृष्टान्तमाह– **स यथेत्यादिना** ॥ तस्येयं योजना **आचरणे** रथस्य प्रवर्तने । **सः** बुद्धिस्थः । प्रायोग्यो यथा । नियुक्त एवमेवायं प्राणोऽस्मिञ्छरीरे तत्प्रवर्तक इति यावत् । युक्तः ।

---

१. यद्यपि -

श्रुतिभिः स्तनितत्वात्तु स्तनयित्नुर्हरिस्स्मृतः ।

अभ्रं भूताभिभरणाच्छ्रीर्वायुर्भरतः स्मृतः ।

विद्युत्तु भारती प्रोक्ता एत एवाशरीरिणः ॥ इत्यन्यत्रोक्तम् । तथाऽपि -

''व्यत्यासेनाऽपि नाम स्यादेतेषां महतां सदा '' इति तत्रैवोक्तत्वान्न विरोधः ।

२. मुक्तैश्च इति खपाठः ।

३. विपयैश्च रमणेति खपाठः ।

## इन्द्रियेषु भगवदुपासना

उप.– अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माऽभिव्याहाराय वागथ यो वेदेद१ँ शृणवानीति स आत्मा श्रवणाय श्रोत्रम् ॥ ४ ॥

अथ यो वेदेदं मन्वानीति स आत्मा मनोऽस्य दैवं चक्षुः स वा एष एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् रमते ॥ ५ ॥

य एते ब्रह्मलोके तं वा एतं देवा आत्मानमुपासते तस्मात् तेषा१ँ सर्वे च लोकाः आत्ताः सर्वे च कामाः सर्वा१ँश्च लोकानाप्नोति सर्वा१ँश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच प्रजापतिरुवाच ॥ ६ ॥ १२ ॥

भा.– यथैव सारथिर्याने एवं देहे च मारुतः ।
यथा रथी तथा विष्णुर्जीवोऽन्यरथगो यथा ॥

यदाश्रितानीन्द्रियाणि प्राणश्चापि यदाश्रयः ।
यदाश्रयोऽप्ययं जीवो यो वेदैषां प्रवर्तनम् ॥

दर्शनं श्रवणं घ्राणं जिह्वां स्पर्शं मनस्तथा ।
तदीयान् विषयांश्चैव यो वेदाखिलमञ्जसा ॥

स विष्णुः परमो ज्ञेयो देवताः करणानि च ।
स एतैरिन्द्रियैर्विष्णुर्भोगाननुभवत्यजः ॥

स्वरूपेणैव शक्तोऽपि जीवदेहस्थितो हरिः ।
भुङ्क्ते तदिन्द्रियैर्भोगाञ्छुरितैरिन्द्रियैः स्वकैः ॥

**जीवं तदिन्द्रियाण्येवं प्राणं च व्याप्य कृत्स्नशः ।**
**भुङ्क्ते तत्तद्गुणान् विष्णुर्नैव दोषान् कदाचन ॥**

**तमेवं[१] देवताः सर्वाः वाय्वाद्याः समुपासते ।**
**तस्माद्देववशा लोकाः सर्वकामाः सजीवकाः ॥**

**तमेतं यो यथा ज्ञात्वा पश्येद्विष्णुं सनातनम् ।**
**आप्नोति सर्वकामांश्च सर्वलोकांश्च कामतः ॥**

**इति सामसंहितायाम् ।**

**भाष्यविवृतिः–** रश्मिभिराकाशमनुविषण्णमेतच्चक्षुर्यत्र यदधीनमिति यावत् । सचाक्षुषः शरीराधिष्ठाता । उक्तमेव चक्षुरादीनां करणत्वमात्मनः करणप्रयोक्तृत्वं विशदमाह– **दर्शनायेत्यादिना** ॥ **गन्धाय** गन्धज्ञानाय । आत्मनश्चक्षुरादिकरणं न केवलं जडं किन्तु दैवाधिष्ठानमित्याह– **अस्येति** । अस्यात्मनो मनो दैवं चक्षुर्दैवाधिष्ठितं मन आत्मनो रमणे मुख्यकारण-मित्याह– **स वा एष इति** ॥ एवं परमात्मा शरीरमधिष्ठाय सारथ्यादि-भूतान् प्राणान्नियमयतीत्युपासकस्य फलं परकृतिपूर्वमाह ॥ **य एते इत्यादिना** ॥ एवं प्रजापतिनोक्तमात्मनोपदेशमनूद्योक्तमुपसंहरति वेदपुरुषः– **इति हेति** । स यथा प्रयोग्य इत्यादिजीवपरत्वप्रतीतिं निवारयन् व्याचष्टे– **यथैव सारथिः इत्यादिना** ॥ चक्षुषा मनसा सर्वान् कामानित्युक्तमुप-लक्षणमिति भावेन तद्व्याचष्टे– **स एतैरिति** ॥ इन्द्रियाणि विहाय भोगा-ननुभवितुमशक्त इति प्रतीतिं निवारयति– **स्वरूपेणेति** ॥ छुरितैरित्युक्तं विशदमाह– **जीवमिति** ॥

---

१. 'तमेतं' पाठान्तरम् ।

## विरोचनमतनिरूपणम्

**भा.– उभौ लोकाववाप्नोति वचनान्न लोकायतिकमतं विरोचनोक्तम्। किन्तु विम्वप्रतिविम्वयोरभिमान्यैक्याभिप्रायेण जीवात्मैव महय्य इति मायावाद एव। न चात्र जीव आत्मशब्दोक्तः। 'तदस्यामृतस्याशरीरस्यात्मनोधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इतीशजीवयोः सतात्पर्यं भेदाभिधानात्। न हि जीवादन्यस्य प्रियाप्रियानुभवोऽस्ति। न च मुक्तस्यापि प्रियाप्रियापहतिरस्ति।**

**भाष्यविवृतिः–** ब्रह्मोपदेशाद्विरोचनेन ब्रह्मजीवौ बिम्बावतस्तावभिन्नौ अतश्च आत्मैव प्रतिबिम्बभूत जीव एव महय्य इति मायावादो अवबुद्धः स एवासुरेभ्यश्चोक्तः। इन्द्रेणात्मा जीवस्य जागृदाद्यवस्थाप्रवर्तकः जीवस्तु जग्रदाद्यवस्थानुभविता शरीराभिमानेन प्रियाप्रियानुसन्धाता चात्मा तु तद्रहितोऽतस्तयोर्बिम्बप्रतिबिम्बभावेऽप्यत्यन्तं भेद एव। स महीयत[१] इति भेदवादोऽवबुद्धः। स एव देवेभ्यश्चोक्त इति प्रमाणेन व्याख्याय तत्परिशुद्धये आत्मैव देह एव देहातिरिक्तात्मनोऽ[२]भावान्महय्य इति लोकायतमतमवबुद्धमुपदिष्टं च विरोचनेनेति केचित्। तत्रानुपपत्युक्त्या दोषं वदन्नुक्तरीत्या मायावाद एवावबुद्ध इत्याह– उभाविति ॥ उभौ लोकाववाप्नोतीत्युभयलोकावाप्तिवचनात्। देहात्मत्वायोगादित्यर्थः। अभिमानिनोरैक्याभिप्रायेण बिम्बप्रतिबिम्बानुबुद्धचैतन्ययोरैक्याभिप्रायेणेत्यर्थः। य आत्माऽपहतपाप्मेत्यादावात्मशब्दोक्तो हरिरित्युक्तम्। अत्र प्रकरणे आत्मशब्दोक्तो जीवात्मैव कस्मान्न स्यादित्यतस्तस्यापहतपाप्मत्वाद्ययोगादित्याशयवान्निषेधति– न चेति ॥ ब्रह्मणोऽपहत-

१. स महय्य इति खपाठः।

१. तदतिरिक्तात्मनो इति खपाठः।

पाप्मत्वादिभावात्तदभिन्नस्य तद्युक्तमित्यतस्तयोरैक्यं प्रकृतवाक्यान्युदाहृत्य दूषयति– **तदस्येति** ॥ अत्रेशादन्यः कश्चित् प्रतीयते न स जीव इत्यतस्तस्य जीवत्वं ज्ञापकेन समर्थयते– **नहीति** ॥ नन्वात्तो वै सशरीरः प्रियाप्रियाभ्यामित्यत्रेशाज्जीवोऽभिन्न इति हि विवक्षितं तन्मुक्त भागे सिद्धमित्यतस्तस्यापि तदस्तीत्याह– **नचेति** ॥

## प्रियाप्रियरहितो भगवानेव, न जीवः

**भा.– न च विष्णोरत्र विवक्षितं प्रियम् । पराधीनरतिप्राप्तिर्हि प्रियमत्र विवक्षितं न हि तद्भगवतः । मुक्तानां तु भगवदधीनरतित्वात् प्रियमस्त्येव ।**

**जीवा मुक्ता अमुक्ताश्च पराधीनरतित्वतः ।**
**न प्रियापहतिः क्वापि स्वातन्त्र्यान्न हरेः प्रियम् ॥**

**पराधीनरतिर्यस्मात् प्रियमित्युच्यते बुधैः ।**
**हरेरधीनता तु स्याद्यद्यपि ब्रह्मवायुवोः ॥**

**तदन्यवशताभावादप्रियाविति तौ श्रुतौ ।**
**यथा राज्ञः स्वराट्शब्दो रुद्रस्येश्वरता तथा ॥**

**यथा शक्रस्य चेन्द्रत्वं तद्वदप्रियता तयोः ।**
**यथा राज्ञ्याः स्वराज्ञीत्वं यथैवोमेश्वरी स्मृता ॥**
**विद्युतः स्तनयित्नोश्च तथैवाप्रियता श्रुता ॥**

**इति च परमश्रुतौ ।**

**भाष्यविवृतिः**– ईशाज्जीवो भिन्नः । प्रियवत्वादितीशेऽनैकान्तिकमित्यतो न हेतुरत्रास्तीत्याह– **नचेति** । अत्र विवक्षितं प्रियत्वं विष्णो-

र्नचास्तीति योजना । अत्र विवक्षितं प्रियत्वं किं यद्विष्णोर्नास्ति येन हेतोस्तत्रानैकान्तिकत्वाभाव इत्यत आह– **परेति** ॥ न च मुक्तस्यापीत्यत्र हेतोरनुक्तत्वाद्धेतुपूर्वं साध्यमाह– **मुक्तानामिति** ॥ जीवा उक्तप्रकार-प्रियवन्तः ईशस्तद्रहित इत्येतमर्थमागमेन समर्थयते– **जीवामुक्ता इति** ॥ अत्रैवं योज्यम् । मुक्ता अमुक्ताश्च जीवाः प्रियवन्तः तेषां पराधीन-रतिमत्वतः क्वापि न प्रियापहतिरिति । स्वातन्त्र्यान्न हरेः प्रियमित्ये-तद्विशदयति– **पराधीनेति** ॥ ननु वाय्वादेर्हर्य्यधीनत्वेन प्रियभावे वायुरभ्रं विद्युत् स्तनयित्नुरशरीराण्येतान्यतः प्रियरहितानीत्युक्तिः कथमित्यत-स्तद्दृष्टान्तेन घटयते– **हरेरित्यादिना** ॥ वाय्वोरिति यणादेशो भाव्ये वायुवोरित्युवङादेशः[1] । **अप्रियौ** प्रियरहितौ । स्वतन्त्रो राजत इति स्वराट् । शब्दो यथाऽमुख्य इत्यादि योज्यम् । **इन्द्रत्वं** परमैश्वर्यवत्वम् । **अप्रियता** प्रियरहितत्वम् ।

**भा.– 'स एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परञ्ज्योतिरुप-सम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति मुक्तस्य तत्प्रसादात् तत्प्राप्त्या निजानन्दानुभवश्रुतेश्च ।**

**उत्तमपुरुष इति कथितो भगवानेव**

**भा.– स उत्तमः पुरुष[2] इति तस्य जीवादुत्तमत्वश्रुतेश्च । अपर-पुरुषापेक्षया ह्युत्तमपुरुषशब्दो भवति । अन्यथोत्तमशब्द एव स्यात् । 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति च ।**

**ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते ।**
**तद्यत्स्वभावः कैवल्यं स भवान् केवलो हरे ॥**

---

१. छान्दस इति भावः । २. 'उत्तमपुरुषः' पाठान्तरम् ।

**'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति'** ।

**भाष्यविवृतिः**— न चात्र जीवा आत्मशब्देनोक्ता इत्यादिना जीवपरयोर्भेदः साधितः । तत्रैवमाशङ्का अस्तु भेदकोपाधिभावावसरे संसारे तयोर्भेदः । नत्वपगतभेदकोपाधिदशायां मुक्ताविति । तां मुक्तिभेदप्रतिपादकानि स वा एष संप्रसाद इत्यादीनि वाक्यान्युदाहृत्य परिहरति— **स उत्तमपुरुष इति** ॥ अत्र मुक्तादीशस्य कथमुत्तमत्वं लब्धं येन तस्मात्तस्य भेदः सिध्येदित्यतस्तत्प्रकारं दर्शयति **अपरेति** ॥ अपरपुरुषापेक्षया नत्वपरजडापेक्षया पुरुषस्येति ग्राह्यम् । **अन्यथा** परपुरुषाभावे । पुरुषस्योत्तमपुरुषत्वमपरपुरुषापेक्षयैव न तु जडापेक्षयेत्येतत्प्रयोगदर्शनेनापि समर्थयते । उत्तमपुरुषस्तु पुरुषशब्दोदिताभ्यां क्षराक्षराभ्यामन्यः । **तत्कैवल्यं सर्वोत्तमम्** । यत्स्वभावः यस्य स्वरूपं स इत्यादि योज्यम् ।

## उत्तमपुरुषो न जीवात्मा

**भा.— 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति' 'एतमानन्दमयामात्मानमुपसङ्क्रम्येमाँल्लोकान् कामान्नी कामरूप्यनुसञ्चरन्' 'न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः' 'कृष्णो मुक्तैरिज्यते वीतमोहैः' इत्यादेश्च । 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरम्' इत्यत्रापि भेदेनावस्थानश्रुतेः । उपशब्दादन्तरशब्दाच्च मुक्तस्य परंज्योतिस्समीपावस्थानावगतेश्च ।**

**भाष्यविवृतिः**— स एष संप्रसाद इत्यादिमुक्तस्येशाद्भेदभाव उदाहृतम् । तत्र तस्य स्पष्टमप्रतीतेस्तद्दर्शयति **उपशब्दादिति** ॥ अन्तरशब्दो वाक्यान्तरस्थः,[१] अत्र तददर्शनात् ।

---

१. शाखान्तरस्थः ।

## जीवोपासनां न चतुरानन उपदिशेत् इति निरूपणम्

**भा.– न च जीवमात्रं देवा उपासते । 'ऊर्जं पृथिव्या भक्त्वायोरुगायमुपासते' इति हि श्रुतिः । 'भेददृष्ट्याऽभिमानेन निःसङ्गेनापि कर्मणा' इत्यादेश्च ।**

**भाष्यविवृतिः**– एतं देवा आत्मानमुपासत इत्युक्तदेवोपास्यत्वायोगाच्चात्रोक्त आत्मा न जीव इत्याह– **न चेति** ॥ किं तु विष्णुमिति शेषः । देवा विष्णुमुपासत इति कुतः सिद्धमित्यतस्तत्र प्रमाणमाह– **ऊर्जमिति** ॥ पृथिव्या ऊर्जमन्नं भक्त्वाय भोक्तुमुरुगायमुपासत इति योजना । द्वितीयाद्वै भयं भवतीति भेददर्शनस्य भयहेतुत्वश्रवणात्कथं जीवेशयोर्भेदस्य वास्तवत्वमित्यतस्तद्वाक्यं विरोधिद्वितीयदर्शनाद्भयं भवतीत्यादि प्रकारान्तरेण योज्यम् । भेददर्शनस्य पुरुषार्थहेतुत्वश्रवणादित्याह– **भेदेति** ॥ **अभिमानेन** आग्रहेण । **निःसङ्गेन** फलापेक्षारहितेन ।

## भगवतः इन्द्रियैर्भोगकथनम्

**भा.– 'भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पूरुषः ।**
**भुङ्क्ते गुणान् षोडश षोडशात्मकः सोऽलङ्कृषीष्ट भगवान् वचांसि मे ॥'**

**इत्यादौ भगवत एवेन्द्रियैर्भोगोक्तेश्च ।**

**'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे' इति च । 'ओं गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इति भगवद्वचनं च[१] ।**

**भाष्यविवृतिः**– ननु मनसैवैतान् कामान् पश्यन् रमत इत्युक्त्याऽऽत्मा

१. इति भगवद्वचनं हृपाठः ।

जीव इत्यवगम्यते । परमात्मनस्तदभावादित्यतो नैवं भाषिष्ठाः । कुत इत्यत आह– **भूतैरिति** ॥ यत् यस्मात् । पूर्षु शेतेऽतः पुरुषः । चक्षुरादिदशेन्द्रियाणां मनआदीनां पञ्चानां साक्षिणश्च षोडशगुणान् विषयान् भुङ्क्ते । तत्रैव श्रुतिं पठति– **ऋतमिति**[१] ॥ इदं वाक्यं भगवतो भोगप्रतिपादकं कुतः इत्यतः सूत्रकृता तथा विनिर्णीतत्वादिति सूत्रं पठति **गुहामिति**[२] ॥

**भा.– इदं पश्यामि जिघ्राणीत्यपि जीवा न वै विदुः ।**
**द्रव्याणामपरिज्ञानाद्भेदासौ पुरुषोत्तमः ॥ इति च ।**

## उत्तमपुरुषत्वेन भगवानेव परामृष्टः

**'स उत्तमः पुरुषः'[३] इति भगवत एवायं परामर्शः । 'ॐ अन्यार्थश्च परामर्शः' इति भगवद्वचनात् । 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति च । 'ॐ जगद्व्यापारवर्जम्' इत्यल्पैश्वर्यत्वं च मुक्तस्य भगवताऽभिहितम् । अतो यं प्राप्य जीवः स्वेन रूपेणाभिनिष्पद्यते स भगवानुत्तमः पुरुष इति परामर्शः ।**

**भाष्यविवृतिः**– भगवतो भोगसद्भावे वाक्यान्तरं च पठतिइ**दमिति** । स उत्तमपुरुष इत्येतद्भगवत्परामर्शार्थतया व्याख्यातम् । स्वरूपेणाभिनिष्पद्यत इत्युक्तपरामर्शार्थं किं न स्यात्तस्य निरन्तरप्रकृतत्वादित्यतस्तावत्प्रतिजानीते– **स इति**[४] ॥ तत्कुत इत्यतस्तथा सूत्रकृता निर्णीतत्वा-

---

१. यौ सुकृतनिर्मितशरीरे हृदयगुहां प्रविष्टौ तत्रापि सर्वजीवोत्तमेऽतिपूर्णे वायौ प्रविष्टौ सुकृतफलं भुञ्जानौ तौ ब्रह्मविदः छायातपौ वदन्तीति सम्बन्धः ।

२. गुहां प्रविष्टौ पिबन्तौ विष्णुरूपे एव । ''घर्मा समन्ता '' इति तद्दर्शनात् इति भावः ।

३. 'उत्तमपुरुषः' हृपाठः ।

४. खपाठे अयं प्रतीको नास्ति ।

दित्याह– **अन्यार्थ इति** । भवत्वन्यार्थः परामर्शः, तथाऽपि भगवत एवायं परामर्शः इति कुत इत्यतस्तस्योत्तमपुरुषत्वादित्याह– **उत्तम इति** ॥ भगवत्परामर्शार्थित्वे ज्ञापकान्तरञ्चाह– **जगदिति** ॥ अल्पैश्वर्यस्योत्तम-पुरुषत्वायोगादिति भावः । उपसंहारव्याजेन परामर्शवाक्यर्थमाह– **अत इति** ॥

**भा.– 'स्वप्ने महीयमानश्चरति यत्रैतत्सुप्तः' इति पुरस्तादपि भेदोक्तेः । न हि महीयमान एव जीवश्चरति । प्रायोग्यः सारथिः । प्रयोगेन यानस्य । 'यन्ता सारथिरानेता प्रायोग्य इति कीर्त्यते'[१] इत्यभिधानात् । 'अन्येभ्यो दीप्यमानत्वाद् दैवं चक्षुर्मनः स्मृतम्' इति च । य एते ब्रह्मलोके तेषु रमते । अनुविद्य शास्त्राचार्यानुसारेण विदित्वा विजानात्यापरोक्ष्येण । 'वेदनं शास्त्रतो ज्ञानं विज्ञानं ब्रह्मदर्शनम्' इति च ॥ ७-१२ ॥**

**भाष्यविवृतिः**– जीवेश्वरभेदस्य साधितत्वेऽपि तदभेदवार्तामप्यसह-मानस्तस्य हृद्रतत्वात्तत्र बाधकान्तरमाह– **स्वप्न इति** ॥ स्वप्ने महीय-मानश्चरतीत्यस्य बाधकत्वं स्फुटयति– **नहीति** ॥ यथैव सारथिरिति कस्यार्थ इति न ज्ञायतेऽतः प्रायोग्यपदस्याथमाह– **प्रायोग्य इति** ॥ सारथिः प्रायोग्यपदार्थः कया वृत्येति जिज्ञासायां योगेन रूढ्या चेत्याह– **प्रयोगेनेति** ॥ मनसश्चक्षुरादिभ्योऽपि दैवत्वं कुतः कारणादिति जिज्ञासाया-माह– **अन्येभ्य इति** ॥ य एते ब्रह्मलोक इत्यस्यान्वयाप्रतीतेस्तं दर्शयति– **य इति** ॥ अनुविद्य विजानातीत्यनयोरेकार्थत्वप्रतीतिं निवारयन्नर्थावाह– **अनुविद्येति** ॥ उक्तमर्थमभिधानोक्त्या दृढयति **वेदनमिति** ॥ इति **द्वादशः खण्डः** ।

---

१. 'कीर्तितः' पाठान्तरम् ।

# अथ त्रयोदशः खण्डः

## मोक्षप्रार्थना

उप.– श्यामाच्छवलं प्रपद्ये शवलाच्छ्यामं प्रपद्येऽश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामीत्यभिसम्भवामीति ॥ १३ ॥

भा.– श्यामो हृदिस्थितो विष्णुः शवलो विश्वरूपवान् ।
जीववर्णो जीवगतो लोहितश्चक्षुषि स्थितः ॥ इति मानसे ॥

हयग्रीवमुखोत्थानि यानि वाक्यानि तानि तु ।
रमा ददर्श तान्येव ब्रह्मा तान्येव नारदः ॥

यानि विष्णोरयोग्यानि प्रार्थनाद्यात्मकानि तु ।
तान्युत्तरेषां वाक्यानि भविष्याण्यवदद्धरिः ॥
एवं रमा तथा ब्रह्मा छान्दोग्योपनिषद्धि सा ॥

इति सामसंहितायाम् ॥ १३ ॥

**भाष्यविवृतिः**– एवं शरीरहृदयस्योपास्तिमभिधाय तत्साध्यां तद्योग्यानां विश्वरूपोपास्तिमाह– **श्यामादिति** ॥ तदप्रतीतेर्व्याचष्टे– **श्याम इति** ॥ प्रसङ्गान्मूलानुक्तमपि ज्ञातव्यमाह– **जीववर्ण इति** ॥ एवं हृद्गतविश्वरूपोपास्तिमभिधाय तत्प्रार्थनप्रकारमाह– **अश्व इति** ॥ अकृतं अभद्रम् । अस्या उपनिषदो हयग्रीवादिऋषित्वात्तस्याप्यश्व इव रोमाणि विधूय पापमित्यादिप्रार्थनोक्त्या पापादिसम्बन्धः प्रतीयतेऽतः सा प्रार्थनाऽवान्तरकृतेत्याह– **हयग्रीवेति** ॥ भवन्तु पश्चात्तान्युत्तरेषां प्रार्थनावाक्यानि पूर्वं तेषां हयग्रीवो वक्ता तत्कथं घटत इत्यत इदं[1] वक्ष्यन्तीति तथाहेत्याह– **भविष्याणीति** ॥ इति त्रयोदशः खण्डः ॥

१. एवमिति खपाठः ।

# अथ चतुर्दशः खण्डः

## यशःप्रार्थना

**उप.– आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतꣳ स आत्मा प्रजापतेः सभां वेश्म प्रपद्ये यशोऽहं भवानि ब्राह्मणानां यशो राज्ञां यशो विशां यशोऽहमनुप्रापत्सि स हाहं यशसां यशः श्वेतमदत्कमदत्कं श्वेतं लिन्दु माऽभिगां लिन्दु माऽभिगाम् ॥१-१४॥**

**भा.– आकाशोऽतिप्रकाशत्वान्नामरूपे ऋते स्थितः ।**
**ब्रह्माख्यो भगवान् विष्णुस्तद्वेश्म प्राप्नुयामहम् ॥**

**यशोऽहं सर्ववर्णानां मत्तोऽन्येषां[1] यशो भवेत् ।**
**सोऽहं मम यशोदातृ यशसां यश उत्तमम् ॥**

**विष्ण्वाख्यं परमं ब्रह्म श्वेतं श्वसनगं यतः ।**
**अदत्कमद्यमानं कं स्वानन्दानुभवात्मकम् ॥**
**लिन्दु तद्गतिदं यस्माद् तदहं प्राप्नुयां सदा ॥ १४ ॥**

**भाष्यविवृतिः**– यावान्वा अयमाकाश इति व्याप्तः परमात्मा प्रकृतस्तदुपास्तिप्रकारमाह– **आकाश इत्यादिना ॥ नामरूपयोः** नामरूपात्मकस्य जगतः । **निर्वहिता** कर्त्ता । ते नामरूपयोरन्तरा आगन्तुकनामरूपरहितमित्यर्थः । आकाशस्योपास्तिप्रकारमुक्त्वा तत्प्रार्थनाप्रकारमाह– **प्रजापतेरिति ॥ प्रजापतेः** भगवतः । सभां वेश्मच प्रपद्ये । आकाशो वै नामेत्याद्यप्रतीतेर्व्याचष्टे– **आकाश इत्यादिना ॥** यशोऽहं भवानि ब्राह्मणानामित्यादि व्याचष्टे– **यश इति ॥ सर्ववर्णानां यशोऽहं** सर्ववर्णयशस्वी अहमित्यर्थः । सहाहं यशसां यशस्विनां यशो यशः प्रदः

---

१. 'ह्येषां' इ्पाठः ।

स्यामित्येतद्व्याचष्टे– **मत्त** इति ॥ सहाहं यशसां यश इत्येतत्प्रकारान्तरेण च व्याचष्टे– **सोहमिति** ॥ योजनातुयशसां यश उत्तमं यशः । विष्ण्वाख्यं परमं ब्रह्म मम यशः यशोदातृ सहाहं सोऽहं तत्प्राप्नुयामिति । श्वेत-मित्यादि व्याचष्टे– **श्वेतमित्यादिना** ॥ अद्यमानं कमित्युक्तं विशदमाह– **स्वेति** ॥ आ अभिगामित्येतद्व्याचष्टे– **लिंद्विति** ॥ इति चतुर्दशः खण्डः ॥

## अथ पञ्चदशः खण्डः

## सम्प्रदायप्राप्तशास्त्रश्रवणादितः शाश्वतमोक्षलाभनिरूपणम्

**उप.– तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यः आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिꣳसन् सर्वाणि भूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते न च पुनरावर्तते ॥ १५ ॥**

॥ इति श्रीमच्छान्दोग्योपनिषदि अष्टमोऽध्यायः ॥

॥ इति श्रीमच्छान्दोग्योपनिषत् सम्पूर्णा ॥

भा.– उपदिष्टः परेणैव त्वेवमाह चतुर्मुखः ।
उवाच च मनोर्विद्यां प्रजाभ्यो मनुरेव च ॥

तस्मात् सर्वेन्द्रियाणीशे निधाय पुरुषोत्तमे ।
दृष्ट्वा तं परमं विष्णुं तल्लोकं प्रतिपद्यते ॥
नावर्तेत पुनस्तस्मात् कदाचित् केनचित् क्वचित्[१] ॥
इति च ॥ १५ ॥

१. 'केनचिद्भटेः' इ्पाठः ।

**भाष्यविवृतिः**– एषा विद्या परमादरेणोपादेयेत्याशयेन वेदपुरुषः एतदुपनिषत्प्रवर्तकानाह– **तद्धैतदित्यादिना** ॥ एवं परंपरागतत्वादद्यतनोऽपि मुमुक्षुरेतदुपनिषदभ्यासी स्यादित्याशयवानेतदुपनिषदभ्यासिनो यम-नियमाभिधानपूर्वमपुनरावृत्तिलक्षणं फलं चाह– **आचार्येत्यादिना** ॥ शुचौ देशे । **कुटुम्बे** ग्रहस्थाश्रमे वर्तमानः । **धार्मिकान्** व्यापारान् । विदधत् । **तीर्थेभ्योऽन्यत्र** यज्ञेभ्यो विना ।

ब्राह्मणादीनां सर्वेषां यशः प्राप्नुयामित्यादिसर्वोपासकविषयत्वानुपपत्तेरेवं उपासकः क इति जिज्ञासां पूरयंस्तद्धैतदित्यादि व्याचष्टे– **उपदिष्ट इति** ॥ आचार्यकुलादित्यादि व्याचष्टे– **तस्मादिति** ॥ सर्वेन्द्रियाणीशे नियम्य वर्तमानः ॥ **इति पञ्चदशः खण्डः** ॥

## अन्तिम मङ्गलाचरणम्

भा.– **पूर्णानन्दमहोदधिः परतमो विष्णुः परस्मात् सदा**
**सर्वज्ञः सकलेशिता गुणनिधिर्नित्योत्सवस्तद्विदाम् ।**
**सर्वस्मादधिकं मम प्रियतमस्स्विष्टादपीष्टोत्तमः**
**सर्वस्माच्च हितात् सदा हिततमः प्रीतो भवेन्मे हरिः ॥**

**भाष्यविवृतिः**– शास्त्रादौ तदवसाने च तत्प्रतिपाद्येष्टदेवतास्तुतिप्रार्थनाप्रणमादिष्वन्यतमत् कार्यं परिसमाप्त्यादि हेतुत्वात् । अतोऽवसानेऽपि स्वेष्टदेवतास्तुतिप्रार्थने करोति– **पूर्णेति** ॥ परस्मात् परतमः । गुणानां निधिर्निधानमित्युक्ता गुणा एव लेशतो दर्शिताः– **पूर्णानन्देत्यादिना** ॥ सर्वस्मादधिकं मम प्रियतम इत्युक्तं प्रियतमत्वं नोपचरितमित्याह– **स्विष्टादपीति** ॥

भा.– यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
वट् तद्दर्शनमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुः
र्मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हरौ तेन हि ॥

**भाष्यविवृतिः–** मुमुक्षोर्भगवद्ज्ञानस्येव स्वज्ञानस्याप्यपेक्षितत्वात् स्वरूपं ख्यापयन् भगवति स्वकृतिं समर्पयति– **यस्येति** ॥ अस्यैवं योजना यस्य वायोर्देवस्य बळित्था तद्वपुषेत्यादि वेदवचनेऽलं दिव्यानि त्रीणि रूपाण्युदितानि । तेन हि वायुना तृतीयेन रूपेणेदं भाष्यं हरौ कृतम् । मूलरूपं वायुनामकं केन निमित्तेन ? महति शब्दप्रवृत्तेर्निरर्थ-कत्वा-योगादिति जिज्ञासायामाह– **अलमिति** ॥ तत् मूलरूपम् । वबयोः सादृश्याब्दट् बलं बलात्मकम् । आयुर्दर्शतं ज्ञानात्मकं चातो वायुनामक-मिति । मूलरूपादवताररूपस्येन्द्रार्जुनवन्न गुणवैषम्यं मन्तव्यमित्युक्तम्– **इत्थमेव** ॥ मूलरूपं यद्गुणकं तद्गुणकमेवावतारायापि निहितं भगवता । तन्मूलरूपं भरणगमनयोगाद्भर्गः भर्गनामकम् । महच्च । त्रयाणामपि रूपाणां सव्यापारं नामान्याह । प्रथमकं प्रथमं वपू रामवचोनयं रामवचः सीतां प्रति नेतृ । रामप्रतिपादकं मूलरामायणं शिष्येभ्यो व्याख्यात्रिति वा हनूमन्नामकम् । द्वितीयं वपुः कौरवादिपृतनाक्षयकारित्वात् पृक्षः भीम-नामकम् । यत्तु तृतीयं तत् मध्वः आनन्दसन्दायिसुशास्त्रकृत्वादानन्दतीर्थ-नामकमित्यर्थः ।

## वळित्थासूक्तार्थः

भा.– हनुशब्दो ज्ञानवाची हनुमान् मतिशब्दितः ।
रामस्य स्वृतरूपस्य वाचो नेता गुणोदधिः ॥

भृतमो भीम इत्युक्तो वाचो मा मातरः स्मृतः ।
ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम् ॥

प्रोक्ताः सप्तशिवास्तत्र शयो भीमस्ततः स्मृतः ।
मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् ॥

मध्व आनन्दतीर्थः स्यात् तृतीया मारुतीतनुः ।
इति सूक्तगतं रूपत्रयमेतन्महात्मनः ॥
यो वेद वेदवित् स स्यात् तत्त्ववित् तत्प्रसादतः ॥

इति सद्भावे ।

आनन्दतीर्थ इति तु यस्य नाम तृतीयकम् ।
पूर्णप्रज्ञेन तेनेदं कृतं भाष्यं हरेः प्रियम् ॥

नित्यानन्दो हरिः पूर्णो नित्यदा प्रीयतां मम ।
नमस्तस्मै नमस्तस्मै नमस्तस्मै च विष्णवे ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमच्छन्दोग्योपनिषद्भाष्येऽष्टमोऽध्यायः ॥

॥ इति श्रीमच्छान्दोग्योपनिषद्भाष्यम् सम्पूर्णम् ॥

**भाष्यविवृतिः**– प्राणाग्निपरताप्रथितेः सूक्तं लेशतः स्मृत्या व्याचष्टे– **हनुशब्द इति ॥** श्लोकेन मतिऋतस्य धेना इति व्याख्यातं भवति । भृतम इत्यनेन नित्य आशये द्वितीयमा सप्तशिवासु मातृष्वित्येतद्व्याख्यातं भवति । माश्च वाचः मातृवद्धितकारित्वान्मातरः । अपौरुषेयवाक्यतयाऽऽप्तवाक्यतया च प्रामाण्यकारणदोषरहितत्वाच्छिवाः कल्याणभूताः । ततः कारणात् तत्र तद्विचारपरो भीमः स्मृतः । मध्वित्यनेन मध्व आधव इत्यत्र मध्वशब्दो

व्याख्यातः । ननु मध्वित्युकारः श्रूयते । तथा च मधुव इति स्यान्नतु मध्व इति चेत् । सत्यम् । वर्णागमो वर्णविपर्ययश्चेत्यादिन्यायेन ताच्छील्यार्थस्योकारस्य पूर्वस्वरूपत्वमभिप्रेत्य मध्व इत्युक्तिरित्यदोषः । केन रूपेणेदं भाष्यं कृतमिति जिज्ञासायामाह– **आनन्देति** ॥ भाष्यकृतेः प्रयोजनं विस्पष्टयन् भक्त्याधिक्याद्भगवन्नत्या समापयति– **नित्यानन्द इति** ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमच्छन्दोगोपनिषद्भाष्य-टीकायां जयतीर्थपूज्यचरणशिष्यव्यासतीर्थकृतायामष्टमोऽध्यायः ॥**

**हयग्रीवप्रसादेन लिखितं सुखरूपिणः ॥**
**निर्दोषस्य हरेस्तुष्ट्यै तेन पातु हरिः सखा[१] ॥ १ ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥**

१. अयं श्लोकः खमातृकायामेव दृश्यते । नेतरमातृकासु । लिपिकृता लिखित इति भाति ।

## अनुबन्धः–१

# दशोपनिषदां ऋषिदेवताविवरणम्

| | उपनिषत् | वेदशाखा | ऋषिः | प्रतिपाद्यदेवता |
|---|---|---|---|---|
| १. | ईशावास्यं | शुक्लयजुर्वेद वाजसनेयसंहिता | स्वायम्भुवमनुः | यज्ञः |
| २. | तलवकारः | सामवेदतलवकारब्राह्मणम् | ब्रह्मासदाशिवश्च | विष्णुः |
| ३. | कठोपनिषत् | कृष्णयजुर्वेदतैत्तिरीयसंहिता | यमः | वामनः |
| ४. | षट्प्रश्नोपनिषत् | अथर्ववेदपिप्पलादशाखा | पिप्पलादादयः | वासुदेवः |
| ५. | आथर्वणोपनिषत् | अथर्ववेदः | ब्रह्माथर्वणौ | अक्षरनामको विष्णुः |
| ६. | माण्डूकोपनिषत् | कृष्णयजुर्वेदे तैत्तिरीयारण्यकम् | मण्डूकरूपीवरुणः | विश्वतैजसप्राज्ञतुरीयाः |
| ७. | तैत्तिरीयोपनिषत् | ऋग्वेदः ऐतरेयारण्यकम् | विष्णुब्रह्मवरुणभृगवः | सूर्यमण्डलस्थो हरिः । |
| ८. | ऐतरेयोपनिषत् | सामवेदः छान्दोग्यब्राह्मणम् | ऐतरेयः | (वासुदेवादिपञ्चरूपाः) |
| ९. | छान्दोग्योपनिषत् | शुक्लयजुर्वेदः कण्वशाखा | हयग्रीवो रमा च | ऐतरेयः |
| १०. | बृहदारण्यकोपनिपत् | | ब्रह्मासूर्य | लक्ष्मीपतिः |
| | | | याज्ञवल्क्यकाण्वाः | लक्ष्मीशः |

# अनुबन्धः–२

## छान्दोग्योपनिषद्भाष्ये उदाहृताः प्रमाणग्रन्थाः

| | | |
|---|---|---|
| अभिधानम् | पाद्मम् | वाक्यनिर्णयः |
| आचार्यसंहिता | प्रभञ्जनः | विश्वनिर्णयः |
| उपासनलक्षणम् | प्रभावः | वैश्वानरविद्या |
| ऋक्संहिता | प्रवृत्तः | शब्दनिर्णयः |
| कर्मानुपूर्वी | प्राणसंहिता | श्रुतिः |
| कालकीयम् | प्राथम्यम् | सत्तत्वम् |
| गारुडः | प्रध्यानम् | सद्गुणः |
| तत्वविवेकः | ब्रह्मतर्कः | सद्भावः |
| तत्वसारः | ब्रह्मतत्वम् | सन्ध्यानम् |
| तत्वसंहिता | ब्रह्मवैवतः | समन्वयः |
| तार्तीयम् | ब्रह्मसूत्राणि | सङ्कर्षणसूत्राणि |
| त्रैविद्यम् | ब्रह्माण्डः | संस्तत्वम् |
| देवमीमांसा | भगवद्गीता | सर्वयज्ञः |
| देवश्रुतिः | भागवतम् | स्कान्दः |
| नारायणीयम् | महासंहिता | साधननिर्णयः |
| निवृत्तः | मानसम् | सामसंहिता |
| परमतत्वम् | महाकौर्मम् | सारनिर्णयः |
| परमश्रुतिः | माहात्म्यम् | अनिर्दिष्टाकराणि |
| परमसारः | मोक्षधर्मः | (प्रायः पञ्चाशत्) |
| परमसंहिता | लिङ्गनिर्णयः | |
| पर्यङ्कोपासना | वस्तुतत्वम् | |

# अनुबन्धः—३

## छान्दोग्योपनिषद्भाष्ये भगवन्नामानि

| भगवन्नाम | तदर्थः |
|---|---|
| एतत् | सर्वसन्निहितः । |
| उद्गीथः | उच्चत्वात्, गीतत्वात्, सर्वस्थानत्वात् । |
| ओम् | ओतमस्मिन् जगत्सर्वम् गुणपूर्णः । |
| | आधिकोच्चमिति ज्ञातम् । |
| परमपरार्ध्यः | अतिशयेन परमर्द्धिगुणः । |
| अक्षरम् | १) अक्षयात् रतिरूपत्वात् । |
| | २) अक्षेषु रमणात् । |
| स्वरः | स्वरतेः । |
| हिरण्मयः | इतरविलक्षणपूर्णानन्दस्वरूपः सुवर्णवर्णो वा । |
| ऋक् | ज्ञानरूपः । |
| साम | नित्यसमत्वात् । |
| उक्थम् | उत्थापकत्वात् । |
| आकाशः | आदीप्तत्वात् । |
| लोकः | ज्ञानस्वरूपः । |
| प्रस्तावः | प्रसवकर्ता । |
| देवः | सर्वज्ञः । |
| वरुणः | वरणीयः । |
| प्रजापतिः | प्रजापालकः । |
| सविता | प्रसविता । |
| साम | सारत्वेन मेयम् । |

| | |
|---|---|
| साधु | सारत्वेन धार्यम् । |
| कोशः | आनन्देच्छास्वरूपः |
| हिङ्कारः | हिं सृष्टिं करोतीति सृष्टिकर्ता प्रद्युम्नः । |
| प्रस्तावः | प्रारम्भः । प्रथमावतारत्वात् वासुदेवः प्रस्तावः । |
| प्रतिहारः | प्रति प्रति कार्येषु इदं जगद् हरेदित्यनेन स्थितिकर्तृत्वमुच्यते । |
| निधनम् | संहाकर्ता । |
| पृथिवी | सस्यादेः प्रथनात् । |
| अग्निः | अदनकर्ता । |
| अन्तरिक्षम् | अन्तरीक्षणात् । |
| द्यौः | क्रीडाकारणत्वात् । |
| आदित्यः | आयुष आदानात् । |
| अप्सूः | अपः सूते । |
| अप्सुषद् | जलशायी । |
| क्रतुः | क्रतूनां क्रतुत्वप्रदः सर्वशास्त्रावगतत्वात् । |
| वसन्तः | वासं तनोति । जीवेषु वसति । तेषां सुखकृच्च । |
| ग्रीष्मः | जलादीनां गिरणात् स्वीकरणात् ग्रीष्मः । |
| वर्षाः | जलादीनां वर्षणात् । |
| शरत् | शं सुखं राति ददाति । सुखदाता । |
| हेमन्तः | हिमं तनोति । |
| पशुः | पालनात् पः, सुखरूपत्वात् शुः । |
| अविः | अवनात् कम्बलादिना शीततः सर्वरक्षणात् । |
| अजः | अजयति इति अजः । यज्ञद्वारा सद्गतिहेतुत्वात् । अजगतौ । |

| | |
|---|---|
| अश्वः | आशुगन्ता । |
| पुरुषः | षड्गुणपूर्णः । |
| आदिः | कल्पादिहेतुः वराहरूपी । |
| उपद्रवः | दुष्टोपद्रवकर्ता । नरसिंहरूपी । |
| नाकं | दुःखवर्जितः, अथवा पूर्णानन्दस्वरूपः । |
| विशोकं | भक्तानां शोकनाशकः । |
| लोकः | प्रकाशरूपः । |
| चैत्रः | चित्रादियोगदाता । |
| आर्दत्यं | अपामत्ता । |
| मन्था | न मथनधूत्कारदिक्रियास्वहेतुकः । |
| मिथुनं | मिथो मिथुनम् । |
| समुद्रः | सम्यगुद्रेकात् । |
| दिशः | देशनात् । |
| लोम | लोपकः । |
| त्वक् | तवोरूपः प्रकाशरूपः । |
| मांसः | मादनात्, मा आह्लादकः । सारत्वात् सः अनुस्वार आधिक्यार्थः । |
| अस्थि | स्थिरासनः । |
| मज्जा | मदजनकः । |
| वायुः | वः ज्ञानरूपः आयुःप्रदश्च । |
| नक्षत्रं | नविद्यते क्षत्रं क्षत्रजात्यवच्छिन्नं यस्य तन्नक्षत्रम्, स्वतन्त्रः । |
| चन्द्रमाः | परमानन्दरूपः |
| त्रैविद्यः | वेदवेद्यः । ज्ञानरूपः । |
| वयांसि | आकाशगमनः । |

| | |
|---|---|
| मरीचिः | प्रमितप्रकाशः । |
| सर्प | सर्पणहेतुत्वात् गमनहेतुत्वात् । |
| गन्धर्वः | भूधारकः विद्याधारकः । |
| सर्व | पूर्णगुणत्वतः । |
| पिता | सृष्टिहेतुत्वात् । |
| अस्मि | निरसनात् मितिरूपाच्च |
| मधु | मदो धीयतेऽस्मिन्निति मदधिः मदाश्रयः । निर्वचनत्वात् दकारस्य लोपे इकारस्योकारे च मधु इति भावः । |

---

## अनुबन्धाः–४

## स्तोभाक्षरेषु प्रतिपाद्याः देवताः

| | | |
|---|---|---|
| १. | हावुकारः | अग्निहोत्रादि हूयते अत्र पृथिव्यामिति पृथिवी हाव् इति आक्रिय-माणत्वात् |
| २. | हायिकारः | आश्चर्यवदायाति । सुखकर्ता वायुः हायी इत्याक्रियमाणत्वात् कारः। |
| ३. | अथकारः | सूर्यप्रकाशस्य आनन्तर्यात् चन्द्रः अथ<br>-''- |
| ४. | इहकारः | सर्वसामीप्यात् विष्णुः इह |
| ५. | ईकारः | इन्धनात्अग्निः इः |
| ६. | उकारः | आतपदाहात् सूर्यः उः |
| ७. | एकारः निहवः | नितरामाह्वयन्ति एनम् इन्द्रः |
| ८. | औहोयिकारः | औ विष्णौ हूयन्ते इति औहोयिनः विश्वेदेवाः |

| | | |
|---|---|---|
| ९. | हिङ्कार: | निश्चयज्ञानरूपत्वात् प्रजापतिः हिङ्कारः |
| १०. | स्वरः | स्वे विष्णौ जीवं रमयति इति स्वरो वायुः |
| ११. | याया | नित्यगतेर्वायुर्ययिः तद्गतत्वात् याया सरस्वती यात्रा प्राणेन नीयते इति वा याया |
| १२. | विराट् | विशेषेण राजते इति विराट् श्रीः |
| १३. | अनिरुक्तः | साकल्येन निर्वक्तुं अशक्यत्वात् अनिरुक्तो सम्यक् चरतीति समुचनामकश्च भगवान् |
| | हुपुकारः | आहूत एव पातीति । |

---

## अनुबन्धः – ५

## उपनिषत् सूक्तयः

१. ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद्धनम् । (ईश.)

२. कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः । (ईश)

३. श्रेयश्च प्रेयश्च मनुष्यमेतः तौ सम्परीत्य विविनक्ति धीरः ।
श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमान् वृणीते ॥
(कठ.)

४. नाविरतो दुश्चरितात् नाशान्तो नासमाहितः ।
नाशान्तमनसो वापि प्रज्ञानेनैनवमाप्नुयात् ॥ (कठ.)

५. यच्छेद्वाङ्मनसी प्राज्ञः तद्यच्छेद् ज्ञान आत्मनि ।
ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥ (कठ)

६. न वित्तेन तर्पणीयो मनुष्यः । (कठ.)

७. यस्मिन् द्यौः पृथिवी चान्तरिक्षं ओतं मनः सह प्राणैश्च सर्वैः ।

तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः ।
(मुण्डके)

८. सत्यमेव जयते नानृतं सत्येन पन्था विततो देवयानः ।
येनाक्रमन्ति ऋषयः ह्याप्तकामाः यत्र तत्सत्यस्य परमं निधानम् ॥
(मुण्डक)

९. कामान्यः कामयते मन्यमानः स कामाभिर्जायते तत्र तत्र ।
पर्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः ॥
(मुण्डके)

१०. न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।
हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति ।
(श्वेताश्वतर)

११. ऋतं च स्वाध्यायप्रवचने च । सत्यं च स्वाध्यायप्रवचने च ।
तपश्च स्वाध्यायप्रवचने च । दमश्च स्वाध्यायप्रवचने च
शमश्च स्वाध्यायप्रवचने च । (तैत्तिरीये)

१२. यान्यनवद्यानि कर्माणि । तानि सेवितव्यानि ।
नो इतराणि । यान्यस्माकं सुचरितानि ।
तानि त्वयोपास्यानि । नो इतराणि ॥ तैत्तिरीये

१३. वेदमनूच्याचार्योन्तेवासिनमनुशास्ति । सत्यं वद ।
धर्मं चर । स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं
धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः ॥ (तैत्तिरीय)

१४. युवा स्यात् साधु युवाध्यायकः । आशिष्टो धृढिष्ठो बलिष्ठः ।
तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । -तैत्तिरीये

१५. मातृदेवोभव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो
भव । -''-

१६. श्रद्धया देयम् । अश्रद्धयाऽदेयम् । श्रियादेयम् ।
ह्रियादेयम् । भियादेयम् । संविदा देयम् । -''-

१७. सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् ।
भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् ।
देवपितृकार्याभ्यां न प्रमदितव्यम् ।

१८. अन्नं न निंद्यात् । तद्व्रतम् । अन्नं न परिचक्षीत । तद्व्रतम् । अन्नं बहुकुर्वीत । तद्व्रतम् । न कञ्चन वसतौ प्रत्याचक्षीत । तद्व्रतम् ।

१९. आस्थामात्रामनन्तानां दुःखानामाकरं विदुः ।

२०. नाभिनन्दत्यसम्प्राप्तं प्राप्तं भुङ्क्ते यथेप्सितम् ।
यः स सौम्य समाचारः सन्तुष्ट इति कथ्यते ॥

२१. दाम्यत दत्त दयध्वमिति तदेतत्रयं शिक्षेत् दमं दानं दयामिति । (बृहदारण्यके)

२२. ओष्ठापिधाना न कुली दन्तैः परिवृता पविः ।
सर्वस्यै वाच ईशाना चारुमामिह वादयेत् ॥ (ऐतरेये)

२३. त्रिकर्मकृत्तरति जन्ममृत्यू । (काठके)

---

## अनुवन्धः – ६

## ब्रह्मसूत्रभाष्योदाहृतछान्दोग्यविषयवाक्यानि

| | अ.पा.अ.सू. |
|---|---|
| तत्वमसि (छा.उ.३.७) | १.१.४.८.२२ |
| अस्य लोकस्य का गतिः | १.१.६.१७ |
| स एष परोवरीयान् (छां.१.९) | १.१.७.२२ |

| | |
|---|---|
| अथ यदतः परः (छां.३.१३.७) | १.१.११.२५ |
| गायत्री वा इदं सर्वं (छां.३.१२.१) | १.१.११.२५ |
| गायति त्रायति च (३.१२.१) | १.१.११.२५ |
| त्रिपादस्यामृतं दिवि (३.१२.६) | १.१.११.२५ |
| सुवर्णं कोशं (३.११) | १.१.११.२६ |
| य एष आदित्ये पुरुषः (४.११) | १.२.४.१३ |
| य एषोऽन्तरक्षिणि (४.१५) | १.२.४.१३ |
| तद्यथा पुष्करपलाशः (४.१४) | १.२.४.१३ |
| तद्यदस्मिन् सर्पिः (४.१५) | १.२.४.१४ |
| प्राणो ब्रह्मकं ब्रह्म (४.१०) | १.२.४.१५ |
| स एनान् ब्रह्म गमयति (४.१५) | १.२.४.१६ |
| यस्त्वेतमेवं प्रादेशमात्रम् (५.१८.१) | १.२.७.२४ |
| वैश्वानरे तद्धुतं भवति (५.२४.४) | १.२.७.२६ |
| हृदयं गार्हपत्यः (५.१९.१) | १.२.७.२६ |
| तद्यद्भक्तं प्रथमम् (५.१९.१) | १.२.७.२६ |
| कोन आत्मा किं ब्रह्म (५.११.१) | १.२.७.२६ |
| मूर्धैव सुतेजाः (५.२८.२) | १.२.७.२६ |
| यो वै भूमा तत्सुखम् (७.२३) | १.३.२.८ |
| उत्क्रान्त प्राणान् (७.१५.३) | १.३.२.८ |
| सदेव सोम्येदमग्र (६.२.१) | १.३.४.१३ |
| बहुस्यां प्रजायेय (६.२.३) | १.३.४.१३ |
| नान्यदतोऽस्ति दृष्टा (५.८.११) | १.३.४.१३ |
| एतस्मिन् दहरे (८.१.२) | १.३.५.१४ |
| उभे अस्मिन् द्यावापृथिवी (८.१.३) | १.३.५.१४ |

| | |
|---|---|
| स एष सर्वेभ्यः पाप्मभ्यः (१.६.७) | १.३.५.१४ |
| अहरहर्गच्छन्त्यः (८.३.२) | १.३.५.१५ |
| सता सोम्य तदा सम्पन्नः (३.८.१) | १.३.५.१५ |
| अरश्चहवै ण्यश्च (८.५.३) | १.३.५.१५ |
| एष सेतुर्विधृतिः (८.४.१) | १.३.५.१६ |
| परंज्योतिरुपसम्पद्य (८.१२.३) | १.३.५.१८ |
| एष आत्मेति होवाच (४.१५.१) | १.३.५.१८ |
| स तत्र पर्येति (८.१२.३) | १.३.५.१९ |
| दहरं पुण्डरीकं (८.१.१) | १.३.५.२१ |
| एष मे आत्मा (३.१४.३) | १.३.५.२१ |
| वसूनामेवैको भूत्वा (३.६.२) | १.३.८.३१ |
| कम्वर एनमेतत्सन्तम् (४.१.३) | १.३.९.३४ |
| सह सञ्जिहान एव (४.१.५) | १.३.९.३४ |
| नाहमेतद्वेद भो (४.४) | १.३.९.३७ |
| नैतदब्राह्मणो विवक्तुम् (४.५) | १.३.९.३७ |
| तत्राकाशो वै नामरूपयोः (८.१४.१) | १.३.११.४१ |
| ते यदन्तरा तद्ब्रह्म (८.१४.१) | १.३.११.४१ |
| अथ यां जीवो जहाति (६.११.२) | १.४.५.१८ |
| यथा साम्यैकेन मृत्पिण्डेन (६.१.३.४) | १.४.५.१९ |
| असदेवेदमग्र आसीत् (६.२.१) | २.१.४.८ |
| सदेव सोम्येदमग्र आसीत् (६.२.१) | २.३.१.६ |
| ता अन्नमसृजन्त (६.२) | २.३.६.११ |
| तत्वमसि (३.७.७) | २.३.१४.२७ |
| सर्वं खल्विदं ब्रह्म (३.१४.१) | २.३.१४.२९ |

| | |
|---|---|
| तस्य तावदेव चिरम् (६.१४.२) | ४.१.८.१५ |
| यदेव विद्यया करोति (१.१.१०) | ४.१.८.१८ |
| तस्य यावन्न वाङ्मनसि (६.१५.१) | ४.२.१.१ |
| मनः प्राणे (६.१५.१) | ४.२.२.३ |
| आचार्यस्तु ते गतिं वक्ता (४.१४.१) | ४.२.९.१७ |
| स एनान् ब्रह्म गमयति (४.१५.६) | ४.३.५.६ |
| स एनान् ब्रह्मगमयति (४.१५.६) | ४.३.६.७ |
| परञ्ज्योतिरुपसम्पद्य (८.३.४) | ४.४.१.१ |
| एतं सेतुं तीर्त्वा (८.४.२) | ४.४.१.१ |
| स यदि पितृलोककामः (८.२.१) | ४.४.६.८ |
| इमं मानवमावर्तं (४.१५.६) | ४.४.९.२० |
| न च पुनरावर्तते (८.१५.१) | ४.४.११.२३ |

---

## अनुबन्धः – ७

## भीमगीतं इहसाम

**'यस्ते मन्यो' इत्यतो नारसिंहं सोमं तस्मै चाऽर्पयच्छोणिताख्यम् ।**
**युद्धाख्ययज्ञे सोमबुद्ध्याऽरिवक्ष इहेति साम्ना गदया विभिन्दन् ॥**

महाभारततात्पर्यनिर्णये युद्धप्रसङ्गे अयं श्लोकः प्रवृत्तः तस्यार्थस्तु- इहेति साम्ना । इहेति स्तोभाक्षरेण सह यत् साम गीयते तदिहेतिसाम । इह मद्धृदयगते नारायणे इदमर्पितमस्त्विति भावेन गीयमाने साम्नि इहेति स्तोभाक्षरं पठित्वा शोणिताख्यं सोमं नरसिंहायाऽर्पयदित्यर्थः । तथा दुःशासनवक्षसि स्थितस्य नृहर्यक्षस्येयं पूजाऽस्त्वित्यनुसन्धाय तद्वक्षो गदया विभिन्दन् इहेति स्तोभाक्षरमगासीदित्यर्थः । त इमे त्रयोदश स्तोभाः– हावु,

हायि, अथ, इह, ई, ऊ, ए, औहोयि, हिम्, स्वरः, याया, विराट्, हुप्– इति । तथाहि च्छान्दोगोपनिषदि– 'अयं वाव लोको हावुकारः वायुर्हायिकारः, चन्द्रमा अथकारः, आत्मेहकारः, अग्निरीकारः, आदित्य ऊकारः, निहव एकारः, विश्वेदेवा औहोयिकारः, प्रजापतिर्हिङ्कारः, प्राणः स्वरः, अन्नं याया, वाग् विराट्, अनिरुक्तस्त्रयोदशः स्तोभः सञ्चारो हुप्कारः (छा.उ.१.१३) इति । तत्र द्वावेव स्तोभौ केवलं विष्णुवचनौ इहकारो हुप्कारश्च । इहेति 'एष त आत्माऽन्तर्याम्यमृतः इत्युक्तमन्तर्यामिणं नारायणमाह । हुबिति सर्वगतम् । तथाहि भाष्ये माहात्म्यवचनम्–

'हूयतेऽत्राग्निहोत्रादिर्हावुकारस्त्वयं ततः ।
हेत्याश्चर्यवदायाति हेति वा सुखकृत्त्वतः ।
हायिकारस्ततो वायुरथेत्युक्तमनन्तरम् ।
आनन्तर्यात् प्रकाशस्य सूर्याच्चन्द्रस्त्वथेरितः ।
सर्वसामीप्यतो विष्णुरिहेति कथितः सदा ।
इन्धनादग्निरीकार ऊकारः सूर्य उच्छ्रितः ।
नितरामाह्वयन्त्येनमितीन्द्रो निहवः स्मृतः ।
एतीत्येकार एवासावौहोयीत्यखिलाः सुराः ।
उच्चत्वाद् विष्णुरुः प्रोक्तो हूयन्तेऽस्मिन् यतोऽखिलाः ।
मुक्तावौहोयिनस्तस्मात् सर्वे देवाः प्रकीर्तिताः ।
हीति निश्चय उद्दिष्टो निश्चयज्ञानतः सदा ।
ब्रह्मा हिङ्कार इत्युक्तो वायुः प्राणः शरीरगः ।
स्वे विष्णौ रमयत्येनं जीवं तस्मात् स्वरः स्मृतः ।
ययिर्नित्यः गतेर्वायुस्तदा याया सरस्वती ।
सैवान्नदेवता प्रोक्ता याऽत्त्रा प्राणेन नीयते ।
सर्ववागात्मिका या तु श्रीर्विशेषेण राजनात् ।

विराडुक्ताऽनिरुक्तस्तु व्याप्तो नारायणस्तु यः ।
आहूत एव पातीति हुपुकार इति कीर्तितः ।
हुबित्याक्रियते यस्माद्धुपुकारस्तज्जनार्दनः ।
अनिरुक्तस्त्ववाच्यत्वात् परमः पुरुषो हरिः' इति ॥

---

# अनुबन्धः – ८

## उपयुक्तग्रन्थसूची (Bibliography)


| ग्रन्थाः | प्रकाशनम् |
| --- | --- |
| सर्वमूलम् उपनिषत्प्रस्थानं | द्वैतवेदान्ताध्ययनप्रतिष्ठानम् |
| सर्वमूलम् उपनिषत्प्रस्थानं | व्यासमध्वसेवा प्रतिष्ठानम् |
| छान्दोग्योपनिषद्भाष्यम् | पूर्णप्रज्ञसंशोधन मन्दिरम्, २००४ |
| छान्दोग्योपनिषत्खण्डार्थः | पूर्णप्रज्ञविद्यापीठम्, १९८८ |
| ईशावास्योपनिषद्भाष्यम् | विश्वमध्वमहापरिषत् |
| तलवकारोपनिषद्भाष्यम् | -''- |
| कठोपनिषद्भाष्यम् | -''- |
| षट्प्रश्नोपनिषद्भाष्यम् | -''- |
| आथर्वणोपनिषद्भाष्यम् | -''- |
| माण्डूक्योपनिषद्भाष्यम् | -''- |
| तैत्तिरीयोपनिषद्भाष्यम् | -''- |
| ब्रह्मसूत्रभाष्यम् | द्वैतवेदान्ताध्ययनप्रतिष्ठानम् |
| -''- | व्यासमध्वसेवाप्रतिष्ठानम् |
| उपनिषद्भाष्यम् | पूर्णप्रज्ञसंशोधनमन्दिरम्, २००५ |
| महाभारततात्पर्यनिर्णयः | विश्वमध्वमहापरिषत् |

| | |
|---|---|
| सर्वमूलग्रन्थाः उपनिषत्प्रस्थानम् | अखिलभारतमाध्वमहामण्डल |
| महाभारततात्पर्यनिर्णयः | तत्वसंशोधनपरिषत् |
| छान्दोग्योपनिषद्भाष्यम् | शङ्कराचार्याः |
| -''- | रङ्गरामानुजाचार्याः |
| विष्णुतत्वनिर्णयः | पूर्णप्रज्ञसंशोधनमन्दिरम् २००० |
| श्रीमन्न्यायसुधा | श्रीसत्यप्रमोदतीर्थाः उत्तरादिमठः, |
| बेङ्गळूरु | |
| संस्कृतसाहित्येतिहासः | चौखम्भाप्रकाशनम्, वाराणसि |
| English Text | A History of Dvaita School of Vedanta and its Literature, Dr. B.N.K. Sharma, Motilal Banarasidas, 1981. |
| Kannada Text | संस्कृतसम्पद |
| द्वैतवेदान्तवाङ्मय हागू इतिहास | एम्.के. भारतीरमणाचार्य, १९८६ |

